अथ निर्भर्त्सितां तस्मादपि प्राप्तपरासकृत् | हठेन हर्तुं तां राज्ञा समादिश्यन्त सैनिकाः ||२५६||
तैर्गृहाग्रे कृताक्रन्दो निर्गत्यान्येन वर्त्मना | नागार्तो नागभवनं सजानिः प्राविशद्द्विजः ||२५७||
ताभ्यामभ्येत्य वृत्तान्ते ततस्तस्मिन्निवेदिते | क्रोधान्धः सरसस्तस्मादुज्जगाम फणीश्वरः ||२५८||
उद्गर्जज्जितजीमूतजनितध्वान्तसंततिः | स घोराशनिवर्षेण ददाह सपुरं नृपम् ||२५९||
260 दग्धप्राण्यङ्गविगलद्वसासृक्स्रोतवाहिनी | मयूरचन्द्रकाङ्केव वितस्ता समपद्यत ||२६०||
शरणाय प्रविष्टानां भगवच्चक्रधरान्तिकम् | मुहूर्तादिदहत्तत्र सहस्राणि शरीरिणाम् ||२६१||
मधुकैटभयोर्मेदः प्रागुर्वीमिव चक्रिणम् | दग्धानां प्राणिनां तद्वद्वसा सर्वाङ्गमस्पृशत् ||२६२||
स्वसा सुश्रवसो यान्ती रमण्याख्याद्गिरिश्वरात् | साहायकायाश्मराशीन्समादाय तदाययौ ||२६३||
सा योजनाधिके शेषे मार्गस्यारात्सहोदरम् | कृतकार्यं निशम्याश्मवर्षं ग्रामेषु तज्जहौ ||२६४||
265 योजनानि ततः षट् जाता ग्रामधरा खिला | सा रमण्याटवीत्यद्याप्यास्ते स्थूलशिलाबिला ||२६५||
घोरं जनक्षयं कृत्वा प्रातः सानुशयोऽप्यहिः | लोकापवादनिर्विण्णः स्थानमुत्सृज्य तद्ययौ ||२६६||
दुग्धाब्धिधवलं तेन सरो दूरगिरौ कृतम् | अमरेश्वरयात्रायां जनैरद्यापि दृश्यते ||२६७||
श्वशुरानुग्रहाज्जामीभूतस्यापि द्विजन्मनः | जामातृसर इत्यन्यत्तत्र च प्रथितं सरः ||२६८||
प्रजानां पालनव्याजाविःशङ्कक्षयकारिणः | अकस्मादन्तकाः केचित्संभवन्ति तथाविधाः ||२६९||
270 अद्यापि तत्पुरं दग्धं श्वभ्रीभूतं च तत्सरः | उपचक्रधरं दृष्ट्वा कथेयं स्मर्यते जनैः ||२७०||
राज्ञां[1] रागः क्रियारम्भे दोषः स्वल्पदृशां मते | ततस्तस्य तेन संवृत्तं यथाभूत्क्वापि कस्यचित् ||२७१||
सतीदैवतविप्राणामप्येकस्य प्रकोपतः | श्रुतो हि प्रतिकूलानां त्रैलोक्यस्यापि विभ्रमः ||२७२||
चत्वारिंशतमब्दान्स मासैरूनां त्रिभिः समाम् | भुवं भुक्त्वा क्षितिभृतां[1] दुर्नयेन क्षयं ययौ ||२७३||
अप्यल्पकालसंदृष्टप्राकाराट्टालमण्डलम् | तत्किंनरपुरं लेभे गन्धर्वनगरोपमाम् ||२७४||
275 एकस्तु तनयस्तस्य वैचित्र्यात्कर्मणां गतेः | स्वधात्र्या विजयक्षेत्रं नीतः प्राणैर्न तत्यजे ||२७५||
राजा सिद्धाभिधः सोऽथ तथा निःशेषितं जनम् | नवीचकार जलदो दावदग्धमिवाचलम् ||२७६||
इति वृत्तं महाश्चर्यं तस्य पित्र्यं महामतेः | संसारासारताज्ञाने प्राप पुण्योपदेशताम् ||२७७||
भोगयोगेन मालिन्यं नेतुं मध्यगतोऽपि सः | न शक्यते स्म पङ्केन प्रतिमेन्दुरिवामलः ||२७८||
दर्पज्वरोष्णभूपालमध्ये निर्व्याजतोषिताम् | सुधाद्युतिकलामौलिं तस्यैवोल्लाघतां ययौ ||२७९||
280 गणितं गुणिना तेन मणीस्तृणमिवोज्झता | खण्डेन्दुमण्डनार्चायां मण्डनत्वमखण्डितम् ||२८०||
राज्ञस्तस्यैव राजश्रीः परलोकानुगाभवत् | यस्यामयोजयन्मूर्तौ धर्मेणाव्यभिचारिणा ||२८१||
षष्टिमब्दान्प्रशास्योर्वीमाप्तानुचरान्वितः | आरुरोह सदेहोऽसौ लोकाञ्शशिशिखामणेः ||२८२||

२५६. [1]) A₂ gloss सख्या: भर्तुः.—[2]) A₂ gloss चन्द्रलेखां. २६२. [1]) A₂ सं तु यथा. २६३. [1]) A₂ gloss रमण्या नाम्नी. २६४. [1]) Thus A₂; A₁ °राज्यसोदरम्. २६५. [1]) A₂ gloss रमण्याटवी रमैआटू इति प्रसिद्धः.— [2]) A₁ originally °प्यास्थि, altered by later hand as above. G and R °प्यास्ति. २६७. [1]) A₂ adds the note अमरेश्वरयात्रायां माङ्गुरिशीर्षे नागः सुश्रवा इत्याख्यः सुश्रम् नाग इति भाषया प्रसिद्धः तस्यैवोपरि [निक]टस्थले जामा[त्र]नाग इति भाषया प्रसिद्धः स विशाखनामा ब्राह्मण एव नि:श्वशुरानुग्रहेण नागीभूतो नाग इत्यर्थः. The *aksharas* in brackets are effaced in A and have been supplied here from R. २६९. [1]) A G R निषङ्ग°.— [2]) [3]) A₂ glosses राजानः, मरणावसृजाः. २७१. [1]) A₂ राज्ञो.—[2]) Emended; A G, R क्रियजाम. २७३ [1]) A₂ gloss इन्द्र:. २७४. [1]) A₂ अत्यल्प°. २८१. [1]) Thus A₁; A₂ धर्मेण स्व°.

भूत्वा नरं समाश्रित्य प्रययुः शोचनीयताम् । तद्भूतं तु समालम्ब्य प्रभुं भुवनवन्द्यताम्[1] ॥२८३॥

वात्याश्रितः किल समाश्रयणीयलभ्यां निम्नां गतिं व्रजति सर्वजनार्चितां वा ।
गच्छत्यधस्तृणगुणः श्रितकूपयन्त्रः पुष्पाश्रयी सुरशिरोभुवि रूढिमेति ॥२८४॥

सिद्धः सिद्धः सदेहोयमिति घुष्टं सुरा दिवि । प्रायोपवेशात्तज्जन्माः पटहं सप्त वासरान् ॥२८५॥ 285

उत्पलाक्ष इति ख्यातिं पेशलाक्षतया गतः । तत्सूनुस्त्रिंशतं सार्धां वर्षाणामन्वशान्महीम् ॥२८६॥

तस्य सूनुर्हिरण्याक्षः स्वनामाङ्कं पुरं व्यधात् । क्ष्मां सप्तत्रिंशतिं[2] वर्षान्सप्त मासांश्च भुक्तवान् ॥२८७॥

हिरण्यकुल इत्यस्य हिरण्योत्सकृदात्मजः । षष्टिं षष्टिं वसुकुलस्तत्सूनुरभवत्समाः ॥२८८॥

अथ म्लेच्छगणाकीर्णे मण्डले चण्डचेष्टितः । तस्यात्मजोभून्मिहिरकुलः कालोपमो नृपः ॥२८९॥

दक्षिणां सान्तकामाशां स्पर्धया जेतुमुद्यता । यम्मिपादुत्तरहरिदमारान्यमिवान्तकम् ॥२९०॥ 290

सांनिध्यं यस्य सैन्यान्तर्हन्यमानाशनोत्सुकान्[1] । अजानन्गृध्रकाकादीनग्रामे धावतो जनाः ॥२९१॥

दिवारात्रं हतप्राणिसहस्रपरिवारितः । योभून्नृपालवेतालो विलासभवनेष्वपि ॥२९२॥

बालेषु करुणा स्त्रीषु घृणा वृद्धेषु गौरवम् । न बभूव नृशंसस्य यस्य घोराकृतेर्मतः ॥२९३॥

स जातु देवीं संवीतसिंहलांशुककञ्चुकाम् । हैमपादाङ्कितकुचां दृष्ट्वा जज्वाल मन्युना ॥२९४॥

सिंहलेषु नरेन्द्राङ्घ्रिमुद्राङ्कः क्रियते पटः । इति कञ्चुकिना पृष्टेनोक्तो यात्रामदात्ततः ॥२९५॥ 295

तत्सेनाकुम्भिदानाम्भोनिम्नगाकृतसंगमः । यमुनालिङ्गनप्रीतिं प्रपेदे दक्षिणार्णवः ॥२९६॥

स सिंहलेन्द्रेण समं संरम्भादुदपाटयत् । चिरेण चरणस्पृष्टप्रियालोकनजां रुषम्[1] ॥२९७॥

द्रुतं तत्सैन्यमालोक्य लङ्कासौधैर्निशाचराः । भूयोपि राघवोद्योगमाशङ्क्य प्रचकम्पिरे ॥२९८॥

स तत्रान्यं नृपं दत्त्वा तीव्रशक्तिरुपाहरत्[1] । पटं यमुषदेवाख्यं मार्तण्डप्रतिमाङ्कितम् ॥२९९॥

व्यावृत्य चोलकर्णाटलाटादींश्च नरेश्वरान् । सिन्धुरानिव गन्धेभो गन्धेनैव व्यदारयत् ॥३००॥ 300

तस्मिन्प्रयाते प्राग्रेभ्यः शशंसुस्तत्पराभवम् । गणशो नरनाथेभ्यस्त्रुटदट्टालमेखलाः ॥३०१॥

काश्मीरं द्वारमासाद्य[1] श्वभ्रभ्रष्टस्य दन्तिनः । श्रुत्वा स त्रासजं घोषं तोषरोमाञ्चितोभवत् ॥३०२॥

तदाकर्णनसंरम्भे सहर्षोथ विरुद्धधीः । शतमन्यद्गजेन्द्राणां हठेन निरलोठयत् ॥३०३॥

स्पर्शोङ्गानि यथा वार्यं कीर्तनं पापिनां तथा । संक्षेपेणातो नोक्ता तस्यान्यापि नृशंसता ॥३०४॥

को वेत्त्यद्भुतचेष्टानां[1] कृत्यं प्राकृतचेतसाम् । धर्मं सुकृतसंप्राप्तिहेतोः सोपि यदाददे ॥३०५॥ 305

श्रीनगर्यां हि दुर्बुद्धिर्विदधे मिहिरेश्वरम् । होलडायां[1] स मिहिरपुराख्यं पृथुपत्तनम् ॥३०६॥

अग्रहाराञ्जगृहिरे गान्धारा ब्राह्मणास्ततः । समानशीलास्तस्यैव ध्रुवं तेपि द्विजाधमाः ॥३०७॥

---

२८३. [1]) Thus corr. by $A_2$ from $A_1$ °वन्द्यताम्. २८५. [1]) Thus $A_2$; $A_1$ प्रौढोपवस्ताज°. २८६. [1]) Thus corr. by later hand from $A_1$ पेशलाक्षितया. २८७. [1]) $A_2$ gloss स्वनाम, with note स्वनामाङ्कपुरमणीरित्यपि पाठः.—[2]) A सप्तार्धि°. २९१. [1]) $A_2$ gloss हन्यमानानां लोकानां यदशनं । अदनं । तत्रोत्सुकाः. २९४. [1]) $A_2$ gloss सिंहलद्वीप. २९७. [1]) Thus corr. by $A_1$ from रुजम्. २९९. [1]) Thus corr. by $A_2$ from $A_1$ °शक्तिरपो°. ३०२. [1]) $A_2$ gloss तदारभ्य हस्तिवञ्च इति प्रसिद्धः प्रदेशः पर्वते येन आयातो मिहिरकुलः. ३०५. [1]) $A_2$ वेत्त्यद्भुत°. ३०६. [1]) Emended; A होलाडायां. Cf. vii. 1228. viii. 733. 1432 (C.). 2909 (C.). 3216 (C.).

मेघागमः फणिभुजां प्रथितान्धकारः प्रीणाति हंसममलो जलदात्ययश्च ।
प्रीतेः समानरुचितैव भवेन्निदानं दातुः प्रतिग्रहकृतश्च परस्परस्य ॥३०८॥
स वर्षसप्ततिं भुक्त्वा भुवं भूलोकभैरवः । भूरिरोगार्दितवपुः प्राविशज्जातवेदसम् ॥३०९॥
310 सोयं त्रिकोटिहा मुक्तो यः स्वात्मन्यपि निर्घृणः । देहत्यागेस्य गगनादुच्चचारेति भारती ॥३१०॥
इत्यूचुर्ये मते तेषां स एव परिहारदः । खण्डयन्नीतघृणतामग्रहारादिकर्मभिः ॥३११॥
आक्रान्ते दारदैर्भौट्टैर्म्लेच्छैरशुचिकर्मभिः । विनष्टधर्मे देशेस्मिन्पुण्याचारप्रवर्तनम् ॥३१२॥
आर्यदेश्यान्स संस्थाप्य व्यतनोद्दारुणं तपः । संकल्प्य स्ववपुर्दाहं प्रायश्चित्तक्रियां व्यधात् ॥३१३॥
अत एवाग्रहाराणां सहस्रं प्रत्यपादयत् । गान्धारदेशजातेभ्यो द्विजेभ्यो विजयेश्वरे ॥३१४॥
315 क्षुरखड्गासिधेन्वादिपूर्णैयःफलके तदा । वह्निप्रदीप्ते सहसा पर्यन्ते स्वां तनुं जहौ ॥३१५॥
इत्येतस्मिञ्जनाम्नाये केचिद्व्यभिचारिणि । प्राहुः पुरुषसिंहस्य क्रौर्यं तस्याविगर्हितम् ॥३१६॥ कुलकम् ॥
ये नागेन तथा क्षुब्धे नगरे प्राभवन्खशाः । तेषां नाशाय वृत्तान्तं पूर्वोक्तं जगदुः परे ॥३१७॥
अवतारयतस्तस्य चन्द्रकुल्याभिधां नदीम् । अशक्योन्मूलना मध्ये शिलाभूद्विघ्नकारिणी ॥३१८॥
ततः कृततपाः स्वप्ने देवैरुक्तः स भूपतिः । यक्षः शिलायां बलवान्ब्रह्मचार्यत्र तिष्ठति ॥३१९॥
320 साध्वी स्पृशति चेदेनां निरोद्धुं न स शक्नुयात् । ततोपरेद्युः स्वप्नोक्तं शिलायां तेन कारितम् ॥३२०॥
तासु तासु कुलस्त्रीषु व्यर्थयत्नास्वथाचलत् । चन्द्रवत्याख्यया स्पृष्टा कुलाल्या सा महाशिला ॥३२१॥
कोटित्रयं नरपतिः क्रुद्धस्तेनागसा ततः । सपतिभ्रातृपुत्राणामवधीत्कुलयोषिताम् ॥३२२॥
इयं चान्यमते ख्यातिः प्रथते तथ्यतः पुनः । अभव्या सनिमित्तापि प्राणिहिंसा गरीयसी ॥३२३॥
एवं क्षुद्रोपि यद्राजा संभूय न हतो जनैः । तत्कर्म कारयंस्तैस्तैर्दैवतैरेव रक्षितः ॥३२४॥
325 प्रजापुण्योदयैस्तीव्रैश्चिरात्तस्मिन्क्षयं गते । बकस्तत्प्रभवः पौरैः सदाचारोभ्यषिच्यत ॥३२५॥
तत्रापि पूर्वसंस्कारादुच्चैस्त्रासं दधे जनः । श्मशानविहिते लीलावेश्मनीव नृपास्पदे ॥३२६॥
अतिसंतापदाज्जातः स जनाह्लादकोभवत् । जलौघो जलदश्यामात्तपात्ययदिनादिव ॥३२७॥
लोकान्तरादिवायातं मेने धर्मं तदा जनः । अभयं च परावृत्तं प्रत्रासाद्दहनादिव ॥३२८॥
स बकेशं बकश्वभ्रे बकवत्यापगां तथा । कृत्वा पुरं परार्ध्यश्रीर्लवणोत्साभिधं व्यधात् ॥३२९॥
330 तत्र त्रिषष्टिर्वर्षाणां सत्रयोदशवासरा । अत्यवाह्यत भूपेन तेन पृथ्वीं प्रशासता ॥३३०॥
अथ योगेश्वरी काचिद्भट्टाख्या रजनीमुखे । कृत्वा कान्ताकृतिं काम्यामुपतस्थे विशां पतिम् ॥३३१॥
तया मनोहरैस्तैस्तैर्वचनैर्ग्लपितस्मृतिः । स यागोत्सवमाहात्म्यं द्रष्टुं हृष्टो न्यमन्त्र्यत ॥३३२॥
पुत्रपौत्रशतोपेतः प्रातस्तत्र ततो गतः । चक्रवर्ती तया निन्ये देवीचक्रोपहारताम् ॥३३३॥
कर्मणा तेन सिद्धाया व्योमाक्रमणसूचकम् । जानुमुद्राद्वयं तस्या दृषद्यद्यापि दृश्यते ॥३३४॥

---

३०८. [1]) Edd. add before this verse the following verses, not found in A G R: भगिनीवर्गसम्भोगनिर्लज्जाम्लेच्छचेष्टाः । स्नुषासङ्गतिसक्ताश्च दारदाः सन्ति पापिनः ॥ वसुभावैस्तथा भाषा भार्याविक्रयकारिणः । परोपभोगितास्तेषां निर्लज्जास्तर्हि योषितः ॥ — [2]) $A_2$ °त्रिनिषं. — [3]) Thus $A_2$; $A_1$ °भहहस्तथ. ३१०. [1]) Thus corr. by $A_2$ from $A_1$ न च. ३२९. [1]) Emended; A R G एकस्त°. ३२६. [1]) G उच्चात्रासं. ३३२. [1]) Thus corr. by $A_2$ from $A_1$ °हरैस्तैतैर्व°.

देवः शतकपालेशो मातृचक्रं शिला च सा । खेरीमठेषु तद्वार्तास्मृतिमद्यापि यच्छति ॥३३५॥ 335
देव्या कुलतरोः कन्दः क्षितिनन्दोवशेषितः । ततस्तस्य सुतस्त्रिंशद्वत्सरानन्वशान्महीम् ॥३३६॥
द्वापञ्चाशतमब्दान्क्ष्मां द्वौ च मासौ तदात्मजः । अपासीद्वसुनन्दाख्यः प्रख्यातस्मरशास्त्रकृत् ॥३३७॥
नरः षष्टिं तस्य सूनुस्तावतोक्षश्च तत्सुतः । वर्षानभूद्विभुर्ग्रामं योक्षवालमकारयत् ॥३३८॥
जुगोप गोपादित्योथ क्ष्मां सद्वीपां तदात्मजः । वर्णाश्रमप्रत्यवेक्षा[1]दर्शितादियुगोदयः ॥३३९॥
सखोलखागिकाहा[1]डिग्रामस्कन्दपुरा[2]भिधान् । शमाङ्गासा[3]संमुखांश्चाग्रहारान्यः प्रत्यपादयत् ॥३४०॥ 340
ज्येष्ठेश्वरं प्रतिष्ठाप्य गोपाद्रा[1]वार्यदेशजाः । गोपाग्रहारान्कृतिना येन स्वीकारिता द्विजाः ॥३४१॥
भूक्षीरवाटिकायां[1] यो निर्वास्य लशुनाशिनः । खासटायां[2] व्यधा[3]द्विप्रांश्चित्राचारविवर्जितान् ॥३४२॥
अन्यांश्चानीय देशेभ्यः पुण्येभ्यो वच्चिकादिषु[1] । पावनानग्रहारेषु ब्राह्मणान्स न्यरोपयत् ॥३४३॥
उत्तमो लोकपालोयमिति लक्ष्म प्रशास्तिषु । यः प्राप्तवान्विना यज्ञं यच्चक्षमे न पशुक्षयम् ॥३४४॥
सत्र्यह्नदिनां[1] वर्षषष्टिं पालयित्वा स मेदिनीम् । भोक्तुं पुण्यपरीपाकं लोकान्सुकृतिनामगात् ॥३४५॥ 345
गोकर्णस्तत्सुतः क्षोणीं गोकर्णेश्वरकृद्दधे । अष्टपञ्चाशतं वर्षांस्त्रिंशत्याह्नां विवर्जितान् ॥३४६॥
सूनुर्नरेन्द्रादित्योस्य खिङ्खिलान्याभिधोभवत् । भूतेश्वरप्रतिष्ठानामक्षयिण्याश्च[1] कारकः[2] ॥३४७॥
दिव्यानुग्रहभागुग्राभिधो यस्य गुरुर्व्यधात् । उग्रेशं मातृचक्रं च प्रभावोद्दामविग्रहः ॥३४८॥
भुक्त्वा षट्त्रिंशतं वर्षाञ्शतं चाह्नां विभुर्भुवः । स दैवैरनघांल्लोकानासदत्सुकृतैः कृती ॥३४९॥
युधिष्ठिराभिधानोभूदथ राजा तदात्मजः । यः सूक्ष्माक्षतया[1] लोकैः कथितोन्धयुधिष्ठिरः ॥३५०॥ 350
तेन क्रमागतं राज्यं सावधानेन शासता । अनुजग्मे मितं कालं पूर्वभूपालपद्धतिः ॥३५१॥
काले कियत्यपि ततो यात्यभाग्यवशादसौ । सिषेवे श्रीमदक्षीबो यत्किंचनविधायिताम् ॥३५२॥
नान्वग्रहीदनुग्राह्यान्न संजग्राह धीमतः । न प्रवृत्तोपचाराणां प्रागिवासीत्प्रियंकरः ॥३५३॥
दुर्विदग्धपर्षदा साकं निर्विशेषं सभाजितैः । परिजह्रे[1] स दुर्जातो जाततेजोवधैर्बुधैः ॥३५४॥
सर्वत्र समदृष्टित्वं गुणोयं खलु योगिनः । अकीर्तिहेतुः स महान्दोषस्तु पृथिवीपतेः ॥३५५॥ 355
नयद्भिर्गुणतां दोषान्दोषतां च गुणान्विटैः । स लुप्तप्रतिभश्चक्रे शनकैः स्त्रीजितोपमः ॥३५६॥
वाङ्मर्मच्छेदिनी दीर्घं नर्म शश्वत्कथा विटैः । अनीश्वरोचिता तस्य क्रीडापि भयदाभवत् ॥३५७॥
पुरो मिथ्या गुणग्राही परोक्षं दोषदर्शकः । असुस्थिरादरो भूभृत्सोभूद्द्वेष्योनुजीविनाम् ॥३५८॥
मनागनवधानेन स्खलतस्तस्य भूपतेः । इत्थं राज्यस्थितिरगादचिरेण विसूत्रताम् ॥३५९॥
उपेक्षितस्य निर्द्रोहै[1]र्यतन्ताजितात्मनः । अथ लब्धबलास्तस्य नाशाय द्रोहिमन्त्रिणः ॥३६०॥ 360

---

३३९. 1) Thus corr. by A3 from A1 प्रत्यवीक्षा°. ३४०. 1) A2 gloss आडेथाम्.—2) A2 gloss खन्दोर्.—3) A2 शमाङासा, with gloss छिमन् आसर. ३४१. 1) A2 gloss गोपकार् इति प्रसिद्धस्थले. ३४२. 1) A2 gloss भुक्षिवाट् इति भाषया प्रसिद्धस्थले.—2) A2 gloss खोदरथले.—3) Emended; A R व्यधात्रि°; G व्यधात्रि°. ३४३. 1) A2 gloss वच्चियमानादिषु. ३४५. 1) A3 सत्र्यमासां. ३४७. 1) Thus corr. from A1 °ण्याश्च by A2 which adds the glosses अविच्छिन्नजनतान्नप्रदायिनी धर्मशालेति च प्रसिद्धा, and अक्षयिण्या इति पार्वतीयदेशासौ कश्मीरोपकण्ठवर्तिनि अछयीण्वा इति प्रसिद्धाः वासु (A3 वस्यां) सततिनं गुरिश्राद्धभोजनं विधीयते. Of a third gloss by A2 which has been smeared over with ink, only the following can be read: सद्यापनं यज्ञमित्यक्षयि———.—2) Thus corr. by A3 from A1 कारकः. ३५०. 1) Thus A3; A1 सूक्ष्माक्षितया. ३५४. 1) Thus A3; A1 °जिह्रे. ३६०. 1) A2 gloss मंत्रिभिः.

प्रभोः संकोचिताशेषैश्वर्यर्द्धिर्निरवग्रहम् । राज्यं जिहीर्षवो भूपाश्चक्रिरे भूम्यनन्तराः ॥३६१॥
तदनुमानिताः सर्वे ते ते[1] नानादिगाश्रयाः । आसन्नाज्यामिषं प्राप्तुं श्येना इव ससंभ्रमाः ॥३६२॥
अथोत्पन्नभयो राजा न शशाक निजस्थितिम् । व्यवस्थापयितुं यन्त्र[1]च्युतां कारुः शिलामिव ॥३६३॥
चिरं क्षुण्णे क्षमाभर्तुस्तस्मिन्राज्ये विसंस्थुले । उपायोऽस्य स्थितेर्हेतुर्नैकः कथनं[1] पपथे ॥३६४॥
365 दृष्टदोषान्स्थितिं प्राप्तो[1] हन्यादस्मानसंशयम् । विचिन्त्येति न सामास्य जगृहुर्निजमन्त्रिणः ॥३६५॥
अथ निरुरुधुस्ते संनद्धा बलैर्नृपमन्दिरं व्यवहितजनाक्रन्दं भेरीरवैरतिभैरवैः ।
मदकरिघटाकेतुच्छायानिरुद्धरविप्रभा भवनवलभीः संतन्वन्तो दिवापि तमोवृताः ॥३६६॥
तैर्गन्तुं स्वभुवो निवारितरणैर्दत्तावकाशो[1] ततस्त्यक्तभीर्नगरान्तरात्स नृपतिस्तात्पर्यतो निर्ययौ ।
आजानेयरजोऽङ्कुराजलललनाप्रस्थानसंदर्शनक्षुभ्यत्पौरजनाकुलाजकणिकाकीर्णेन राजाध्वना ॥३६७॥
राज्याच्च्युतस्य बहुशः परिवाररामा[1]कोशादि तस्य रिपवो व्रजतोपजह्रुः[2] ।
सर्वाङ्गतो विगलितस्य[3] नगेन्द्रशृङ्गाद्दलीफलादि रभसादिव गण्डशैलाः ॥३६८॥
रम्यैः शैलपथैर्व्रजन्भ्रमवशाच्छायां श्रितः शाखिनामासीनप्रचलायितेन[1] सुमहद्दुःखं विसस्मार सः ।
दूरात्पामरपूत्कृतैः श्रुतिपथप्राप्तैः प्रबुद्धस्त्वभूद्दृष्टो निर्झरवारिभिः सह मनः[2]श्वभ्रे निमज्जन्निव ॥३६९॥
नानावीरुत्तृणपरिमलैरुग्रगन्धा वनोर्वीरम्भःक्षोभप्रतिहतशिलाः पिच्छिलाश्चाद्रिकुल्याः ।
370 क्रान्त्वा भ्रान्तैर्बिसकिसलयच्छायमुग्धाङ्गलेखैरभ्युत्सङ्गं[1] निहिततनुभिर्मूर्छितं तस्य दारैः ॥३७०॥
पर्यन्ताद्रि[1]तटाद्विलोक्य सुचिरं दूरीभवन्मण्डलं द्रागामन्त्रयितुं जहत्सु[2] नृपतेर्दारेषु पुष्पाञ्जलीन् ।
क्षोणीपृष्ठविकीर्णपक्षतिनमत्तुण्डं स्वनीडस्थितैः सावेगं गिरिकन्दरासु पततां वृन्दैरपि क्रन्दितम् ॥३७१॥
स्तनयुगतलन्यस्तमूर्धांशुकानां विकचलनविलोलं वीक्ष्य दूरात्स्वदेशम् ।
अवहत रुदतीनां मौलिविन्यस्तहस्तं पथि नृपवनितानाम्[1]अस्रुभिर्निर्झराम्भः[2] ॥३७२॥
प्रीतिस्थैर्यैरुचितवचनाक्षिप्तया शोकशान्त्या निर्व्याजाज्ञाग्रहणगुरुभिस्तैश्च तैश्चोपचारैः ।
तस्य स्नेहादुपगतवतो राज्यविभ्रंशदुःखं मन्दीचक्रुः स्वभुवि सुजना भूपतेर्भूमिपालाः ॥३७३॥

इति[1] काश्मीरिकमहामात्यश्रीचण्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां प्रथमस्तरङ्गः ॥
चतुर्दशाधिके[2] वर्षसहस्रे नव वासराः । मासाश्च विगता ह्यस्मिन्नेकविंशतिराजसु[3] ॥

---

३६२. [1]) $A_1$ had written च्च after ते ते; struck out. $A_2$ तदनुमापिता वैरिनृपा नाना°. ३६३. [1]) $A_2$ gloss यन्त्रवद् इति सेनायां कुद्दालो प्रसिद्धम्. ३६४. [1]) Thus corr. by $A_2$ from $A_1$ कस्य न. ३६५. [1]) Thus corr. by $A_2$ from $A_1$ प्रसान्ह°. ३६७. [1]) $A_2$ gloss धर्मद्वारे. ३६८. [1]) Thus corr. by $A_2$; $A_1$ °रामा..को°.—[2]) Thus corr. by $A_2$ from $A_1$ °जह्नुः—[3]) $A_2$ विचलितस्य. ३६९. [1]) G has *sec. manu* the *v. l.* आसीनः प्रचलायितेन.—[2]) Thus $A_2$; $A_3$ gives the *r. l.* महत् for मनः between the lines and another *v. l.* पुनः in margin. ३७०. [1]) $A_2$ अभ्युत्सङ्गं. ३७१. [1]) Thus $A_3$; $A_1$ पर्यस्ता°.—[2]) $A_3$ क्षिपत्सु. ३७२. [1]) $A_2$ बलमबलानां, with gloss अबलानां बलं कर्ष.—[2]) $A_2$ gloss कर्म. *Colophon.* [1]) $A_3$ adds before this the note [illegible] ३८ ॥ [illegible] ॥ ३७३ ॥.—[2]) $A_3$ चतुर्विंशा°.—[3]) Thus $A_3$; $A_1$ °जाविंशति रा°.

## ॥ द्वितीयस्तरङ्गः ॥

विहितमजगोशृङ्गाभ्यां[1] धनुर्घटितं यथा नरकरटिनोर्देहार्धाभ्यां गणं परिगृह्णतः[2] ।
विविधघटनावाल्लभ्यानां निधेरुचितां[3] विभोर्जयति ललनापुंभागाभ्यां शरीरविनिर्मितिः ॥१॥
भूयो राज्यार्जनोद्योगस्तेनात्यज्यत भूभुजा । जरसा शमिवाण्या च कर्णमूलमथाश्रया ॥२॥
अनयद्विनयोदात्तः समं स्वविषयेण तान् । विषयान्वशिनामग्र्यः स तान्पञ्चापि विस्मृतिम् ॥३॥
भावकार्ज्येच्छया दुर्गागलिकायां[1] स्वमन्त्रिभिः । कालेन स्थापितो बन्धुस्त्यभ्यधायि तु कैरपि ॥४॥
अथ प्रतापादित्याख्यस्तैरानीय दिगन्तरात् । विक्रमादित्यभूभर्तुर्ज्ञातिराज्येऽभ्यषिच्यत ॥५॥
शकारिर्विक्रमादित्य इति स[1] भ्रममाश्रितैः । अन्यैरत्रान्यथालेखि विसंवादि[2] कदर्थितम् ॥६॥
इदं स्वभेदविधुरं हर्षादीनां धराभुजाम् । कंचित्कालमभूद्भोज्यं ततः प्रभृति मण्डलम् ॥७॥
असपूर्वापि तेनोर्वी सपूर्वेव महीभुजा । लालिता हृदयज्ञेन पत्या नववधूरिव ॥८॥
भुक्त्वा द्वात्रिंशतं वर्षान्भुवं तस्मिन्दिवं गते । जलौकास्तत्सुतो भूमेर्भूषणं समपद्यत ॥९॥
पितुरेव समं कालं वृद्धिहेतोः स दिद्युते । विधुवत्पूर्णशीतांशुरिव शीतेतरार्चिषः ॥१०॥
अथ वाक्पुष्टया सार्धं देव्या दिव्यप्रभावया । भुवं तत्प्रभवो भुञ्जंस्तुञ्जीनोऽरञ्जयत्प्रजाः ॥११॥
दंपतिभ्यामियं ताभ्यामभूष्यत वसुंधरा । गङ्गामृगाङ्कखण्डाभ्यां जटाभूरिव धूर्जटेः ॥१२॥
मण्डलं साध्वधत्तां तौ नानावर्णमनोरमम् । शतह्रदापयोवाहौ माहेन्द्रमिव कार्मुकम् ॥१३॥
चक्राते च महाभागौ विभ्रमाभरणं भुवः । तुङ्गेश्वरं हरावासं कतिकाख्यं[1] च पत्तनम् ॥१४॥
कस्मिन्मडवराज्यान्तःस्थाने चण्डातपोज्ज्वले[1] । तत्प्रभावेण फलितं वृक्षैस्तत्क्षणरोपितैः ॥१५॥
नाट्यं सर्वजनप्रेक्ष्यं यश्चक्रे स महाकविः[1] । द्वैपायनमुनेरंशस्तत्काले चन्दकोऽभवत् ॥१६॥
तयोः प्रभावमाहात्म्यजिज्ञासार्थमिवोद्यता । प्रजासु दुःसहा जातु व्यापद्दैवी[1] व्यजृम्भत ॥१७॥
पाकोन्मुखशरच्छालिच्छन्नकेदारमण्डले । मासि भाद्रपदेऽकस्मात्पपात तुहिनं महत् ॥१८॥
तस्मिन्विश्वक्षयोद्युक्तकालाट्टहसितोपमे । न्यमज्जञ्छालयः साकं प्रजानां जीविताशया ॥१९॥
अथासीत्क्षुत्परिक्षामजनप्रेतकुलाकुलः । प्राकारो[1] निरयस्येव घोरो दुर्भिक्षविप्लवः ॥२०॥
पत्नीप्रीतिं सुतस्नेहं पितृदाक्षिण्यमातुरः । कुक्षिंभरिः क्षुदुत्क्षामो विसस्माराखिलो जनः ॥२१॥

---

१. [1]) Thus corr. by $A_2$ from $A_1$ °गोःभृङ्ग°.—[2]) Thus corr. by $A_2$ from $A_1$ प्रतिगृह्णतः.—[3]) $A_2$ gloss अभ्यस्ता. २. [1]) $A_2$ gloss विसैनिहितानां. ४. [1]) $A_2$ gloss कुनजयत्. ६. [1]) $A_2$ स इति भ्रम°; R G follow this reading and write °दित्य:.—[2]) $A_2$ विसंवादक°. १४. [1]) $A_2$ gloss कैकय. १५. [1]) $A_2$ °तपोत्करे. १६. [1]) Thus $A_2$, also R G; $A_1$ °कवेः. १७. [1]) $A_2$ gloss दैवैः कृतत्वाद्देवानां संबन्धिनी दैवी. २०. [1]) Thus $A_1$; altered by $A_2$ into प्रकारो.

क्षुत्पाणाद्व्यस्मरल्लज्जामभिमानं कुलोन्नतिम् । अशनाहंक्रियाग्रातो लोको[1] लक्ष्मीकटाक्षितः ॥२२॥
क्षामं कण्ठगतप्राणं याचमानं सुतं पिता । पुत्रो वा पितरं त्यक्त्वा चकार स्वस्य पोषणम् ॥२३॥
मांसस्थिशेषे बीभत्से स्वदेहेऽहंक्रियावताम् । अभूद्रोज्यार्थिनां युद्धं प्रेतानामिव देहिनाम् ॥२४॥
25 क्षताभिभाषी क्षुत्क्षामो घोरो दिक्ष्वक्षिणी क्षिपन् । एक एको जगज्जीवैरिचैव स्वात्मपोषणम् ॥२५॥
तस्मिन्महाभये घोरे प्राणिनामतिदुःसहे । ददृशे लोकनाथस्य तस्यैव करुणार्द्रता ॥२६॥
निवारितप्रतीहारः स रक्षौषधिशोभिना । दर्शनेनैव दीनानामलक्ष्मीक्रममच्छिनत् ॥२७॥
सपत्नीको निजैः कोशैः संचयैर्मन्त्रिणामपि । क्रीतान्नः स दिवारात्रं प्राणिनः समजीवयत् ॥२८॥
अटवीषु श्मशानेषु रथ्यास्ववसथेषु च । क्षुत्क्षामः क्ष्माभुजा तेन नहि कश्चिदुपेक्ष्यत[1] ॥२९॥
30 ततो निःशेषितधनः क्षीणान्नां वीक्ष्य मेदिनीम् । क्षपायामेकदा देवीमेवमूचे स[1] दुःखितः ॥३०॥
देव्यस्मदपचारेण ध्रुवं केनापि दुस्तरा । जाता निरपराधानां जनानां व्यापदीदृशी ॥३१॥
धिङ्मामधन्यं यस्याग्रे लोकोऽयं शोकपीडितः । पश्यन्नशरणामुर्वीमनुमात्रो विपद्यते ॥३२॥
प्रजा निःशरणा एता अन्योन्यं बान्धवोज्झिताः । अरक्षतो भयेभ्युष्मान्किं कार्यं जीवितेन मे ॥ ३३ ॥
यथा कथंचिल्लोकोऽयं दिनान्येतानि यत्नतः । मयातिवाहितः सर्वो न च कोऽपि व्यपद्यत ॥३४॥
35 अतिक्रान्तप्रभावेयं कालदौरात्म्यपीडिना । निर्दिक्चनाद्य संजाता पृथिवी गतगौरवा ॥३५॥
नदिमाः सर्वतो मग्ना दारुणे व्यसनार्णवे । उपायः कतमस्तावत्समुद्धर्तुं क्षमः प्रजाः ॥३६॥
निरालोको हि लोकोऽयं दुर्दिनग्रस्तभास्करः । कालरात्रिकुलैर्विभ्रकपरीत इव वर्तते ॥३७॥
हिमसंघातदुर्लङ्घ्यक्षितिभृद्रुद्धनिर्गमाः[1] । बद्धद्वारकुलायस्थखगवद्विवशा जनाः ॥३८॥
भूराश्च मतिमन्तश्च विद्यावन्तश्च जन्तवः । कालदौरात्म्यतः पश्य जाता निहतयोग्यताः ॥३९॥
आशाः काञ्चनपुष्पकुड्मलकुलच्छन्ना न काः क्ष्मातले सौजन्यापूतवर्षिभिस्तिलकितं सेऽर्थैर्न किं मण्डलम् ।
40 पन्थानः सुचिरोपचाररुचिरैर्व्योमा न कैः संस्तुतैस्तेषामत्र वसन्ति निहुतगुणाः कालेन ये[3] मोहिताः ॥४०॥
तदेव गलितोपायो जुहोमि ज्वलने तनुम् । ननु द्रष्टुं समर्थोऽस्मि प्रजानां नाशमीदृशम् ॥४१॥
धन्यास्ते पृथिवीपालाः सुखं ये निशि शेरते । पौरान्पुत्रानिव पुरः सर्वतो वीक्ष्य निर्वृतान् ॥४२॥
इत्युक्त्वा करुणाविष्टो मुखमाच्छाद्य वाससा । निपत्य तल्पे निःशब्दं[1] रुरोद पृथिवीपतिः ॥४३॥
निवातस्तिमितैर्दीपैरुद्ग्रीवैः कौतुकादिव । वीक्षमाणाथ तं देवी जगाद जगतीभुजम् ॥४४॥
45 राजन्प्रजानां कुकृतैः कोऽयं मतिविपर्ययः । येनेतर इव स्वैरमधीरोचितमीहसे ॥४५॥
यदसाध्यानि दुःखानि छेत्तुं न प्रभविष्णुता । तन्महीपाल महतां महत्त्वस्य किमङ्गनम् ॥४६॥
कः शक्रः कतमः स्रष्टा वराकः कतमो यमः । सत्यव्रतानां भूपानां कर्तुं शासनलङ्घनम् ॥४७॥
पत्यौ भक्तिर्व्रतं स्त्रीणामद्रोहो मन्त्रिणां व्रतम् । प्रजानुपालनेनन्यकर्मता भूभृतां व्रतम् ॥४८॥

---

२२. [1]) $A_1$ लोकोऽलक्ष्मी°. २९. [1]) Thus corr. by $A_2$ from $A_1$ उपेक्ष्यते. ३०. [1]) Thus corr. by $A_2$ from $A_1$ दु°. ३८. [1]) $A_2$ हिमसंपातदुर्लक्ष्यक्षिति°.—[2]) $A_2$ gloss नीडं. ४०. [1]) $A_2$ प्रचुरो°.—[2]) $A_2$ संस्तुतैरेषां°, with gloss एषां भूरमतिमद्वादीनाम् निहुतगुणाः ये भूराद्या अत्र अस्मिन्नेव देशे वसन्ति देशान्तरं न गच्छन्ति ते कालेन मोहिताः.—[3]) $A_2$ ते. ४३ [1]) Thus corr. by $A_2$ from $A_1$ °शङ्कं.

उचितं प्रतिमामध्ये क्व विपर्येति मद्वचः । प्रजापाल प्रजानां ते नास्त्येव सुकृतं भवम् ॥४९॥
इति संरम्भतः प्रोक्ते तथानुध्याय देवताः । प्रतिगेहं गतप्राणः कपोतनिवहोऽपतत् ॥५०॥ 50
प्रातस्तन्नृपतिर्वीक्ष्य व्यरंसीन्मरणोद्यमात् । प्रजाश्च प्रत्यहं प्राप्तैः कपोतैर्जीवितं दधुः ॥५१॥
वस्त्वन्तरं किमपि तत्साध्वी नूनं ससर्ज सा । जनताजीवितावाप्त्यै न कपोतास्तु तेऽभवन् ॥५२॥
तादृशां नहि निर्व्याजप्राणिकारुण्यशालिनाम् । हिंसया धर्मचर्यायाः शक्यं क्वापि कलङ्कनम् ॥५३॥
अभवन्निर्मलं व्योम दैवीकृत्यैः सह क्रमात् । साकं भूपालशोकेन दुर्भिक्षं च शमं ययौ ॥५४॥
सा भूतिविभवोद्यममहारं द्विजन्मनाम् । सती कतीमुषं चक्रे रामुषं चापकल्मषा ॥५५॥ 55
वर्षैः षट्त्रिंशता शान्ते पत्यौ विरहजो ज्वरः । तत्यजे ज्वलनज्वालानलिनप्रच्छदे तया ॥५६॥
सा यत्र शुचिचारित्रा विपन्नं पतिमन्वगात् । स्थानं जनैस्तद्वाक्पुष्टाटवीत्यद्यापि गद्यते ॥५७॥
चारुचारित्रया तत्र तया सत्रेऽवतारिते । नानापथागतानाथसार्थैरद्यापि भुज्यते ॥५८॥
आभ्यामभ्यधिकं कर्तुं शक्तिः कस्येति निश्चितम् । विचिन्त्यारोचकी धाता नापत्यं निर्ममे तयोः ॥५९॥
वेधाः परां धुरमुपैति परीक्षकाणामिक्षोः फलप्रजननेन कृतश्रमो यः ।
विस्मारितोऽङ्कुरसुधारसयोग्यतां तत्तस्मादुदेत्य किमिवाभ्यधिकं विदध्यात् ॥६०॥ 60
दीर्घदुर्दिननष्टार्कं राष्ट्रमात्मापचारतः । ज्ञात्वा राज्यमिसाहेहं सा चकारेति केचन ॥६१॥
ततोऽन्यकुलजो राजा विजयोऽष्टावभूत्समाः । पत्तनेन परीतं यश्चकार विजयेश्वरम् ॥६२॥
सुतो महीमहेन्द्रस्य जयेन्द्रस्तस्य भूपतेः । क्ष्मामाजानुभुजो राजा बुभोजाथ पृथुप्रथः ॥६३॥
अलोलकीर्तिकल्लोलदुकूलवलनोज्ज्वलाम् । बभार यद्भुजस्तम्भो जयश्रीसालभञ्जिकाम् ॥६४॥
तस्याभूदद्भुतोदन्तभवभक्तिविभूषितः । राज्ञः संधिमतिर्नाम मन्त्री मतिमतां वरः ॥६५॥ 65
नास्त्युपायः स संसारे कोऽपि योऽपोहितुं क्षमः । भूपालमत्सरकारिणामेषां चपलकर्णताम् ॥६६॥
अत्यद्भुतमतिः शङ्क्यः सोऽयमुक्त्वेति यद्विटैः । तस्मिन्धीसचिवे द्वेषस्तेनाभाव्यत भूभुजा ॥६७॥ युग्मम् ॥
निवारितप्रवेशोऽथ सकोपस्तमहेतुकम् । निनाय हृतसर्वस्वं यावदायुर्दरिद्रताम् ॥६८॥
तस्य भूपतिविद्वेषग्रीष्मोष्मपरिशोषिणः । आस्थायां राजपुरुषा वार्तयापि न चक्रिरे ॥६९॥
गिरं गभीरो गृह्णाति क्ष्माभृद्यावत्तदग्रगाः । उक्तानुवादिनस्तावत्तद्वाक्यं प्रतिरवा इव ॥७०॥ 70
स तु राजविरुद्धत्वदारिद्र्याभ्यां न विव्यथे । गतप्रत्यूहया प्रीतः प्राप्तया हरसेवया ॥७१॥
अथ भाव्यर्थमाहात्म्यात्प्रथमे प्रतिमन्दिरम् । राज्यं संधिमतेर्भावीत्यश्रुतापि सरस्वती ॥७२॥
नाचोदिता वाक्चरतीत्याप्तेभ्यः श्रुतवान्नृपः । ततः संभूतसंत्रासः कारावेश्मनि तं न्यधात् ॥७३॥

---

५०. ¹) $A_3$ देवा. ५२. ¹) $A_3$ पतन. ५५. ¹) $A_2$ gloss कैमोह.—²) $A_2$ gloss रामोह्. ६०. ¹) Thus $A_1$; $A_3$ योग्यतात्तत्; G योग्यतातात्. explained by योग्यतयासौ गृहीत: and subsequently corrected into योग्यता तु.—²) $A_2$ gloss उत्पादयित्वा. ६४. ¹) G आलोल°.—²) Thus corr. by $A_2$ from $A_1$ °कीर्ति°.—³) $A_2$ gloss पुत्तलिकाम्. ६५. ¹) $A_2$ °दन्तो. ६८. ¹) $A_2$ कोपस्तम्. ७२. ¹) Thus corr. by $A_2$ from $A_1$ नवम°; $A_2$ had explained in margin the original reading by a note which has been struck out: राज्यं सन्धिमतो (sic) भावीत्यश्रुतापि सरस्वती एव नवमन्दिरं प्रति सन्धिमतेर्वैराग्यस्य विषमपूर्वकृत्यपरिपोषकरूपत्वात्स्वप्नमन्दिरत्वं तस्माच्छ्रुतवाक् अवगमशुद्धिस्वार्थः येन च तदुपरि राजापीव क्रूरचेष्टोऽभूदिति भावः. ७३. ¹) Thus corr. by $A_2$ from $A_1$ सद्भूत°.—²) Thus corr. by $A_2$ from $A_1$ न्यधात्.

तत्र तस्योमनिगडैः पीडिताङ्गैर्विमुच्यतः । पूर्णोऽभूद्दशमो वर्षो भूपतेश्चायुषोऽवधिः ॥७४॥

75 निष्पुत्रः स महीपालो मुमूर्षुर्दाहमादधे । रोगोत्थया पीडया च चिन्तया च तदीयया ॥७५॥

ऊष्मायमाणो विद्वेषवह्निना ज्वलतानिशम् । न विना तद्वधं मेने भवितव्यप्रतिक्रियाम् ॥७६॥

आश्चर्यस्यायुधाः[1] कुर्युरुपायं स्थगनाय यम् । स एवापावृतं द्वारं श्रेयं दैवेन कल्पितम् ॥७७॥

दग्धाङ्गारकदम्बके विलुठतः स्तोकोन्मिषत्तेजसो वेधा वह्निकणस्य शक्तिमतुलामाधातुकामो हठात् ।

तन्निर्वापणमिच्छतः प्रतनुते पुंसः समीपस्थिते[1] संतापद्रुतभूरिसर्पिषि घटे पानीयकुम्भभ्रमम् ॥७८॥

अथ राजाज्ञया क्रूरैर्वधकर्माधिकारिभिः । निशि संधिमतिः शूले समारोप्य विपादितः ॥७९॥

80 प्रोतशूले मृते तस्मिञ्शोकशङ्कुर्महीपतेः । निरगाद्रोगभग्नस्य पूर्वं पश्चात्तु जीवितम् ॥८०॥

सप्तविंशतिवर्षेषु यातेष्वस्मिंश्चिरन्वये । प्रशान्तभूमिपालाभूत्कतिचिद्दिवसानि भूः ॥८१॥

अथ संधिमतिं बुद्ध्वा तथा व्यापादितं गुरोः । ईशानाख्यस्य हृदयं विवशं वशिनोऽप्यभूत् ॥८२॥

शिरीष इव संसारे सुखोच्छेदो मनीषिणाम् । हन्तानृशंस्यं तत्कृत्स्नमिवैकमत्राशिष्यते ॥८३॥

स श्मशानभुवं प्रायादनायस्येव शुष्यतः । कर्तुं विनायिनस्तस्य स्वोचितामन्त्यसत्क्रियाम् ॥८४॥

85 तं चास्थिशेषमद्राक्षीत्कृष्यमाणं बलाद्वृकैः । शूलमूलावबद्धास्थिखण्डावष्टम्भनिश्चलम् ॥८५॥

समीरणसमाकीर्णमुण्डरन्ध्रायनिर्गतैः[1] । ध्वनितैरनुशोचन्तमिवावस्थां तथाविधाम् ॥८६॥

हा वत्स द्रष्टुमीदृक्के जीवाम्यहमिति वादिना । तस्याकृष्यत शूलान्तःप्रोतं तेनाथ कीकसम् ॥८७॥

वेष्टिताङ्गैः शिरःशीर्णैस्तस्कन्धैर्धूलिधूसरैः । अनैषीत्तं स कङ्कालं वारयन्भषतो वृकान् ॥८८॥

उचितां सत्क्रियां कर्तुं ततस्तस्य समुद्यतः । भाले त्रिधातृलिखितं श्लोकमेतमवाचयत् ॥८९॥

90 यावज्जीवं दरिद्रत्वं दश वर्षाणि बन्धनम् । शूलस्य पृष्ठे मरणं पुना राज्यं भविष्यति ॥९०॥[1]

पादत्रयस्य दृष्टार्थः[1] श्लोकस्यासीत्स योगवित् । द्रष्टव्ये तुर्य[2]पादार्थ[3]प्रत्यये कौतुकान्वितः ॥९१॥

अचिन्तयच्च संभ्रान्तः कथमेतद्भविष्यति । उवाच च विधेः शक्तिमचिन्त्यां कलयंश्चिरम्[1] ॥९२॥

तत्तत्कर्मव्यतिकरकृतः पारतन्त्र्यानुरोधात्सज्ज्नाः सर्वे व्यवसितहठोन्मूलनाय प्रयत्नात् ।

चित्रं तत्राप्युदयति विधेः शक्तिरत्यद्भुतेयं यन्माहात्म्याद्विविधघटनासिद्धयो निर्निरोधाः ॥९३॥

मणिपूरपुरे पार्थं निहतं समजीवयत् । फणिकन्याप्रभावेण सर्वाश्चर्यनिधिर्विधिः ॥९४॥

95 द्रोणपुत्रास्त्रनिर्दग्धं मातुर्गर्भे परीक्षितम् । जीवयन्कृष्णमाहात्म्याद्धाता धुर्योऽधिकारिणाम् ॥९५॥

कथं भस्मीकृतं दैत्यैर्नागांस्तार्क्ष्येण भक्षितान् । पुनर्जीवयितुं को वा दैवादन्यः प्रगल्भते ॥९६॥

इत्युक्त्वा भाविनोऽर्थस्य द्रष्टुं सिद्धिं समुद्यतः । तत्रैव बद्धवसतिः कङ्कालं स ररक्ष तम् ॥९७॥

अथार्धरात्रे निर्निद्रस्तथैवाद्भुतचिन्तया । धूपाधिवासमीशानो प्रातवान्दिव्यमेकदा ॥९८॥

उच्चण्डलाडनादण्डोद्घृष्टघण्टौघटांकृतैः[1] । चण्डैर्डमरुनिर्घोषैर्घर्घरं श्रुतवान्ध्वनिम्[2] ॥९९॥

---

७७. [1]) Thus corr. by later hand from $A_1$ °र्थस्य बुधाः. ७८. [1]) Another hand alters this to °स्थितेः. ८६. [1]) $A_2$ °समापूर्णमु° with gloss शिरः over मुण्ड. ९०. [1]) Thus $A_1$; $A_2$ पुनराज्यं. ९१. [1]) Thus corr. by later hand from $A_1$ °दृष्टार्थे.—[2]) $A_2$ gloss चतुर्थ —[3]) Thus corr. by later hand from $A_1$ °पादार्थे. ९२. [1]) Thus corr. by $A_2$ from $A_1$ कार्यंते°. ९९. [1]) $A_2$ gloss लाडना अन्तर्गता शलाका आण्डु इति भाषया.—[2]) $A_2$ °डमरुघोषैश्च.

उद्घाटिततमोरिः[1] स ततः पितृवनावनौ । ददर्श योगिनीस्तेजःपरिवेषान्तरस्थिताः ॥१००॥ 100
तासां संभ्रममालक्ष्य कङ्कालं चापवाहितम् । ईशानस्तां श्मशानोर्वीं धृतासिश्चकितो ययौ ॥१०१॥
अथापश्यत्तरुच्छन्नः शायितं मण्डलान्तरे । संधीयमानसर्वाङ्गं कङ्कालं योगिनीगणैः ॥१०२॥
चक्रेश्वरसंभोगवाञ्छा मद्यपदेवताः । वीरालाभात्समाविश्य कङ्कालं तमपाहरन् ॥१०३॥
एकमेकं स्वमङ्गं च विनिधाय क्षणादथ । कुतो[1]प्यानीय पुंलक्ष्म[2] पूर्णाङ्गं तं प्रचक्रिरे ॥१०४॥
अथ पुर्यष्टकं भ्राम्यदनाक्रान्तान्यविग्रहम् । योगेनाकृष्य योगेश्यस्तत्र संधिमतेर्न्यधुः ॥१०५॥ 105
ततः सुप्तोत्थित इव प्रत्तदिव्यविलेपनः । समभुज्यत ताभिः स यथेच्छं चक्रनायकः ॥१०६॥
ईशानस्तस्य देवीनां वितीर्णाङ्गाहतिं पुनः । क्षपायां क्षीयमाणायां चकितः पर्यशङ्कत ॥१०७॥
तद्वस्त्ररक्षया धीरः स च तत्स्थानमाययौ । तत्र योगेश्वरीचक्रं क्षिप्रमन्तरधीयत ॥१०८॥
अथाश्रूयत वाक्तासां माभूदीशान भीस्तव । नास्त्यक्रूराभिरस्माकं वृते चास्मिन्न वञ्चना ॥१०९॥
अस्मद्वराद्दिव्यवपुःसंधितः संधिमानसौ । आर्यत्वादार्यराजश्च ख्यातो भुवि भविष्यति ॥११०॥ 110
ततो दिव्याम्बरः स्रग्वी दिव्यभूषणभूषितः । ववन्दे संधिमान्प्रह्वः प्राप्तपूर्वस्मृतिर्गुरुम् ॥१११॥
ईशानोऽपि तमालिङ्ग्य स्वप्नेष्वपि सुदुर्लभम् । भूमिकामाललम्बे कामिति को वक्तुमर्हति ॥११२॥
असारं च विचित्रं च संसारं ध्यायतोर्मिथः । विवेकविशदा तत्र प्रावर्तत तयोः कथा ॥११३॥
अथ वार्तां विदित्वेमां कुतोऽपि नगरौकसः । सबालवृद्धाः सामात्यास्तमुद्देशमाययुः ॥११४॥
पूर्वाकृतिविसंवादाद्भ्रमो नायं स इत्यथ । तैर्नाच्छिद्यत संवादि निखिलान्पृच्छता वचः ॥११५॥ 115
अथैनं शासितुं राष्ट्रं पौराणामपराजकम् । सोऽन्वमन्यत कृच्छ्रेण निःस्पृहः शासनाद्गुरोः ॥११६॥
प्रापय्योपवनोपान्तं तं दिव्याकृतिशोभिनम् । सतूर्यं स्नापयामासुरभिषेकाम्बुभिर्द्विजाः ॥११७॥
नवराजोचिताचारे न स शिक्षामपैक्षत । दृष्टकर्मा समस्तास्तु निस्तुषाः प्रक्रिया व्यधात् ॥११८॥
स राजोचितनेपथ्यः पौराशीर्घोषशोभिनीम् । सौधोन्मिषल्लाजवर्षी ससैन्यः प्राविशत्पुरीम् ॥११९॥
तस्मिन्विरजसि प्राज्यमाक्रामति नृपासनम् । आचक्राम प्रजा व्यापन्न दैवी न च मानुषी ॥१२०॥ 120
अहरन्हृदयं तस्य शृङ्गाराहितविभ्रमाः । नितम्बिन्यो वनभुवः शमिनो[2] न तु योषितः ॥१२१॥
वनप्रसूनसंपर्कपुण्यगन्धैस्तपस्विनाम् । कर्पूरधूपसुरभिः करैः स्पृष्टः स पिप्रिये ॥१२२॥
भूतेशवर्धमानेशविजयेशानपश्यतः । नियमो राजकार्येषु तस्याभूत्प्रतिवासरम् ॥१२३॥
हरायतनसोपानक्षालनाम्भःकणाङ्कितैः । संस्पृष्टः पवनैः सोऽभूदानन्दास्पन्दविग्रहः ॥१२४॥
पूर्वपूजापनयने निराडम्बरसुन्दरः । तेनैव द्रष्टुमज्ञायि स्नापितो विजयेश्वरः ॥१२५॥ 125
लिङ्गपीठलुठत्स्नानकुम्भाम्भःक्षोभभूर्ध्वनिः । शयानस्याप्यभूत्तस्य वल्लभो वल्लकीद्विषः ॥१२६॥

---

१००. [1]) A₂ gloss तमोरिः चाह इति भाषया. १०३. [1]) Thus corr. by A₂ from A₁ मध्यमदे°; A₂ in margin मद्यमदेन ताः इत्य-न्यत्रदर्शे.—[2]) Thus corr. by A₂ from A₁ समुपाहरन्. १०४. [1]) Thus corr. by later hand from A₁ ततो.—[2]) Thus corr. by A₂ from A₁ पुंलिङ्ग°. १०५. [1]) Thus corr. by A₁ from भ्राम्यन्नना°.—[2]) A₃ योगिन्यः. १०६. [1]) स supplied by A₂. १०७. [1]) Thus corr. by A₂ from A₁ ईशानतस्य. ११०. [1]) A₂ राजा. ११९. [1]) Thus corr. by A₂ from A₁ ससैन्यां. १२१. [1]) A₂ gloss शृङ्गेषु अपहितः न त्यक्तः वीनां पक्षिणां भ्रमः भ्रमणं याभिः ताः.—[2]) A₂ gloss शान्तस्य. १२५. [1]) Thus corr. by A₂ from A₁ विजय°.

तापसैर्भस्मरुद्राक्षजटाजूटाङ्कितैर्बभौ । तस्य माहेश्वरी पर्षदिव भूमिपतेः सभा ॥१२७॥
शिवलिङ्गसहस्रस्य प्रतिष्ठाकर्मणि प्रभोः । प्रतिज्ञा प्रत्यहं तस्य नाभूद्विघटिता क्वचित् ॥१२८॥
प्रमादादेकनिष्पत्तौ शिलामुत्कीर्य कल्पिता । सहस्रलिङ्गी तद्भृत्यैः सर्वतोद्यापि दृश्यते ॥१२९॥
130 तासु तासु स वापीषु लिङ्गव्याजादरोपयत् । स्वपुण्यपुण्डरीकाणां जन्मनेक्षपरंपराम्[1] ॥१३०॥
स्थाने स्थाने जलान्तश्च बहुसंख्यैर्निवेशितैः । अनयन्नर्मदाभङ्गिं शिवलिङ्गैस्तरङ्गिणीः ॥१३१॥
प्रतिलिङ्गं महाग्रामाः प्रत्यपाद्यन्त तेन ये । पर्षदामद्य तद्भोगः कालेनाप्यविमानतः ॥१३२॥
अकरोत्स महाहर्म्यैर्महालिङ्गैर्महावृषैः । महात्रिशूलैर्महतीं महामाहेश्वरो महीम् ॥१३३॥
कृत्वा संधीश्वरं देहसंधानपितृकानने । ईशानस्य गुरोर्नाम्ना व्यधादीशेश्वरं[1][2] हरम् ॥१३४॥
135 भेडां च भीमादेवीं च देशांश्चान्यान्पदे पदे । स मठप्रतिमालिङ्गैर्हर्म्यैर्निन्ये महार्घताम् ॥१३५॥
स्वयंभूभिश्च तीर्थैश्च पूतं भक्तिविभूषितः[1] । स एव भोक्तुमशासीत्प्राज्ञः[2] कश्मीर[3]मण्डलम् ॥१३६॥
जातस्य निर्झराम्भोभिः पुष्पलिङ्गार्चनोत्सवे । राज्ञस्तस्य वनोर्वीषु मासः पञ्चाङ्गो ययौ ॥१३७॥
स चातिरम्यः काश्मीरे ग्रीष्मस्त्रिदिवदुर्लभः । हिमलिङ्गार्चनैः प्रायाद्वनान्तेषु कृतायताम् ॥१३८॥
फुल्लाम्बुजषण्डरुद्धाशाः प्राप्य पुष्करिणीतटीः । लक्ष्मीसखः स खण्डेन्दुचूडध्यानपरोभवत्[1] ॥१३९॥
140 नीलोत्पलवतीर्वापीरगस्त्योदयनिर्विषाः । अवगाह्य हरार्चाभिः शरदं निर्विवेश सः ॥१४०॥
सार्धं तपोधनैस्तैस्तैर्भजतो जागरांस्तत्रान् । तस्याभुवन्भुवो भर्तुरमोघा माघरात्रयः ॥१४१॥
अत्यद्भुतं राज्यलाभमित्थं सफलयन्कृती । पञ्चाशतं त्रिवर्षोनामत्यक्रामत्स वत्सरान् ॥१४२॥
शमव्यसनिनस्तस्य राज्यकार्याण्यपश्यतः । तस्मिन्काले प्रकृतयो विरागं प्रतिपेदिरे ॥१४३॥
अन्वैष्यत नृपस्ताभिः कश्चिद्राज्याय शुभ्रुवे । राजपुत्रो जिगीषुश्च श्रीमान्यौधिष्ठिरे कुले ॥१४४॥
145 जुगोप गोपादित्याख्यं कश्मीरेन्द्रजिगीषया । युधिष्ठिरप्रपौत्रं[1] हि गान्धाराधिपतिस्तदा ॥१४५॥
वसन्नप्राप्त[1]साम्राज्यः स तत्र तनयं क्रमात् । अवाप लक्षणैर्दिव्यैरमोघं मेघवाहनम् ॥१४६॥
स तत्र पितुरादेशाद्वैष्णवान्वयजन्मनः । राज्ञः प्राग्ज्योतिषेन्द्रस्य ययौ कन्यास्वयंवरे ॥१४७॥
तत्र तं वारुणं छत्रं छायया राजसंनिधौ । भेजे वरस्रजा राजकन्यका चामृतप्रभा ॥१४८॥
तेन तस्य निमित्तेन वृद्धिमागामिनीं जनाः । अजानन्नम्बुवाहस्य पाश्चात्येनेव वायुना ॥१४९॥
150 राज्ञा हि नरकेणैतद्वरुणादुष्णवारणम् । आनीतमकरोच्छायां न विना चक्रवर्तिनम् ॥१५०॥
तमन्तिकं पितुः प्राप्तं पत्न्या लक्ष्म्या च संश्रितम् । श्रुत्वा निमन्त्रयामासुर्मन्त्रिणो वंशयोग्यया ॥१५१॥
अथार्यराजो विज्ञाय स्वराज्यं भेदजर्जरम् । प्रतिनके न शक्तोपि तस्थौ तु त्यक्तुमुत्सुकः ॥१५२॥
अचिन्तयच्च सत्यं मे संप्रीतो भूतभावनः । सिद्धिविधानमुन्दीर्घानपाकर्तुं समुद्यतः ॥१५३॥
कृत्ये बहुनि निष्पाद्ये प्रमात्कौसीद्यमाश्रयन्[1] । प्रावृषीवाध्वगो दिष्ट्या मोहितोस्मि न निद्रया ॥१५४॥
155 स्वकाले[1] त्यजता लक्ष्मीं विरक्तां[2] बन्धकीमिव । हठनिर्वासनक्रीडा दिष्ट्या नासादिता मया ॥१५५॥

---

१३०. [1]) Thus corr. by $A_2$ from $A_1$ °पुण्डरीकाक्षज°. १३४. [1]) The *aksharas* श्वरं supplied by $A_2$ in space left by $A_1$.— [2]) $A_2$ gloss ईशभारु इति प्रसिद्धस्थले. १३६. [1]) $A_2$ °विभूषणः.—[2]) Thus $A_3$; $A_1$ प्राज्ञः.—[3]) Thus corr. by later hand from $A_1$ काश्मीर°. १३९. [1]) Thus corr. by later hand from $A_1$ चूडाध्या°. १४५. [1]) Thus corr. by $A_1$ from °रप्रपौत्रः. १४६ [1]) Thus $A_2$; $A_1$ वसत्प्रापास्तसा°. १५०. [1]) $A_2$ कृपा. १५४. [1]) $A_2$ glosses आलस्यम् and न कर्म कौसीद्य.—[2]) Thus corr. by $A_2$ from $A_1$ °श्रयम्. १५५. [1]) Thus $A_1$; $A_2$ स्वकुले.—[2]) Thus corr. by $A_2$ from $A_1$ सरक्ताम्.

शैलूषस्येव मे राज्यरङ्गेस्मिन्वल्गतश्चिरम् । निर्व्यूढमपि वैरस्य दिष्ट्या न प्रेक्षका गताः ॥१५६॥
दिष्ट्या सदैव वैमुख्यमुच्चैरुद्घोषयद्भिभयः । त्यागक्षणे न भीतोस्मि विकत्थन इवाहवे ॥१५७॥
इति संचिन्तयन्नन्तः सर्वत्यागोन्मुखो नृपः । मनोराज्यानि कुर्वाणो दरिद्र इव पिप्रिये ॥१५८॥
अन्येद्युः प्रकृतीः सर्वाः संनिपात्य सभान्तरे । ताभ्यः प्रत्यर्पयन्न्यासमिव राज्यं सुरक्षितम् ॥१५९॥
उज्झितं स्वेच्छया तस्य[1] प्रयत्नेनापि नाशकत् । तं स्वीकारयितुं कश्चित्फणीन्द्रमिव कञ्चुकम् ॥१६०॥ 160
अर्चालिङ्गमुपादाय सोथ प्रायादुदङ्मुखः । धौतवासा निरुष्णीषः पद्भ्यामेव प्रजेश्वरः ॥१६१॥
तस्य पादार्पितदृशो व्रजतो मौनिनः प्रभोः । पन्थानं जगृहुः पौरा निःशब्दस्रवदस्रवः ॥१६२॥
स विलङ्घितगव्यूतिरुपविश्य तरोरधः । जनमेकैकमुद्बाष्पं न्यवर्तयत सान्त्वयन् ॥१६३॥
पथि शिखरिणां मूले मूले विलम्ब्य जहज्जनान्वितपरिकरो गच्छन्नूर्ध्वं क्रमात्समदृश्यत ।
गहनवसुधाः संपूर्योद्वेगैर्जनैस्स निजात्पदादिव विनिर्यातः स्तोकैः कृतानुगमो[1] जनैः ॥१६४॥
निःशेषं निकटास्य लोकमटवीमध्ये निरुन्धन्पदं शोकावेशसबाष्पगद्गदपदं संमान्य चोत्सार्य च ।
भूर्जत्वक्[2]परिरोधमर्मरमरु[3]द्विद्राणसिद्धाध्वगश्रेणीमौलिमणिप्रभोज्ज्वलगुहागेहं जगाहे वनम् ॥१६५॥ 165
अथ वनसरसीतटद्रुमाधः पुटकघटोदरसंभृताम्बुपूराम् ।
वसतिमकृत वासरावसाने शुचितरुपल्लवकल्पितोऽनल्पाम् ॥१६६॥
शृङ्गासक्तासितातपाः शबलितच्छायाभुवः शाद्वलैरुत्फुल्लामलमल्लिकामलमिलन्मुग्धव्रजस्त्रीजनाः ।
सध्वाना वनपालवेणु[2]रणितोन्मिश्रैः प्रपाताम्बुभिः श्रान्तं दृक्पथमागतास्तमनयन्विश्राममद्र्याश्रयः[3] ॥१६७॥
वनकरि[1]रसितैः पदे पदे स प्रतिभटतां पटहध्वनेर्दधानैः ।
अमनुत रटितैश्च कर्कटेटोः परिगलितां गमनोन्मुखस्त्रियामाम् ॥१६८॥
अन्येद्युर्विधिवदुपास्य पूर्वसंध्यामासन्ने नलिनसरस्यपास्तनिद्रः ।
क्ष्मापालः परिचितसोदराम्बुतीर्थं नन्दीशाध्युषितमयाप भूतभर्तुः ॥१६९॥
नन्दिक्षेत्रे[1] त्रिभुवनगुरोः सोमतस्तत्र यावत्तस्थौ तावत्स्वयमभिमतावाप्तये जायते स्म ।
भस्मस्मेरः सुघटितजटाजूटबन्धोक्षसूत्री रुद्राक्षाङ्को जरठमुनिभिः सस्पृहं वीक्ष्यमाणः ॥१७०॥ 170
भ्राम्यच्छ्रीकण्ठ[1]दत्तव्रतजनितमहासत्क्रियो भैक्षहेतोर्भिक्षादानोद्यतासु प्रतिमुनिनिलयं संभ्रमात्तापसीषु ।
वृक्षैर्भिक्षाकपाले शुचिफलकुसुमश्रेणिभिः पूर्यमाणे मान्यो वैराग्ययोगे[2]ष्यनुपनतपरप्रार्थनालाघवोभूत् ॥१७१॥

६ ॥ १७१ ॥ आदितः ४३ ॥ ग्रं ५४३ ॥

इति श्रीकाश्मीरिकमहामात्यश्रीचम्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां द्वितीयस्तरङ्गः ॥

शतद्वये वत्सराणामष्टाभिः परिवर्जिते । अस्मिन्द्वितीये व्याख्याताः षट्प्रख्यातगुणा नृपाः ॥

---

१५६. [1]) Thus A$_1$; the *v. l.* of A$_2$ निर्व्यूढावपि has been struck out again; G R निर्व्यूढमपि. १६०. [1]) Thus corr. by later hand from A$_1$ तं च. १६४. [1]) Thus corr. by A$_3$ from A$_1$ स्तोकानुगमो. १६५. [1]) Thus A$_3$; A$_1$ निरुन्धन्पदं.—[2]) Thus corr. by later hand from A$_1$ भूर्जत्वच°.—[3]) Thus corr. by A$_2$ from A$_1$ मर्मर°.—[4]) The *akshara* रि supplied by A$_3$ in space left by A$_1$.—[5]) The gloss भोजपत्रो, written by A$_4$ at the foot of the page, probably refers to this word. १६७. [1]) Thus corr. by A$_2$ from A$_1$ शाद्वलैस्तामल°; the latter reading repeated in margin by A$_3$.—[2]) Thus G *sec. manu* and P; A R C °पालेषु°.—[3]) A$_3$ gloss पर्वताः. १६८ [1]) A$_3$ वनहरि° —[2]) Thus corr. by later hand from A$_1$° ध्वनैर्द°.— १७०. [1]) A$_1$ नन्दक्षेत्र; supplemented as above by A$_3$. १७१.. [1]) A$_2$ श्राम्यच्छ्री°.—[1]) Thus corr. by A$_3$ from A$_1$ °योगो.
[2]) A$_1$ writes °ष्यनुपनत°, with figures indicating transposition.

## ॥ तृतीयस्तरङ्गः ॥

मुग्धेभाजिनमस्य कुम्भकुहरे मुक्ताः कुतामोषिताः किं भालज्वलनेन कज्जलमतः स्त्रीकार्यमक्ष्णोः कृते ।
संधाने वपुरर्धयोः प्रतिवदन्नेवं निषेधेऽद्रिजे कर्तव्ये प्रिययोत्तरानुसरणोद्युक्तो हरः पातु वः ॥१॥
अथोल्लसत्प्रभुश्लाघमानिन्युर्मेघवाहनम् । गान्धारविषयं गत्वा सचिवाधिष्ठिताः प्रजाः ॥२॥
रक्तप्रजस्य भूभर्तुः पश्चाल्लोकानुरञ्जनम् । तस्याज्ञायि जनैर्धौतक्षौमक्षालनसंनिभम् ॥३॥
स पुनर्बोधिसत्त्वानामपि सत्त्वानुकम्पिनाम् । चर्यामुदात्तचरितैरत्यशेत महाशयः ॥४॥
तस्याभिषेक एवाज्ञां धारयन्तोऽधिकारिणः । सर्वतोमार[1]मर्यादापटहानुदघोषयन् ॥५॥
कल्याणिना प्राणिवधे तेन राष्ट्रान्निवारिते । निष्पापां प्रापिता वृत्तिं स्वकोशात्सौनिकादयः ॥६॥
तस्य राज्ये जिनस्येव मारविद्वेषिणः प्रभोः । क्रतौ घृतपशुः पिष्टपशुर्भूतबलावभूत् ॥७॥
स मेघवननामानमग्रहारं विनिर्ममे । मयुष्टग्रामकृत्पुण्यज्येष्ठं[1] मेघमठं तदा[2] ॥८॥
भोगाय वैदेश्य[1]भिक्षूणां वल्लभास्यामृतप्रभा । विहारमुच्चैरमृतभवनाख्यमकारयत् ॥९॥
देशैकदेशाल्लोर्नाम्नः[1] प्राप्तस्तस्याः पितुर्गुरुः । स्तुन्पा[2] तद्भाषया प्रोक्तो लोस्तोन्पास्तूपकार्यकृत् ॥१०॥
चक्रे नड्वने राज्ञो यूक[1]देव्यभिधा वधूः । विहारमद्भुताकारं सपत्नीस्पर्धयोद्यता ॥११॥
अर्धे यद्भिक्षवः शिक्षाचारास्तत्रार्पितास्तया । अर्धे गार्हस्थ्यगर्ह्याश्च सस्त्रीपुत्रपशुश्रियः ॥१२॥
अथेन्द्रदेवीभवनमिन्द्रदेव्यभिधा व्यधात् । विहारं सचतुःशालं स्तूपं भूपप्रियापरा ॥१३॥
अन्याभिः खादनासम्माप्रमुखाभिर्निजाख्यया[1] । देवीभिस्तस्य महिता विहारा बहवः कृताः ॥१४॥
अर्वाक्कालोद्भवस्यापि राज्यकालोऽस्य भूपतेः । न्यक्कृतादिनृपोदन्तैर्वृत्तान्तैरद्भुतोऽभवत् ॥१५॥
स बहिर्विहरञ्जातु भूभृद्भीतैरुदीरितम् । चौरश्चौरोऽयमित्याराद्शृणोत्क्रन्दितध्वनिम् ॥१६॥
कः कोऽत्र बध्यतां चौर इत्युक्ते तेन सक्रुधा । शशामाक्रन्दितध्वानो न च चौरो व्यभाव्यत ॥१७॥
पुर्यां द्वित्रैर्दिनैस्तस्य निर्गतस्याग्रतस्ततः । अभवन्नभयार्थिन्यो द्वित्रा दिव्यप्रभाः स्त्रियः ॥१८॥
ताः संश्रुतेप्सितास्तेन रक्षार्थेन कृपालुना । अभ्यभाषन्त सीमन्तपुञ्जिताञ्जलयो वचः ॥१९॥
देव दिव्यप्रभावेण भुवने भवता धृते । अपरस्माद्भयं जातु कस्य स्यात्करुणानिधे ॥२०॥
तदानीं तोयदा भूत्वा छादयन्तो नभस्तलम् । अकाण्डकरकापातशङ्किभिः कार्षकैर्मृषा ॥२१॥
पक्वशालिवनस्फीति[1]रक्षाक्षुभितमानसैः । नागास्त्वत्कोपसंरम्भभूमितां[2] गमिताः प्रभो ॥२२॥

२. [1]) $A_2$ gloss इमस्य. ५. [1]) $A_2$ gloss अमार अहिंसा. ८. [1]) $A_2$ °ज्येष्ठो.—[2]) $A_2$ तथा. ९. [1]) Thus $A_2$; $A_1$ वैश्य°. १०. [1]) Thus $A_1$; corr. by later hand into देशैक°.—[2]) $A_2$ स्तुन्पा. ११. [1]) $A_2$ यूक°. १४. [1]) $A_2$ gloss नृपपत्नीभिः. २२. [1]) A °स्फाति°.—[2]) $A_2$ भूमिं तं.

तेऽस्माकं पततश्चौरश्चौर इत्यार्तभाषितम् । श्रुत्वा देवेन बध्यन्तामित्यवादि तदा क्रुधा ॥२३॥
तदा त्वदाज्ञामात्रेण न्यपतन्पाशवेष्टिताः । प्रसादः क्रियतां तेषामस्मत्करुणयाधुना ॥२४॥ चक्कलकम् ॥
तद्वाक्यश्रवणाद्राजा प्रसादविशदाननः । सर्वे ते बन्धनाद्वाचास्त्यज्यन्तामिति व्यधित ॥२५॥ 25
तदा तस्याज्ञया राज्ञो नागा विधुतबन्धनाः । प्रणम्य चरणौ तूर्णं प्रययुः सपरिग्रहाः ॥२६॥
अथ ग्राहयितुं भूपानाज्ञां हिंसानिवृत्तये । स दिग्जयाय निर्व्याजधर्मचर्यो विनिर्ययौ ॥२७॥
अभूदभीतजनतावेक्षणश्लाघ्यविक्रमः । स्पृहणीयो जनस्यापि तदीयविजयोद्यमः ॥२८॥
प्रभावविजितान्कृत्वा सोऽहिंसादीक्षितान्नृपान् । अर्णसां पत्युरभ्यर्णमवापावर्णवर्जितः ॥२९॥
तत्र तालीवनच्छायासुखविश्रान्तसैनिकः । युक्तिं द्वीपान्तराक्रान्तौ क्षणमन्तर्व्यचिन्तयत् ॥३०॥ 30
अथ वेलावनोपान्तात्सेनार्ताक्रन्दितध्वनिः । मेघवाहनराज्येपि हतोऽहमिति शुश्रुवे ॥३१॥
तत्प्रायःशकुनेनान्तर्भणितः स द्रुतं ततः । संचारिण्यातपत्रेण सह तां बद्धभामगात् ॥३२॥
अपश्यदथ केनापि चण्डिकायतनाग्रतः । नरं शबरसेनान्या हन्यमानमधोमुखम् ॥३३॥
अनात्मज्ञ धिगेतत्ते कुकर्मेति महीभुजा । तर्जितः स भयादेवं शबरस्तं व्यजिज्ञपत् ॥३४॥
शिशुर्मुमूर्षुर्मे राजन्नयं रोगार्दितः सुतः । कर्मैतद्दैवतैकमस्य श्रेयोलाभावहम् ॥३५॥ 35
उपहारनिरोधेन सद्य एवं विपद्यते । बन्धुवर्गमशेषं च विडयेतज्जीवजीवितम् ॥३६॥
अरण्यगहनालब्धमनाथं देव रक्षसि । बहुलोकाभयं बालं कथमेतमुपेक्षसे ॥३७॥
अथाभ्यधान्महात्मा स वचोभिः शबरस्य तैः । वध्यस्य दृष्टिपातैश्च विक्लवैर्विवशीकृतः ॥३८॥
किरात कातरो मा भूः स्वयं संरक्ष्यते मया । बहुबन्धुस्तव सुतो वध्योऽप्ययमबान्धवः ॥३९॥
उपहारीकरोम्येष चण्डिकायै स्वविग्रहम् । मयि प्रहर निःशङ्कं जीवत्वेतज्जनद्वयम् ॥४०॥ 40
तदद्भुतमहासत्त्वचित्तौदार्यविस्मितः । उन्मिषद्रोमहर्षस्तं ततः स शबरोऽभ्यधात् ॥४१॥
अतिकारुण्यभिषतस्तवायं पृथिवीपते । कश्चिन्मतिविपर्यासप्रकारो हृदि रोहति ॥४२॥
त्रैलोक्यजीवितेनापि यो रक्ष्यो हेलयैव तम् । पृथिवीभोगसुभगं कथं कायमुपेक्षसे ॥४३॥
न मानं न यशो नार्यो दारांश्च न बान्धवान् । न धर्मं न सुतान्भूपा रक्षन्ति प्राणतृष्णया ॥४४॥
तत्प्रसीद प्रजानाथ मा वध्येऽस्मिन्कृपां कृथाः । शिशुर्येष प्रजाश्चैता जीवन्तु त्वयि जीवति ॥४५॥ 45
उपाजिहीर्षुरात्मानं हन्तयोतार्थडम्बरैः । अभ्यर्थयन्निव चामुण्डामथोवाच स पार्थिवः ॥४६॥
सदाचारसुधास्वादे के भवन्तो वनौकसः । जाह्नवीमज्जनप्रीतिं न जानन्ति मरुस्थिताः ॥४७॥
ध्रुवापायेन कायेन क्रीणतः कीर्तिमव्ययाम् । ममाभीष्टं प्रमार्ष्टुं ते मूढ कोऽयमाग्रहः ॥४८॥
मा वोचः किंचिदपरं प्रहर्तुं चेद्घृणा तव । न किं निजः कृपाणो मे शक्तः प्रक्रान्तसिद्धये ॥४९॥
इत्युक्त्वा स स्वयं देहमुपहर्तुं समुद्यतः । खण्डनाय स्वमुण्डस्य विकोशं शस्त्रमाददे ॥५०॥ 50
ततः प्रहर्तुकामस्य तस्य पुकुसुमैः शिरः । करश्च दिव्यवपुषा रुद्धः केनाप्यवार्यत ॥५१॥

---

३०. [1]) Thus corr. by later hand from $A_1$ °कैः. ३३. [1]) A R G here and elsewhere शबर°. ३६. [1]) $A_1$ एव. ४८. [1]) Thus corr. by later hand from $A_1$ °भीष्टं.

अथापश्यत्तथाभूतः कंचिद्दिव्याकृतिं पुरः । न चण्डिकां न तं बध्यं न किरातं न दारकम् ॥५२॥

स तं विस्मयतस्तावादीन्मां त्वं सत्त्ववशीकृतम् । विद्धि मध्यमलोकेन्दो वरुणं करुणानिधे ॥५३॥

यदेतत्त्वामुपास्तेऽद्य छद्म तन्मत्पुरात्पुरा । महाबलोदरद्रौमः पुराणप्रभुरस्तव ॥५४॥

55 रसातलैकतिलकं माहात्म्यवदिदं विना । उपद्रवाः प्राणहराः पौराणां नः पदे पदे ॥५५॥

तदिदं प्राप्तुकामेन त्वदौदार्यं परीक्षितुम् । कारुण्यमय मायेयं निरमायि मयेदृशी ॥५६॥

त्वदादिर्यो व्यधाज्जन्मभूर्व्यसुन्वसुकुंलात्मजः[1] । प्रायश्चित्तममारेण चरसीव तदेनसः ॥५७॥

भवत्स्पृहाजनकयोर्धरणीधारणोचिते[1] । शेषवेदे विषोद्गारफणारत्नौघयोरिव ॥५८॥

तमःप्रकाशावहयोस्तेजःक्रान्तदिगन्तरे । उषर्बुधे धूमजालज्वालापल्लवयोरिव ॥५९॥

60 क्षमाप्यायक्रियाभाजो रुद्धतेजस्विमण्डले । प्रावृड्द्वयोदरच्छद्मेद्धि संतापासारयोरिव ॥६०॥

द्वयोरालोकितं चित्रं जन्मैकस्मिन्महाकुले । तस्य त्रिकोटिहन्तुश्च तत्राहिंसस्य च प्रभोः ॥६१॥ चक्कलकम् ॥

नम्रः सप्ताङ्गधैर्यं स वदतो यादसां प्रभोः । चकार पूजां स्तोत्रेण छद्मेन च कृताञ्जलिः ॥६२॥

तं च स प्रतिगृह्णन्तं प्रणयादुष्णवारणम् । जगाद गुणिनामग्र्यो वरुणं धरणीधरः ॥६३॥

कल्पद्रुमाश्च सन्तश्च नार्हन्ति समशीर्षिकाम् । अर्थिनां प्रार्थिताः पूर्वे फलन्त्यन्ये स्वयं यतः ॥६४॥

65 अत्रालम्बिष्यत छद्मं कथं नः पुण्यपण्यताम् । तत्प्रार्थयिष्यत[1] न चेदार्तोपकृतये भवान् ॥६५॥

वदान्यः[1] संविभाग्येभ्यः[2] पूर्णं कुर्यादनुग्रहम् । छाययाप्याययन्दद्यात्[3]फलान्यपि महीरुहः ॥६६॥

तदेवं[1] विहितोदात्तसंविभागाभिचोदितः । जनोऽयं भगवन्किंचिद्वरं प्रार्थयते परम् ॥६७॥

वशीकृतेयं पृथिवी कृत्स्ना भवदनुग्रहात् । जेतुं द्वीपान्कथ्यतां तु युक्तिः पाथोधिलङ्घने ॥६८॥

इत्यर्थ्यमानोऽकथयद्भूमिपालं जलेश्वरः । तितीर्षौ भवति स्तम्भं नीयतेऽम्भो मयाम्बुधेः ॥६९॥

70 ततो महाप्रसादोऽयमित्युक्तो पृथिवीभुजा । तिरोबभूव भगवान्वरुणः सोष्णवारणः ॥७०॥

अन्येद्युर्विस्मयस्मेरैर्बलैः सीमन्तयञ्जलम् । प्रभावस्तम्भितक्षोभं[1] प्रोत्ततार स वारिधिम् ॥७१॥

गुणरत्नाकरः शैलं स रत्नाकरशेखरम् । नानारत्नाकरं सैन्यैरारुरोहाथ रोहणम् ॥७२॥

तत्र तालीतरुवनच्छायाध्यासितसैनिकम् । प्रीत्या लङ्काधिराजस्तमुपतस्थे विभीषणः ॥७३॥

समागमः स शुशुभे[1] नरराक्षसराजयोः । वन्दिनादाद्भुतान्योन्यं[2] प्रथमालापसंभ्रमः ॥७४॥

75 अथ रक्षःपतिर्लङ्कां नीत्वालंकरणं क्षितेः । अमर्त्यसुलभाभिस्तं विभूतिभिरुपाचरत् ॥७५॥

यदासीत्पिशिताशा इत्यन्वर्थं नाम रक्षसाम् । तदा तदाज्ञाग्रहणे प्रापि तद्रूढिशब्दताम् ॥७६॥

रक्षःशिरःप्रतिच्छन्दैः[1] स्थिरप्रणतिसूचकैः । सनाथशिखरान्प्रादात्तस्मै रक्षःपतिर्ध्वजान् ॥७७॥

पाराद्यादिनिधेः प्राप्ताः कश्मीरेष्वधुनापि ये । राज्ञां यात्रासु निर्यान्ति ख्याताः पारध्वजाः पुरः ॥७८॥

इत्यमाराक्षसकुलं प्राणिहिंसां निषिध्य सः । स्वमण्डलं प्रति कृती न्यवर्तत नराधिपः ॥७९॥

---

५७. 1) The *aksharas* म्भसूर्व्यसुकु and मारेण चरसीव तदेनसः supplied by $A_2$ in spaces left by $A_1$. ५८. 1) भवत्स्पृहाजन supplied by $A_2$, as above. ६५. 1) त supplied by $A_2$. ६६. 1) Emended; A B G वदान्यः.—2) $A_1$ gloss अर्थिभ्यः.—3) Thus corr. by $A_2$ from $A_1$ दद्यात्. ६७. 1) Thus corr. by $A_2$ from $A_1$ तदवं. ७१. 1) Thus $A_1$; $A_2$ अतं. ७४. 1) श supplied by $A_2$.—2) न्योन्य supplied by $A_2$ in space left by $A_1$. ७७. 1) $A_1$ gloss प्रतिमाभिः.

ततः प्रभृति तस्याज्ञा सार्वभौमस्य भूपतेः । हिंसाविरतिरूपा सा न कैश्चिदुदलङ्घ्यत ॥८०॥ 80
क्षुद्रैर्मत्स्यादिभिर्नाप्सु सिंहाद्यैर्गहने न च । न श्येनप्रमुखैर्व्योम्नि तद्राज्ये जन्तवो हताः ॥८१॥
अतिक्रामति कालेथ कोपि शोकाकुलो द्विजः । पुत्रं गदार्तमादाय द्वारि चक्रन्द भूपतेः ॥८२॥
दुर्गया प्रार्थितं राजन्पश्वाहारं विनैव मे । अनन्यसंततेः सूनुर्ज्वरेणाद्य विपद्यते ॥८३॥
पशुहिंसाग्रहेणेमं क्षितिपाल न रक्षसि । एतद्विपत्तौ तत्कोन्यो निमित्तं प्रतिभाति मे ॥८४॥
निर्णयो वर्णगुरुणा त्वयैवैष प्रदीयताम् । ब्राह्मणस्य पशोर्वा स्यात्प्राणानां कियदन्तरम् ॥८५॥ 85
तपःस्थानपि ये जघ्नुर्ब्राह्मणप्राणलब्धये । हा मातस्तेधुना भूमे प्रजापालास्तिरोहिताः ॥८६॥
इति ब्रुवति साक्षेपं शोकरूक्षाक्षरं द्विजे । आपन्नार्तिहरो राजा चिरमेवं व्यचिन्तयत् ॥८७॥
न वध्याः प्राणिन इति प्राज्ञया समयः कृतः । विप्रार्थमपि किं कुर्यां स प्रतिज्ञातविप्लवम् ॥८८॥
निमित्तीकृत्य मामद्य विपद्येत द्विजो यदि । तत्राप्यत्यन्तपापीयानर्थः संकल्पविप्लवः ॥८९॥
नैति मे संशयभ्रान्तमेकपक्षावलम्बनम् । संभेदावर्तपतितं प्रसूनमिव मानसम् ॥ ९०॥ 90
तत्स्वदेहोपहारेण दुर्गां तोषयता मया । प्रतिज्ञया समं न्याय्यं रक्षितुं जीवितं द्वयोः ॥९१॥
इति संचिन्त्य सुचिरं देहदानोद्यतो नृपः । श्वः प्रियं तव कर्तास्मीत्युक्त्वा विप्रं व्यसर्जयत् ॥९२॥
क्षपायां क्ष्मापतिमथ स्वमुपाहर्तुमुद्यतम् । निषिध्य दुर्गा व्यधित प्रकृतिस्थं द्विजन्मजम् ॥९३॥
इत्याद्ययतनस्यापि चरितं तस्य भूपतेः । पृथग्जनेष्वसंभाव्यं वर्णयन्तस्त्रपामहे ॥९४॥
अथवा रचनानिर्विशेषमार्गेण वर्त्मना । प्रस्थितां नानुरुन्धन्ति श्रोतृचित्तानुवर्तनम ॥९५॥ 95
तस्मिन्नस्तंगते भुक्त्वा क्ष्मां चतुस्त्रिंशतं समाः । अनादित्यमिवाशेषं निरालोकमभूज्जगत् ॥९६॥
अथ क्ष्माभृद्ररक्ष क्ष्मां श्रेष्ठसेनस्तदात्मजः । आहुः प्रवरसेनं यं तुञ्जीनं चाञ्जसा जनाः ॥९७॥
दोःस्तम्भसंभृतासक्तौ कृपाणमणिदर्पणे । संक्रान्तेवोन्मुखी यस्य भुवनश्रीर्व्यभाव्यत ॥९८॥
स मातृचक्रं निर्माय यः पूर्वं प्रवरेश्वरम् । पुण्याः पुराणाधिष्ठाने प्रतिष्ठा विविधा व्यधात् ॥९९॥
गृहाङ्गनमिव क्षोणीं गणयन्वशवर्तिनीम् । त्रिगर्तोर्वीं ग्राममध्ये प्रवरेशाय यो ददौ ॥१००॥ 100
ईशो नृपाणां निःशेषक्ष्माकेदारकुटुम्बिनाम् । स समास्त्रिंशतं भूभृदनिस्त्रिंशाशयोभवत् ॥१०१॥
हिरण्यतोरमाणाख्यौ व्यधत्तामथ तत्सुतौ । साम्राज्ययुवराजत्वभाजने रञ्जनं क्षितेः ॥१०२॥
बलाहतानां प्राचुर्यं विनिवार्यासमञ्जसम् । तोरमाणेन दीनाराः[2] स्वाहताः संप्रवर्तिताः ॥१०३॥
मामवज्ञाय राजेव कस्मादेतेन वल्गितम् । इति तं पूर्वजो राजा क्रोधनो बन्धने व्यधात् ॥१०४॥
चिरंस्थितिस्त्यक्तभुवस्तत्र तस्याञ्जनाभिधा । ऐक्ष्वाकस्यात्मजा राज्ञी वज्रेन्द्रस्यासत गुर्विणी ॥१०५॥ 105
आसन्नप्रसवा भर्त्रा सा त्रपार्तेन मोचिता । सुतं प्रविश्य प्रासोष्ट कुलालनिलये क्वचित् ॥१०६॥
स कुम्भकारगेहिन्या काकयेव पिकशावकः । पुत्रीकृतो राजपुत्रः पर्याप्ते पर्यवर्धत ॥१०७॥

---

८०—८१. ¹)—¹) These two verses have been supplied in margin by A₂. ८३. ¹) A₂ राजन्नुपहारं. ८८. ¹) A₂ प्राग्वीक्षित समकल्पनम्. ९९. ¹) This verse is supplied by A₃ in margin.—²) A₂ gloss अमाः. १००. ¹) Thus A₂; A₁ °सखेव १०३. ¹) Thus A; G R Edd. बला°.—²) A₂ gloss सुवर्णमया [illegible].—³) A₂ gloss स्वाहताः [illegible] आहताः संप्रवर्तिताः व्यवहारविषयाः कृताः. १०४. ¹) A₂ gloss तोरमाणेन. १०६. ¹) A₂ gloss त्रपार्तेन सलज्जेन.

जनाविज्ञः कुलाल्याथ रक्षितो विदितोभवत् । रत्नसूतेर्भुजंग्याथ प्रच्छन्न इव शेवधिः ॥१०८॥
पौत्रः प्रवरसेनस्य गिरा मातुर्नृपात्मजः । पैतामहेन नाम्नैव कुलाल्या ख्यापितोभवत् ॥१०९॥
110 वर्धमानः स संपर्कं न सेहे सहवासिनाम् । तेजस्विमैत्रीरसिकः शिशुः पद्म इवाम्भसाम् ॥११०॥
तं कुलीनैश्च भूपैश्च विद्याविद्भिश्च दारकैः । अन्वीतमेव ददृशुः क्रीडन्तं विस्मयाज्जनाः ॥१११॥
स्ववृन्दस्यात्युदारौजा राजा चक्रे स दारकैः । मृगेन्द्रशावः क्रीडद्भिर्वने बालमृगैरिव ॥११२॥
संविभेजेनुजग्राह वशीचक्रे च सोर्भकान् । अराजोचितमाचारं नैव कंचिदसेवत ॥११३॥
भाण्डादि कर्तुं मृत्पिण्डं कुम्भकारैः समर्पितम् । स्वीकृत्य चक्रिरे तेन शिवलिङ्गपरंपराः ॥११४॥
115 तथा साश्चर्यचर्यः स क्रीडञ्जातु व्यलोक्यत । मातुलेन जयेन्द्रेण सादरं चाभ्यमन्यत ॥११५॥
आवेद्यमानं शिशुभिस्तं जयेन्द्रोयमित्यसौ । भूपालवत्सावहेलं पश्यन्नन्यमहीदिव ॥११६॥
संभाव्य सत्त्वावष्टम्भात्तमसामान्यवंशजम् । सादृश्याद्भगिनीभर्तुर्भागिनेयमशङ्कत ॥११७॥
सत्वरस्तस्य जिज्ञासारसेनानुससार तम् । प्राप्तस्तद्गृहमौत्सुक्यात्स्वसारं च व्यलोकयत् ॥११८॥
सा स चान्योन्यमुन्मन्यू पश्यन्तौ भ्रातरौ चिरात् । निःश्वासद्विगुणोष्माणि मुहुरश्रूण्यमुञ्चताम् ॥११९॥
120 कुलाल्या दारको मातः कावेताविति पृष्टवान् । अकथ्यतेत्थं वत्सैषा मातायं मातुलश्च ते ॥१२०॥
पितुर्वध्येन सक्रोधं तं कालापेक्षयाक्षमम् । शिक्षयित्वा जयेन्द्रोथ कार्यशेषाय निर्ययौ ॥१२१॥
वत्सिङ्गोत्पादनासज्जे तस्मिन्भ्राता यदृच्छया । बन्धात्त्यक्तो नृपतिना तोरमाणोस्तमाययौ ॥१२२॥
निवार्य मरणोद्योगं मातुर्निर्वेदखेदितः । ययौ प्रवरसेनोथ तीर्थोत्सुक्यादिगन्तरम् ॥१२३॥
रक्षित्वा दशमासोनाः क्ष्मामेकत्रिंशतिं समाः । तस्मिन्क्षणे हिरण्योपि शान्तिं निःसंततिर्ययौ ॥१२४॥
125 तत्रानेहस्युज्जयिन्यां श्रीमान्हर्षापराभिधः । एकच्छत्रश्चक्रवर्ती विक्रमादित्य इत्यभूत् ॥१२५॥
भूपमद्भुतसौभाग्यं श्रीर्वद्धरमसाभजत् । विहाय हरिबाहूंश्च चतुरः सागरांश्च यम् ॥१२६॥
लक्ष्मीं कृत्वोपकरणं गुणे येन प्रवर्धिते । श्रीमत्सु गुणिनोद्यापि तिष्ठन्त्युद्धुरकन्धराः ॥१२७॥
म्लेच्छोच्छेदाय वसुधां हरेरवतरिष्यतः । शकान्विनाश्य येनादौ कार्यभारो लघूकृतः ॥१२८॥
नानादिगन्तराख्यातं गुणवत्सुलभं नृपम् । तं कविर्मातृगुप्ताख्यः सर्वास्थानस्थमासदत् ॥१२९॥
130 स गम्भीरस्य भूभर्तुरनुभावं महाद्भुतम् । विविधास्थानसंवृद्धस्तस्याभ्यूह्य व्यचिन्तयत् ॥१३०॥
सोयमासादितः पुण्यैः क्षोणिपालो गुणिप्रियः । परभागोपलम्भाय पूर्वेमुष्य महीभुजः ॥१३१॥
यस्मिन्नाजनि तत्त्वज्ञैः सूरिभिः संभृतश्रुतैः । नाञ्जलिर्दीयते जातु मानाय च गुणाय च ॥१३२॥
भङ्ग्यामुष्मिन्विदधती स्वाभिप्रायप्रकाशनम् । वैदग्ध्यवन्ध्यतां नैति बुद्धिः कुलवधूरिव ॥१३३॥
खिलीकृतखलालापे युक्तायुक्तविवेकिनि । नायाति सेव्यमानेस्मिन्स्वगुणोनर्थकारिताम् ॥१३४॥
135 अनाप्नुवद्भिः सावद्यदुर्विधसमशीर्षिकाम् । जीवन्मरणमस्याग्रे गुणिभिर्नानुभूयते ॥१३५॥

---

१०८. ¹) $A_3$ gloss भूमेः  ११२. ¹) $A_3$ gloss अतिशयेन उदारं ओजः यस्य.  ११३. ¹) Thus corr. by later hand from A किंचिद°.  ११६. ¹) $A_3$ gloss प्रवरसेनः.  १२२. ¹) Thus $A_1$; $A_1$ has given a *varia lectio* in margin of which only वत्सिङ्गो- ... is legible (उत्पिङ्गोत्पादनासज्जे?) $A_3$ उत्पिङ्गोत्पादने सज्जे, with gloss ... कोलाहले सज्जे सति.  १२७. ¹) G Edd. गुणौ येन प्रवर्धितौ.  १२८. ¹) $A_3$ gloss कार्किनामः  १२९. ¹) G *sec. manu* and Edd. सभास्था°.  १३४. ¹) $A_3$ अखिलका°.

संभावनानुसारेण प्रवृत्तोस्माद्विवेकिनः । शोभ्यते नाञ्जितोप्युच्चैः प्रीतिदायो महार्णवैः ॥१३६॥
गृह्णन्यथागुणं स्वाम्यनुचितप्रतिपत्तिभिः । अन्तरङ्गः क्रमस्तासामवमुल्लाबवर्धनः ॥१३७॥
सेवया दृष्टकष्टस्य दाक्षिण्योत्पादने श्रमः । अस्य यो न स भृत्यानां हिमाद्रौ हिमविक्रयः ॥१३८॥
मिथ्याख्यातगुणो नाप्तो नामात्यः कलहप्रियः । असत्यसंधः स्तेयो वा नास्यानेस्य महीपतेः ॥१३९॥
अश्लीलालापिनोन्योन्यं नर्मोक्त्या मर्मभेदिनः । अन्यधर्मेशासहनाः संहता नास्य सेवकाः ॥१४०॥ 140
छन्दानुवर्तिनामेव निजविज्ञानवन्दिनाम् । सर्वज्ञमन्यतान्धानां मुखप्रेक्षी न पार्थिवः ॥१४१॥
अनेन सह संजातः संलापो विपुलोदयः । लभ्यते नान्तराच्छेत्तुं दुर्जातैर्जातु दुर्जनैः ॥१४२॥
सर्वदोषोज्झितं सेव्यं नृपमेवमिमं मम । समासादयतः पुण्यैरदूरे स्वार्थसिद्धयः ॥१४३॥
गम्भीरश्च गुणज्ञश्च स्थिरबुद्धिश्च पार्थिवः । एष क्लेशमयं त्यक्त्वा निषेव्यः प्रतिभाति मे ॥१४४॥
न चास्माद्धनमादाय रञ्जितादन्यराजवत् । भ्राम्यतो भूतलेमुष्मिन्सेव्योन्यः प्रतिभाति मे ॥१४५॥ 145
इति संचिन्त्य सुदृढं स नवामिव तां सभाम् । नारब्धवर्त्म चास्ते स्म गुणिगोष्ठीषु मध्यगः ॥१४६॥
मृदुपूर्वं गुणानेवं दर्शयन्तं विशांपतिः । विशिष्टयोग्यताकाङ्क्षी विवेदाराधनोन्मुखम् ॥१४७॥
अचिन्तयच्च नायं स्याद्गुणिमात्रं महाशयः । उदात्तं सत्क्रियार्हत्वं वदत्यस्य गभीरता ॥१४८॥
इति संचिन्त्य राजापि ज्ञातुं तस्यान्तरं मतेः । नाकिरन्न परीक्षार्थं यथावल्लाभसत्क्रियाः ॥१४९॥
स तेनानुपचारेण समुदात्ताशयं नृपम् । स्वीकर्तारं विदन्धीमानिस्थैर्ये प्रीतिमाश्रितः ॥१५०॥ 150
क्रमोपचीयमानेन सेवाभ्यासेन धीमतः । तस्य नोद्वेगमगमत्स्वकाय इव पार्थिवः ॥१५१॥
नातीव स्वल्पया स्थित्या नातीवाप्यथ दीर्घया । शरत्क्षपाक्षणेनेव राज्ञो निन्ये प्रसन्नताम् ॥१५२॥
नर्मभिर्गर्भचेटानां द्वाःस्थानां निक्रियाक्रमैः । मिथ्यास्तवैर्विटानां च न स क्षोभमनीयत ॥१५३॥
प्रसन्नालापसंप्राप्तौ छायामह इवाचलः । प्रतिस्पर्धीव च क्रुध्यच्छायाश्रायामभूत्प्रभोः ॥१५४॥
वीक्षणं राजदासीनां राजद्विष्टैः सहासनम् । राजाग्रे च कथां नीचैः कालविज्ञश्चचार सः ॥१५५॥ 155
स्वभावाद्राजपुरुषैः सजनैः राजनिन्दकैः । नास्मात्प्रभोरुपालम्भो लेभे पैशुन्यजीविभिः ॥१५६॥
वदद्भिरादरास्थैर्यं वैफल्याद्यन्यदं प्रभोः । निन्ये नोत्साहशैथिल्यं सेवोत्साहासहिष्णुभिः ॥१५७॥
अन्योत्कर्षानपि वदन्प्रसङ्गेन निराग्रहः । स्वविद्याद्योतकः सोभूत्सभ्यानां हृदयंगमः ॥१५८॥
एवं स सेव्यमानस्तमुद्योगेन बलीयसा । अनिर्विण्णो मातृगुप्तः षडृतूनत्यवाहयत् ॥१५९॥
अथ तं कृशसर्वाङ्गं धूसरं जीर्णवाससम् । बहिर्जातु विनिर्यातो राजा वीक्ष्य व्यचिन्तयत् ॥१६०॥ 160
वैदेशिको निःशरणो गुणवान्बान्धवोज्झितः । हा धिग्जिज्ञासुना कष्टं सोयमायासितो मया ॥१६१॥
कोस्याभवः किमशनं कानि प्रावरणानि वा । इत्यैश्वर्यविमूढेन मया हन्त न चिन्तितम् ॥१६२॥
वसन्तेनेव न मया शोभयाप्यपि योजितः । शीतवातातपैः शुष्यन्सोयं पुरुषपादपः ॥१६३॥

---

१३६. ¹) संभावनानुसा supplied by $A_2$ in space left by $A_1$. १३७. ¹) $A_2$ gloss प्रतिपत्तिः सत्कारः सत्क्रिया पूजनं मानमिति यावत्. १४५. ¹) Thus corr. by $A_2$ from $A_1$ भ्राम्यते. १४६. ¹) Thus corr. by $A_2$ from $A_1$ नारब्धव°. १५२. ¹) $A_2$ gloss राजा चन्द्रोपि.—²) $A_2$ gloss मातृगुप्तेन. १५५. ¹) $A_2$ gloss राजचाटुभिः. १५८. ¹) $A_2$ gloss मातृगुप्तः. १५९. ¹) Thus corr. by $A_2$ from $A_1$ अनिर्विण्णो.

अन्नं ग्लानस्य भैषज्यं निर्विण्णस्य विनोदनम् । श्रान्तस्य वा क्रमच्छेदं को विदध्यादसंपदः ॥१६४॥

165 नास्मै चिन्तामणिं दद्यां नामृतं वा निवेदितः । मया वत्सरमेतावद्व्यामूढेन परीक्ष्यते ॥१६५॥

तदमुष्य गुणित्वस्य तीव्रसेवाश्रमस्य च । प्रतिपत्त्या कतमया तावदानृण्यमाप्नुयाम् ॥१६६॥

इति चिन्तयतस्तस्य राज्ञस्तं सेवकं प्रति । स्वप्रसादोचिता काचित्सत्यभावैव सत्क्रिया ॥१६७॥

ततः प्रावर्तत स्फारनीहारलवशालिभिः । दहन्निवाङ्गं प्रालेयपवमानैर्हिमागमः ॥१६८॥

संततध्वान्तमिषतस्तीव्रशीतवशीकृताः । आशाश्चकाशिरे नीलनिचोलाच्छादिता इव ॥१६९॥

170 शीतार्त्या द्युमणावौर्वदहनोष्माभिलाषतः । द्रुतं यातीव जलधिं दिनानि लघुतां ययुः ॥१७०॥

अथ दीपोज्ज्वले धाम्नि लसद्दीप्रहसन्तिके । कदाचिन्नृपतिर्दैवादर्धरात्रे व्यबुध्यत ॥१७१॥

स हेमन्तानिलैर्भूरिझांकारपरुषैः पुरः । दीपान्प्रकम्पितानीषच्छिष्टार्चिषो दृष्टवान् ॥१७२॥

तानुज्ज्वलयितुं भृत्यानन्विष्यन्नभ्यधात्ततः । यामिकेषु बहिः सज्जः को वर्तत इति स्फुटम् ॥१७३॥

सुप्तसुप्तेषु सर्वेषु वाक्यकस्यान्तरात्ततः । राजन्नयमहं मातृगुप्त इत्यशृणोद्वचः ॥१७४॥

175 प्रविशेति स्वयं राज्ञा दत्तानुज्ञस्ततो गृहम् । लक्ष्मीसांनिध्यरम्यं तदपृष्टोऽन्यैर्विवेश सः ॥१७५॥

दीपानुज्ज्वलयेत्युक्तो निष्पाद्य चतुरैः पदैः । बहिर्यियासुरूचेऽयं क्षणं तिष्ठेति भूभुजा ॥१७६॥

स भयद्विगुणीभूतशीतकम्पः प्रभोः पुरः । किं स्विद्वक्ष्यतीति विमृशन्नातिदूरेऽभ्युपाविशत् ॥१७७॥

अथ पप्रच्छ भूपालः कियत्यस्ति निशेति तम् । सोऽभ्यधादेव यामिन्या यामः सार्धोऽवशिष्यते ॥१७८॥

ततो भूभृदुवाचैनं कथं सम्यङ्निशाक्षणः । त्वयावधारितो निद्रा कथं नाभूच्च ते निशि ॥१७९॥

180 अथ कृत्वा क्षणाच्छ्लोकमेतं तं स व्यजिज्ञपत् । अवस्थावेदनादाशां दैन्यं वा स्वकमुज्झतः ॥१८०॥

शीतेनोद्धूषितस्य माषशिमिवच्चिन्तार्णवे मज्जतः शान्ताग्निं स्फुटिताधरस्य धमतः क्षुत्क्षामकण्ठस्य मे ।
निद्रा क्वाप्यवमानितेव दयिता संत्यज्य दूरं गता सत्पात्रप्रतिपादितेव वसुधा न क्षीयते शर्वरी ॥१८१॥

तदाकर्ण्य महीपालः साधुवादैः परिभ्रमम् । अभिनन्द्य कवीन्द्रं तं पूर्वस्थाने व्यसर्जयत् ॥१८२॥

अचिन्तयच्च धिङ्मां यः सगुणात्खिन्नचेतसः । दुःखोत्तप्तं वचः शृण्वन्नेवमेवाधुना स्थितः ॥१८३॥

निरर्थकान्साधुवादानन्यस्येव विदन्मम । अयमज्ञातहृदयो दुःखमास्ते ध्रुवं बहिः ॥१८४॥

185 चिरं चिन्तयतो यत्नात्सदृशीमस्य सत्क्रियाम् । देयं महार्हमद्यापि न किंचित्प्रतिभाति मे ॥१८५॥

अथ वास्त्येव सूक्तेन स्मारितोऽस्म्यधुना यथा । वर्तते राजरहितं काम्यं कश्मीरमण्डलम् ॥१८६॥

पात्रायास्मै मही तस्मात्सा मया प्रतिपाद्यते । अवधीर्य महीपालान्महतोऽप्यर्थनापरान् ॥१८७॥

इति निश्चित्य चतुरं क्षपायामेव पार्थिवः । गूढं व्यसर्जयद्दूतान्काश्मीरीः प्रकृतीः प्रति ॥१८८॥

आदिदेश च तान्यो वो दर्शयेच्छासनं मम । मातृगुप्ताभिधो राज्ये निःशङ्कं सोऽभिषिच्यताम् ॥१८९॥

190 अथ दूतेषु यातेषु लेखयित्वा स्वशासनम् । क्ष्मापतिस्तं क्षपाशेषे कृतकृत्योऽस्यथाह्वयत् ॥१९०॥

---

१६५. [1]) $A_3$ gloss अनेन इत्यर्थः. १६६. [1]) $A_3$ gloss सत्क्रियया. १६७. [1]) $A_3$ gloss चित्तविषयं न गता इत्यर्थः. १७१. [1]) $A_3$ gloss हसन्तिका मन्नाधिका. १७३. [1]) $A_3$ gloss रात्रिजागरेषु पुरुषेषु. १७४. [1]) $A_2$ सप्तदृष्टो. १७६. [1]) Thus corr. by $A_3$ from $A_1$ °रूचे च. १८०. [1]) $A_3$ gloss अवस्थायाः आवेदनं तस्मात्. १८१. [1]) $A_3$ gloss सत्पात्रेभ्यो दत्ता. १८८. [1]) $A_3$ gloss सचिवान् प्रति.

मातृगुप्तस्तु नृपतेः संलापमपि निष्फलम् । अवगम्य गृहीतनैराश्यस्तत्रकार इवाभवत् ॥१९१॥
अस्मदर्थे च कर्तव्यं कृतं शान्तोद्य संशयः । अद्यापि शापिकाक्षयकारिण्याम्यधुना सुखम् ॥१९२॥
गतानुगतिकत्वेन कोऽयमासीन्मम भ्रमः । जनप्रवादात्सेव्यत्वं येनास्य ज्ञातवानहम् ॥१९३॥
क्षुत्क्षामाः पवनं सरीसृपगणाः प्रस्थापिता भोगिनो गात्रभृङ्गनिवारका निगदिता विस्तीर्णकर्णा गजाः ।
यथाभ्यन्तरसंभृतोष्मविकृतिः प्रोक्तः शमी स द्रुमो लोकेनेति निरर्गलं प्रलपता सर्वं विपर्यासितम् ॥१९४॥
अथ वा विद्यते मुग्ध न काप्यनभिगम्यता । लक्ष्मीप्रणयिनो येन कृताः प्रणयिनां गृहाः ॥१९५॥ 195
त्यागिनो निष्कलङ्कस्य को दोषोऽस्य महीपतेः । ममापुण्यं तु तद्विन्द्यां श्रेयःप्रतिबन्धकम् ॥१९६॥
रत्नोज्ज्वलाः प्रविकिरंल्लहरीः समीरैरब्धिः क्षिपेत यदि तत्तटाभिमुख्यः ।
दोषोऽर्थिनः स खलु भाग्यविपर्ययाणां[1] दातुर्मनागपि न तस्य तु दातृतायाः ॥१९७॥
उत्तानफललुब्धानां वरं राजोपजीविनः । न तु तत्स्वामिनस्तीव्रपरिक्लेशैः फलन्ति ये ॥१९८॥
तिष्ठन्ति ये पशुपतेः किल पादमूले संप्राप्यते झटिति तैर्नहि भस्मनोऽन्यत् ।
ये तन्नृपस्य तु समुज्ज्वलशातकुम्भप्राप्त्या न कानि सुदिनानि सदैव तेषाम् ॥१९९॥
चिन्तयन्नपि पश्यामि न कंचिद्दोषमात्मनः । यातो विरक्तिं यं ज्ञात्वा सेव्यमानोऽप्ययं नृपः ॥२००॥ 200
अथ वानादृतोऽन्येन संप्राप्तोऽन्तिकमाप्नुयात् । कः फलेनाभिसंबन्धं गतानुगतिकात्प्रभोः ॥२०१॥
अन्तर्ये सततं लुठन्त्यगणितास्तानेव पायोधरैरासारापतनस्फुरत्कलरवैरालिङ्ग्य गृह्णत्यसौ ।
व्यक्तं मौक्तिकरत्नतां जलकणान्संप्रापयत्यम्बुधिः प्रायोऽन्येन कृतादरो लघुरपि प्राप्तोऽर्च्यते[2] स्वामिभिः ॥२०२॥
इदं संचिन्तयन्सोऽभूत्सेव्ये तस्मिन्निरादरः । खिन्नस्य हि विपर्येति तत्त्वज्ञस्यापि शेमुषी ॥२०३॥
प्रभातायां विभावर्यामथास्थानस्थितो नृपः । आकार्यतां मातृगुप्त इति क्षत्तारमादिशत् ॥२०४॥
ततः प्रधावितानेकप्रतीहारप्रवेशितः । प्रविवेश महीभर्तुस्त्यक्ताश इव सोऽन्तिकम् ॥२०५॥ 205
तस्मै कृतप्रणामाय मुहूर्तादेव पार्थिवः । भ्रूसंज्ञितेन व्यतरल्लेखं लेखाधिकारिणा ॥२०६॥
स्वयं च तमुवाचाङ्ग कश्मीरान्वेत्सि किं भवान् । गत्वा तत्राधिकारिभ्य एतच्छासनमर्प्यताम् ॥२०७॥
स शापितोऽस्मद्देहेन यो लेखं वाचयेत्पथि । संविधेया प्रयत्नेन विस्मर्तव्या न जातु चित् ॥२०८॥
अविज्ञाताशयो राज्ञस्तामाज्ञां क्लेशशङ्कितः । सोऽबुद्ध दहनज्वालां न तु रत्नाङ्कुरद्युतिम् ॥२०९॥
यथादेशस्तथेत्युक्त्वा मातृगुप्ते विनिर्गते । निर्गर्वः पूर्ववद्राजा तस्थावाप्तैः सहालपन् ॥२१०॥ 210
अथाक्लेशोचितं क्षाममपाथेयमबान्धवम् । दृष्ट्वा यान्तं मातृगुप्तं निनिन्देति नृपं जनः ॥२११॥
अहो नरेश्वरस्येयं यत्किंचनविधायिता । पृथग्जनोचिते कर्मण्यर्हतो निदधाति यः ॥२१२॥
दुराशया धृतक्लेशं सेवमानमहर्निशम् । ध्रुवं क्लेशार्हमेवैनं ज्ञातवानबुधो नृपः ॥२१३॥
तपार्थं यं पुरस्कृत्य सेवते सेवकः प्रभुम् । अनन्तरश्च तस्यैव योग्यं तं किल मन्यते ॥२१४॥

१९७ ¹) $A_2$ °पर्ययेण. १९८. ¹) $A_2$ glosses राजोपजीविनः पुरुषाः, तत्स्वामिनः तेषां स्वामिनः कर्तारः न वरं. २०२. ¹) Thus corr. by later hand from $A_1$ लुठन्ति च°.—²) Thus $A_2$; $A_1$ °र्थते. २०४. ¹) $A_1$ gloss द्वारस्थं. २०८ ¹) $A_2$ gloss विस्मृता. २११. ¹) Thus corr. by later hand from $A_1$ अथ क्ले°. २१२. ¹) $A_2$ gloss पृथग्जनः. २१४. ¹) Doubtful emendation; on account of an ink blot only the following is legible in the handwriting of $A_1$: तपाथ--- दकृत्य. $A_4$ reads तपार्थं पुरस्कृत्य; this reading is found also in R. G and Edd. read तपार्थं यं.

सुखार्थी नागारिप्रतिभयवशादम्भस्सु ध्रुवं जहौ शेषस्तल्पीकृततनु निवेश्यासुररिपुम् ।

215 यतस्तेनामुष्मिन्नधिगतवता क्लेशसहतां भ्रमादाधि न्यस्तं निरवधि धराभारवहनम् ॥२१५॥

अथमेतद्गृहीतेषु गुणवत्सु गुणाधिकम् । आत्मानं गुणवान्पश्यन्नास्थयैनमशिश्रियत् ॥२१६॥

अनन्तरज्ञः कोन्योस्माद्गुणान्दर्शयतेधिकान् । अस्मै गुणवते पूजां यश्चकार किलेदृशीम् ॥२१७॥

यो नानाद्युतिमत्पदार्थरसिकोसारेपि शक्रायुधे समेभा स विलोक्य बर्हमिह मे किं किं न कुर्यात्प्रियम् ।

इत्याविष्कृतबर्हराजि नटते यो बर्हिणोम्भोलवानाम्यन्मुञ्चति तं विहाय जलदं कोन्योस्ति शून्याशयः ॥२१८॥

गच्छतो मातृगुप्तस्य निर्दैन्यस्यैव वर्त्मसु । नाभूदाश्चर्यमाहात्म्याद्विकल्पः कोपि चेतसि ॥२१९॥

220 अहंपूर्विकयोद्यद्भिर्निमित्तैः शुभशंसिभिः । स वितीर्णकरालम्ब इव न श्रममाददे ॥२२०॥

अपश्यत्स फणाकोटौ खञ्जरीटमहेः पथि । स्वप्ने प्रासादमारुह्य स्वं चोल्लङ्घितसागरम् ॥२२१॥

अचिन्तयच्च शास्त्रज्ञो निमित्तैः शुभशंसिभिः । एतैर्भूभर्तुरादेशो ध्रुवं मे स्याच्छुभावहः ॥२२२॥

फलं मम तनीयोपि कश्मीरेषु भवेद्यदि । अनर्घदेशमाहात्म्यात्किं किं नातिशयेत तत् ॥२२३॥

अकृच्छ्रलङ्घ्याः पन्थानो बह्वभातिथयो गृहाः । उपानमन्नच्छतोस्य सत्क्रियाश्च पदे पदे ॥२२४॥

225 इत्थं विलङ्घिताध्वा स लोलानोकहशाद्वलम् । मङ्गल्यदधिपात्राभं ददर्शाग्रे हिमाचलम् ॥२२५॥

सरलस्यन्दसुभगा गङ्गाशीकरवाहिनः । प्रत्युद्ययुस्तं मरुतः पाल्यायाः संस्तुता भुवः ॥२२६॥

क्रमवर्ताभिधाने स प्रदेशे प्राप्तवांस्ततः । ठक्कं काम्बुवनामानं योध शूरपुरे स्थितः ॥२२७॥

नानाजनपदाकीर्णे स्थाने तत्राथ शुश्रुवान् । काश्मीरिकान्महामात्यान्स्थितान्केनापि हेतुना ॥२२८॥

ततोपनीतप्राग्वेषः प्रावृतो धवलांशुकैः । स जगामान्तिकं तेषां दातुं नृपतिशासनम् ॥२२९॥

230 तं प्रयान्तं समुद्यद्भिः शकुनैः सूचितोदयम् । पान्थाः केप्यन्वयुर्द्रष्टुं निमित्तानां फलोद्गमम् ॥२३०॥

श्रुत्वाथ विक्रमादित्यदूतः प्राप्त इति श्रुतम् । द्वाःस्थाः काश्मीरमन्त्रिभ्यस्तमासन्नं न्यवेदयन् ॥२३१॥

आगच्छत प्रविशतेत्युच्यमानोथ सर्वतः । स तान्समस्तसामन्तानासत्सदानिवारितः ॥२३२॥

यथाप्रधानं सचिवैर्विहितोचितसत्क्रियः । ततः परार्ध्यमध्यास्त तन्निदर्शितमासनम् ॥२३३॥

कृतार्हणैरथामात्यैराज्ञां पृष्टो महीभुजः । शनैस्तच्छासनं तेभ्यो लज्जमान इवार्पिपत् ॥२३४॥

235 तेभिवन्द्य प्रभोर्लेखमुपांशु मिलितास्ततः । उन्मुच्य वाचयित्वैतमश्रौचान्विनयान्विताः ॥२३५॥

मातृगुप्त इति श्लाघ्यं भवतामेव नाम किम् । एवमेवैतदित्यूचे सोपि तान्विहितस्मितः ॥२३६॥

कः कोत्र सांनिधातॄणामित्यभूयत वाक्ततः । राज्याभिषेकसंभारो दृश्यते स्म च संभृतः ॥२३७॥

ततः कलकलोत्तालभूरिलोकसमाकुलः । प्रदेशः क्षणमात्रेण सोभूत्क्षुभ्यन्निवार्णवः ॥२३८॥

अथ प्राङ्मुखसौवर्णभद्रपीठप्रतिष्ठितः । संनिपत्य प्रकृतिभिर्मातृगुप्तोभ्यषिच्यत ॥२३९॥

240 तस्य विन्ध्यतटव्यूढवक्षसः परिनिर्लुठत् । सशब्दमभिषेकाम्बु रेवास्रोत इवाबभौ ॥२४०॥

अथ स्नातानुलिप्ताङ्गं सर्वाङ्गामुक्तभूषणम् । व्यजिज्ञपंस्तं राजानं क्रान्तराजासनं प्रजाः ॥२४१॥

---

२१७. ¹) A₂ gloss मूर्खपुरुषः. २१८. ¹) A₃ विलोक्य जलदमित्यन्वायर्थे. २२५. ¹) Thus A₁; corr. by A₂ into °नीकह°, as also in G R. २२६. ¹) A₁ gloss पाल्याया इति प्रभूभविष्यता तेनैवरुवार्थः. २३५. ¹) A₁ gloss परैर्न श्रूयते यथा उपांशु परिकीर्तितम् A₃ adds मन्त्रकरणे. २४०. ¹) Thus A₂; A₁ °सेव, corr. by later hand into °स्रव.

अर्थितेन स्वयं दातुं विक्रमादित्यभूभुजा । निर्दिष्टः स्वयमानस्त्वं शाधि नः पृथिवीमिमाम् ॥२४२॥
मण्डलानि विलम्ब्यन्ते[1] येनानेन प्रतिक्षणम् । मा भंक्त्वा मण्डलं राजन्विलम्ब्यं[2] तदिदं परैः ॥२४३॥
कर्मभिः स्वैरयातस्य जन्मनः पितरौ यथा । राज्ञां[1] तथान्ये राज्यस्य प्रभुतायैव कारणम् ॥२४४॥
इत्थं स्थितेपरं कंचित्त्वदीयोस्मीति शंसत । न नेयो भवता राजन्नयमात्मा च लाघवम् ॥२४५॥ 245
इति तैरभ्यनुक्तोपि संस्मरन्स्वामिसत्क्रियाम् । मातृगुप्तो[1] महीपालः क्षणमासीत्कृतस्मितः ॥२४६॥
दानेन सुचिरं कुर्वञ्जयराज्योर्जितेन सः । तथैव मङ्क्षूदयं तद्धो निरवर्तयत् ॥२४७॥
पुरप्रवेशायान्येद्युरर्थ्यमानोथ मन्त्रिभिः । अद्भुतप्राभृतं दूतं राज्यवार्तां व्यसर्जयत् ॥२४८॥
देशौचित्यानुसारेण स्पर्धामिव च तां विदन् । स्वामिनो मनसि प्रीतः सागसं स्वममन्यत ॥२४९॥
अथाहूयापराम्भूत्यान्कर्तुं सेवास्मृतिं प्रभोः । अल्पार्घाण्यपि सारम्याणि[1] प्राहिणोत्प्राभृतानि सः ॥२५०॥ 250
प्रशमाम्यान्गुणांस्तस्य स्मरन्पर्युत्सुकोमनः । स्वयं लिखित्वा श्लोकं च स्वकमेकं व्यसर्जयत् ॥२५१॥
नाकारमुद्वहसि नैव विकत्थसे त्वं दित्सां न सूचयसि मुञ्चसि सत्फलानि ।
निःशब्दवर्षणमिवाम्बुधरस्य राजन्संलक्ष्यते फलत एव तव[1] प्रसादः ॥२५२॥
ततः प्रविश्य नगरं सैन्यैः पिहितदिक्तटैः । क्रमागतामिव महीं यथावत्पर्यपालयत् ॥२५३॥
त्यागे वा पौरुषे वापि तस्यौचित्योन्नतात्मनः[1] । क्ष्माभुजस्तर्कुकस्येव[2] नाभूत्परिमितेच्छता ॥२५४॥
बहुं यज्ञान्भृतोद्योगस्त्यागी विततदक्षिणाम् । पशुबन्धमनुध्याय करुणाकूणितो[1]भवत् ॥२५५॥ 255
अमारमादिदेशाथ यावद्राज्यं स्वमण्डले । पूर्णीकृत्य सुवर्णादि प्रददौ च करम्भकम् ॥२५६॥
करम्भके कीर्यमाणे मातृगुप्तेन भूभुजा । वैतृष्ण्यमुज्झितलोभो न को नाम व्यधेयत ॥२५७॥
गुणी च दृष्टकष्टश्च वदान्यश्च[1] स पार्थिवः । विक्रमादित्यतोप्यासीदभिगम्यः शुभार्थिनाम् ॥२५८॥
विशेषज्ञतया तस्य श्लाघ्यता दूरभीकृताः । लक्ष्मीविलासाः क्ष्माभर्तुरशोभन्त मनीषिषु ॥२५९॥
हयग्रीववधं मेण्ठस्तदग्रे दर्शयन्नवम्[1] । आसमाप्ति ततो नापत्साध्वसाध्विति वा वचः ॥२६०॥ 260
अथ प्रथयितुं तस्मिन्पुस्तकं प्रस्तुते न्यधात्[1] । लावण्यनिर्वाणभिया तदधः स्वर्णभाजनम् ॥२६१॥
अन्तरज्ञतया तस्य तादृश्या कृतसत्कृतिः । भर्तृमेण्ठः कविर्मेने पुनरुक्तं श्रियोर्पणम् ॥२६२॥
स मातृगुप्तस्वाम्याख्यं निर्ममे मधुसूदनम् । कालेनादत्त यद्ग्रामान्मम्मः स्वसुरसद्मने[1] ॥२६३॥
इत्यासादितराज्यस्य शासतः क्ष्मां क्षमापतेः । त्रिमासोना ययुस्तस्य चैकाहाः पञ्च वत्सराः ॥२६४॥
कृतार्थतां तीर्थतोयैराजन्येयो[1]नयन्पितॄन् । जातं तादृशमश्रौषीत्स्वस्मिन्देशे पराक्रमम्[2] ॥२६५॥ 265
पितृशोकार्द्रता तस्य क्रोधेनान्तरधीयत । तरोरिवार्कतापेन नैशाम्बुलवसिक्तता ॥२६६॥
श्रीपर्वते पाशुपतव्रतिवेषसमागतम्[1] । आचख्यावश्वपादाख्यः सिद्धः कन्दाशनं चरन् ॥२६७॥

---

२४३. [1]) [2]) $A_1$ indicates the *vv. ll.* विलीयन्ते and विलम्बं. २४४. [1]) Thus $A_3$; $A_1$ राज्ञा. २४६. [1]) Thus corr. by later hand from $A_1$ °गुप्तम°; G R as above. २४७. [1]) $A_3$ gloss अस्वपाइवाद. २५०. [1]) Thus $A_1$; $A_3$ स्वारम्याणि, also G R; Edd. सारयाणि. २५२. [1]) तव supplied by $A_3$. २५४. [1]) Thus corr. by later hand from $A_1$ °चित्यौज°.—[2]) $A_3$ gloss याचकस्येव. २५५. [1]) Thus A; G R °कूणितो; Edd. °कूर्णितो. २५८. [1]) Emended: A R G वदान्यस्य. २६०. [1]) $A_3$ gloss काव्यं. २६१. [1]) $A_3$ राजाभः. २६३. [1]) $A_1$ gloss स्वदेवगृहाय. २६५. [1]) $A_3$ gloss प्रवरसेनः.—[2]) $A_3$ पराभवम्. २६७. [1]) $A_3$ gloss प्रवरसेनं.

जन्मान्तरे लब्धसिद्धिस्त्वामस्त्युपरि साधकम् । आक्रामपृष्ठे राज्यार्थमभिलाषस्तु तमभवत् ॥२६८॥
सयत्नं तव कर्तुं तन्मनोरथममन्यथा । अथ मामित्थमादिक्षत्स्मरपारमगशेखरः ॥२६९॥
270 गणोऽयं मामकः सिद्धो यत्तस्योपरि साधकः । जन्मान्तरेऽस्य राज्येच्छां कुर्यामहमनन्यथा ॥२७०॥
भाव्यं भवस्तद्भवतो भगवान्व्यक्तदर्शनः । साफल्यं नेष्यतीत्येवमभिधाय तिरोदधे ॥२७१॥
साम्राज्येच्छोः समामेकां तव तस्य तपस्यतः । लब्धस्मृतिः सिद्धगिरा प्रददौ दर्शनं शिवः ॥२७२॥
अतिथेयं समादिष्टवाञ्छितार्थसमर्पणम् । स जगद्विजयोचितं नरेन्द्रत्वमयाचत ॥२७३॥
उपेक्ष्य मोक्षं किं क्ष्माभृद्भोगानिच्छसि भङ्गुरान् । इति जिज्ञासुना भाव्यं शंभुना सोऽभ्यधीयत ॥२७४॥
275 स तं बभाषे शंभुं त्वां बुद्ध्वा व्याजतपोधनम् । अभ्यर्थामिदमज्ञस्त्वं न स देवो जगद्गुरुः ॥२७५॥
महान्तो ह्यर्थिताः स्वल्पं फलन्त्यल्पेतरं स्वयम् । उदन्यया वदान्योऽब्दो दुग्धाब्धिं स पयोधिने ॥२७६॥
अस्य वैकल्यकैवल्यलाभनिश्चलचेतसः । नो वेत्स्यभिजनस्याभिभूतिं मर्मव्यथावहाम् ॥२७७॥
जगत्परिवृढः प्रीतोऽस्मीतीत्थं सफलार्थनम् । कृत्वा प्रादुष्कृतवपुस्ततो भूयोऽभ्यभाषत ॥२७८॥
मज्जतो राज्यसौख्येषु सायुज्यायाभिवृत्तिकाम् । महाशयाश्वपादस्ते संज्ञां काले करिष्यति ॥२७९॥
280 इत्युक्त्वान्तर्हिते देवे स कृतव्रतपारणः । आगच्छदश्वपादं तमापृच्छ्याभिमतां भुवम् ॥२८०॥
ततो विदितवृत्तान्तो मातृगुप्ताभिषेचनात् । निषिध्य सचिवान्यातानमात्यानब्रवीद्वचः ॥२८१॥
विक्रमादित्यमुत्सिक्तमुच्छेत्तुं यतते मनः । मातृगुप्तं प्रति न नो रोषेणारूषितं मनः ॥२८२॥
अप्रियैरपि निष्पिष्टैः किं स्यात्क्लेशासहिष्णुभिः । ये तदुन्मूलने शक्ता जिगीषा तेषु शोभते ॥२८३॥
यान्त्यञ्जसाभ्युदयं क्षिपन्ति शशिनः कोऽन्यस्ततोऽसंमतस्तान्निर्माथिकरीन्द्रदन्तदलने यन्नाम कोऽयं नयः ।
सामर्थ्यप्रथनाय विक्रमसमैः स्पर्धा विधूयोज्झिता ये तेषु प्रभवन्ति तत्र जहति व्यक्तं प्ररूढा रुषः ॥२८४॥
285 त्रिगर्तानां भुवं जित्वा स व्रजन्नथ भूपतिः । विक्रमादित्यमशृणोत्कालधर्ममुपागतम् ॥२८५॥
तस्मिन्नहनि भूभर्त्रा शोकाग्निःश्वसतानिशम् । नाशायि नाशि नास्वापि स्थितेनावनताननम् ॥२८६॥
अन्येद्युर्भुवमुत्सृज्य कश्मीरेभ्यो विनिर्गतम् । शुश्राव मातृगुप्तं स नातिदूरे कृतस्थितिम् ॥२८७॥
कैश्चिन्निर्वासितो मा स्विन्मदीयैरिति शङ्कितः । ययौ प्रवरसेनोऽस्य पार्श्वं मितपरिच्छदः ॥२८८॥
कृतार्हणं सुखासीनं ततः पप्रच्छ तं शनैः । विनयावनतो राजा राज्यत्यागस्य कारणम् ॥२८९॥
290 बभाषे तं क्षणं स्थित्वा सं निःश्वस्य विहस्य च । मतः स सुकृती राजन्येन भूमिभुजो वयम् ॥२९०॥
यावन्मूर्धि रवेः पादास्तावद्द्योतयते दिशः । द्योतते नान्यथा किंचिद्धाम्नैव तपनोपलः ॥२९१॥

---

२६८. ¹) तस्य supplied by A₂ in space left by A₁. २६९. ¹) ²) A₂ glosses आदिदेश and ईश्वरः. २७१. ¹) A₂ gloss अश्वपादः. २७२. ¹) A₂ gloss प्रवरसेनस्य.—²) Thus A₁; corr. by later hand into °स्मृतेः, as found also in R. २७६. ¹) A₂ gloss स्वल्पमर्थिता बहु फलन्ति महान्तः.—²) A₂ gloss उदन्यया पिपासया.—³) Emended : A R G वदन्यो.—⁴) A₂ gloss शिवः. २७७. ¹) A₂ gloss पराभवं. २७८. ¹) A₂ gloss प्रभुः.—²) Thus corr. by A₂ from A₁ स फलार्थिनम्. २७९. ¹) Thus A₁; corr. by later hand into सांयुग्या°. २८०. ¹) A₂ अगच्छ°. २८१. ¹) स supplied by A₂ in space left by A₁.—²) A₂ gloss निवार्य. २८४ ¹) A₂ gloss तेभ्यः.—²) A₂ gloss वीर्येः. २८६. ¹) Emended ; A निश्वस°. २८९. ¹) A₂ gloss प्रवरसेनः. २९०. ¹) A₂ gloss मातृगुप्तः.—²) Thus corr. by later hand from A₁ निश्वस्य.—³) A₂ gloss विक्रमादित्यः. २९१. ¹) Thus A₁; corr. by A₂ into द्योतनैवान्यथा किं न which reading is found also in G R Edd.—²) A₂ gloss सूर्यकान्तः.

अथ राजाभ्यधात्केन राजन्नपकृतं तव । यत्प्रत्यपचिकीर्षायै तमीशमनुशोचसि ॥२९२॥
मातृगुप्तस्ततोवादीत्कोपस्मितसिताधरः । अस्मानुत्सहते कश्चिन्नापकर्तुं बलाधिकः ॥२९३॥
नयता गण्यतामस्माननन्तरक्षेन तेन हि । न भस्मनि हुतं सर्पिर्नोप्तं वा सस्यमूषरे ॥२९४॥
उपकारं स्मरन्तस्तु कृतज्ञस्यवशंवदाः । पदवीमुपकर्तॄणां यान्ति निश्चेतना अपि ॥२९५॥ 295
निर्वाणमनुनिर्याति तपनं तपनोपलः । इन्दुमिन्दुमणिः किं च क्षुभ्यन्तमनुक्षुभ्यति ॥२९६॥
पुण्यां वाराणसीं गत्वा तस्मात्क्रमसुखोन्मुखः । इच्छामि सर्वसंन्यासं कर्तुं द्विजजनोचितम् ॥२९७॥
मणिदीपमिवेशं तमन्तरेणान्धकारिताम् । बिभेमि द्रष्टुमप्युर्वीं भोगयोगे कथैव का ॥२९८॥
इत्यैश्वर्यनिषेधस्तस्य वाणीमाकर्ण्य विस्मितः । धीरः प्रवरसेनोपि व्याजहारोचितं वचः ॥२९९॥
सत्यं विश्वंभरा देवी भूपते रत्नसूरियम् । उत्पन्नया द्योतते धन्यैः कृतज्ञैर्या भवादृशैः ॥३००॥ 300
अन्तरज्ञतया श्लाघ्यः कोन्यस्तस्मान्महीभुजः । इत्थं जडे जगत्येकस्त्वां यथावद्विवेद यः ॥३०१॥
चिरं खलु खिलीभूताः कृतज्ञत्वस्य वीथयः । धीर त्वयैव न स्यात्तु संचारो यदि दर्श्यते[2] ॥३०२॥
पाकश्रेष्ठ क्षुभस्य मेघ तदसौ प्रागेव नादात्किमु स्वार्थश्लेष मयास्य किं न भजते दीनान्स्वबन्धूनयम् ।
मत्तो रन्ध्रदृशोस्य भीर्यदि न तत्क्षुब्धः किमेष त्यजेदित्यन्तः पुरुषाधमः कलयति प्रायः कृतोपक्रियः ॥३०३॥
अत्युदात्तगुणेष्वेषा कृतपुण्यैः प्ररोपिता । शतशाखीभवत्येव यावन्मात्रापि सत्क्रिया ॥३०४॥
तत्त्वं गुणवतामग्र्यस्तत्त्वज्ञैश्चाभिनन्दितः । परीक्षितो मणिरिव व्यक्तं बहुमतः सताम् ॥३०५॥ 305
तस्मादनुगृहाणास्मान्मा स्म स्याक्षीर्नरेन्द्रताम् । ममापि ख्यातिमायातु गुणवत्पक्षपातिता ॥३०६॥
पूर्वं तेनाथ चरमं मयापि प्रतिपादिताम् । भवान्प्रतिप्रणयिनीं विदधातु पुनर्भुवम् ॥३०७॥
अत्याश्चौदार्यचर्यस्य श्रुत्वेति नृपतेर्वचः । कृतस्मितो मातृगुप्तः शनैर्वचनमब्रवीत् ॥३०८॥
यान्यक्षराण्यन्तरेण वाच्यं वक्तुं न पार्यते । का गतिस्तदुपादाने मर्यादोल्लङ्घनं विना ॥३०९॥
अतः परुषमप्यद्य किंचिदेव मयोच्यते । अत्याजार्जवमप्येतदार्यत्वमवधीर्यते ॥३१०॥ 310
सर्वः स्मरति सर्वस्य प्रागवस्थासु लाघवम् । आत्मैव वेत्ति माहात्म्यं वर्तमाने क्षणे पुनः ॥३११॥
पूर्वावस्था मदीया ते त्वदीया या च मे हृदि । ताभ्यां विमोहितावावां न विद्मोन्योन्यमाशयम् ॥३१२॥
राजा भूत्वा कथं मादृक्प्रतिगृह्णातु संपदः । कथमेकपदे सर्वमौचित्यं परिमार्जतु ॥३१३॥
असाधारणमौदार्यमाहात्म्यं तस्य भूपतेः । भोगमात्रकृते मादृक्किं साधारणतां नयेत् ॥३१४॥
अपि च स्पृहयालुः स्यां भोगेभ्यो यदि भूपते । ध्रियमाणेभिमाने मे केन ते[1] विनिवारिताः ॥३१५॥ 315
यन्ममोपकृतं तेन तद्विना प्रत्युपक्रियाम् । जीर्णमेवाधुनाङ्गेषु प्रभवत्येष निश्चयः ॥३१६॥
या गतिर्भूभुजोमुष्य मया तामनुगच्छता । पात्रापात्रविवेकृत्वख्यातिर्नेया प्रकाश्यताम् ॥३१७॥
एतावत्येव कर्तव्ये यातेस्मिन्कीर्तिशेषताम् । भोगमात्रपरित्यागाद्विवध्यां सत्यसंधताम् ॥३१८॥

२९२. [1]) Thus corr. by later hand from A₁ °अस्मत्सुप°. २९४. [1]) A₂ gloss तेन हर्षदेवेन. २९५. [1]) A₂ °वशीकृताः. २९८. [1]) A₂ gloss विक्रमादित्यं. ३०१. [1]) A₂ gloss हर्षदेवात्. ३०२. [1]) A₂ gloss वीथिषु.—[2]) दर्श्यते supplied by A₂ in space left by A₁. ३०७. [1]) Thus A₁; A₂ °प्यादिश्य°. ३०९. [1]) Thus corr. by A₂ from A₁ यान्यक्षरा°. ३१०. [1]) This verse has been omitted by A₁ and supplied in margin by A₁; found in R G. ३१५. [1]) A₂ gloss ते भोगा इत्यर्थः. ३१८. [1]) A₂ gloss विक्रमादित्ये.

इत्युक्त्वा विरते तस्मिञ्जगाद जगतीपतिः । त्वदीया न मया स्पृश्यास्त्वयि जीवति संपदः ॥३१९॥

320 अथ वाराणसीं गत्वा कृतकाषायसंग्रहः । सर्वं संन्यस्य सुकृती मातृगुप्तोऽभवद्यतिः ॥३२०॥

राजा प्रवरसेनोऽपि काश्मीरोत्पत्तिमञ्जसा । निखिलां मातृगुप्ताय प्रादिशद्दृढनिश्चयः ॥३२१॥

स हठापतितां लक्ष्मीं भिक्षाभुक्प्रतिपादयन् । सर्वार्थिभ्यः कृती वर्षान्दश प्राणानधारयत् ॥३२२॥

अन्योन्यं साभिमानानामन्योन्यौचित्यशालिनाम् । त्रयाणामपि[1] वृत्तान्त एष त्रिपथगापयः ॥३२३॥

राजा प्रवरसेनोऽथ नमयन्नवनीधरान् । अकृच्छ्रलङ्घ्याः ककुभो वृद्धस्य यशसो व्यधात् ॥३२४॥

325 पीताब्धिर्लङ्घितोर्वीभृत्कुम्भयोनिरिवानयत् । तस्य प्रतापः प्रभवन्भुवनानि[1] प्रसन्नताम् ॥३२५॥

शुष्यत्तमालपत्राणि शीर्णताडीदलानि च । तत्सेनार्णवतीराणि चक्रेऽरिस्त्रीमुखानि च ॥३२६॥

स गङ्गालिङ्गिताङ्गस्य पूर्ववारिनिधेर्व्यधात् । सैन्येभमदनिष्यन्दैः कालिन्दीसंगमश्रियम् ॥३२७॥

रोधस्यपरपयोधेः कटकैः स्फुटविकटैः । चकारोत्पाट्य सौराष्ट्रानसौ राष्ट्रविपाटनम् ॥३२८॥

यशोर्थिनः पार्थिवेषु द्वेषरागबहिष्कृतः । ववृधे धर्मविजयस्तस्य क्षितिशतक्रतोः ॥३२९॥

330 वैरिनिर्वासितं पित्र्ये विक्रमादित्यजं न्यधात् । राज्ये प्रतापशीलं स शीलादित्यापराभिधम् ॥३३०॥

सिंहासनं स्ववंश्यानां तेनाहितहृतं ततः । विक्रमादित्यवसतेरानीतं स्वपुरे पुनः ॥३३१॥

हेतुमुदीर्य[1] विविधानमन्वानं पराजयम् । सप्त वारान्स तत्याज जित्वा मुम्मुनिंभूभुजम्[2] ॥३३२॥

धार्ष्ट्यादथाष्टमे वारे हेतुमाख्यातुमुद्यतम् । धिक्पशुर्बध्यतां सोऽयमित्यूचे नृपतिः क्रुधा ॥३३३॥

अवध्योऽहं पशुत्वेन वीरेत्युक्त्वाभयोत्सुकः । मध्येसभं ननर्तास्य सोऽनुकुर्वन्कलापिनम् ॥३३४॥

335 नृत्तं केकां च शिखिनो[1] दृष्ट्वास्मै द्रविणं नृपः । अभयेन समं प्रादात्तालावचरणोचितम्[2] ॥३३५॥

वसतोऽस्य दिशो जित्वा प्रभुः पैतामहे पुरे । कर्तुं पुरं स्वनामाङ्कं प्रथते स्म मनोरथः ॥३३६॥

रात्रौ क्षेत्रं च लग्नं च दिव्यं ज्ञातुमथैकदा । स वीरो वीरचर्यायां निर्ययौ पार्थिवार्यमा ॥३३७॥

गच्छतः क्ष्मापतेस्तस्य मौलिरत्नाग्रबिम्बितः[1] । बभार तारानिकरो रक्षासर्षपविभ्रमम् ॥३३८॥

अथानन्तचितालोकस्पष्टभीमतटद्रुमाम्[1] । श्मशानप्रान्ततटिनीं पर्यटन्नाससाद सः ॥३३९॥

340 ततस्तस्य सरित्पारे मुक्तसंरावमग्रतः । ऊर्ध्वबाहु महद्भूतं प्रादुरासीन्महौजसः ॥३४०॥

नृपतिस्तस्य दृक्पातैर्ज्वलद्भिः कपिशीकृतः । उल्काज्योतिःकृताश्लेषः कुलाद्रिरिव दिद्युते ॥३४१॥

तमथ प्रतिशब्देन घोरेणापूरयन्दिशः । अभ्यासं विहसन्नुच्चैरुवाच क्षणदाचरः ॥३४२॥

संत्यज्य विक्रमादित्यं सत्त्वोद्रिक्तं च शूद्रकम् । त्वां च भूपाल पर्याप्तं धैर्यमन्यत्र दुर्लभम् ॥३४३॥

वसुधाधिपते वाञ्छासिद्धिस्तव विधीयते । सेतुमेतं समुत्तीर्य पार्श्वमागम्यतां मम ॥३४४॥

345 इत्युदीर्य निजं जानुं रक्षः पारात्प्रसारयत्[1] । तन्महासरितो वारि सेतुसीमन्तितं व्यधात् ॥३४५॥

अङ्गेन रक्षःकायस्य ज्ञात्वा सेतुं प्रकल्पितम् । वीरः प्रवरसेनोऽथ विकोशां क्षुरिकां दधे ॥३४६॥

---

३२३. 1) $A_1$ gloss त्रयाणां विक्रमादित्यमातृगुप्तप्रवरसेनानाम्. ३२५. 1) $A_3$ gloss जलान्यपि. ३३२. 1) $A_3$ gloss प्रवरसेनः.—2) Doubtful emendation: मुंमु has been supplied by $A_3$ in space left by $A_1$; $A_3$ has marked a different division of the words, जित्वाऽमुं । मुनिभूभुजम्, which is also indicated by the interlinear gloss of $A_3$ प्रतापशीलं; C reads मुम्मुनि°. For the name मुम्मुनि see iv. 167; v. 516; viii. 2180 (*C.*).—३३५. 1) $A_3$ gloss शिखिवृद्धा.—2) Thus $A_1$; $A_3$ तालार्थचरणो°. ३३८. 1) Thus $A_3$; $A_1$ °त्नार्क°. ३३९. 1) Thus apparently $A_1$; $A_3$ °चम्.

स तयोत्कृत्य तन्मांसं कृतसोपानपद्धतिः । अतएवाद्य तत्स्थानं क्षुरिकाबलं[1] उच्यते ॥३४७॥
पार्श्वस्थं तं लग्नमुक्त्वा प्रातर्मत्सूत्रपातनम् । दृष्ट्वा पुरं विधेहीति वदन्भूतं तिरोदधे ॥३४८॥
देव्या शारिकयादिष्टेन यक्षेणाधिष्ठिते[1] च सः । ग्रामे शारीटके[2]पश्यत्सूत्रं वेतालपातितम् ॥३४९॥
भक्त्या प्रतिष्ठां प्राक्तस्मिञ्जिगीषौ प्रवरेश्वरम् । जयस्वामी स्वयं पीठे भित्त्वा बन्धमुपाविशत् ॥३५०॥
वेतालावेदितं लग्नं जानतो जगतीभुजा । स्थपतेः स जयाख्यस्य[1] नाम्ना प्रख्यापितोभवत् ॥३५१॥
नगराप्रातिलोम्याय भक्त्या तस्य विनायकः । प्रत्यङ्मुखः प्राङ्मुखतां भीमस्वामी स्वयं ययौ ॥३५२॥
सद्भावश्र्यादिका देव्यस्तेन श्रीशब्दलाञ्छिताः । पञ्च पञ्चजनेन्द्रेण पुरे तस्मिन्निवेशिताः ॥३५३॥
वितस्तायां स भूपालो बृहत्सेतुमकारयत् । ख्याता[1] ततः प्रभृत्येव तादृङ्नौसेतुकल्पना ॥३५४॥
श्रीजयेन्द्रविहारस्य बृहद्बुद्धस्य च व्यधात् । मातुलः स नरेन्द्रस्य जयेन्द्रो विनिवेशनम्[1] ॥३५५॥ 355
बुभोज सिंहलादीन्यो द्वीपान्स सचिवोकरोत् । मोराकनामा मोराकभवनं भुवनाद्भुतम् ॥३५६॥
षट्त्रिंशद्गृहलक्षाणि पुरं तत्प्रथमे पुरा । यस्यास्तां वर्धनस्वामी विश्वकर्मा च सीमयोः ॥३५७॥
दक्षिणस्मिन्नेव पारे वितस्तायाः पुरा किल । निर्मितं तेन नगरं विभक्तैर्युक्तमापणैः ॥३५८॥
ते तत्राभ्रंलिहाः सौधा यानभ्याहत्य दृश्यते । वृष्टिस्निग्धं निदाघान्ते चैत्रे चोत्कुसुमं जगत् ॥३५९॥
तद्विना नगरं कुत्र पवित्राः सुलभा भुवि । सुभगाः सिन्धुसंभेदाः क्रीडावसथवीथिषु ॥३६०॥ 360
दृष्टः क्रीडानगोन्यत्र न मध्येनगरं क्वचित् । यतः सर्वौकसां लक्ष्मीः संलक्ष्या सुपथादिव ॥३६१॥
वैतस्तं वारि वास्तव्यैर्बृहत्तु[1]हिनशर्करम् । ग्रीष्मेप्यह्नि स्ववेश्मामात्क्व ततोन्यत्र लभ्यते ॥३६२॥
प्रतिदेवगृहं कोशास्ते तस्मिन्नर्पिता नृपैः । सहस्रशः शक्यते यैः क्रेतुं भूः सागराम्बरा ॥३६३॥
पुरे निवसतस्तस्मिंस्तस्य राजप्रजासृजः । शनैः साम्राज्यलाभस्य षष्टिः संवत्सरा ययुः ॥३६४॥
ललाटे शूलमुद्राङ्के जराशुक्लाः शिरोरुहाः । तस्य शंभुभ्रमासङ्गिगङ्गाम्भोविभ्रमं दधुः ॥३६५॥ 365
अथाश्वपादेनेशाननिदेशात्तत्क्षणागतः । काश्मीरिको जयन्ताख्यो द्विजन्मायोजि पार्श्वगः ॥३६६॥
भ्रान्तोस्यध्वन्य नान्यस्माद्देशात्तेभिमतं भवेत् । राज्ञे प्रवरसेनाय लेख एष प्रदर्श्यताम् ॥३६७॥
इत्युक्त्वार्पितलेखोसावसमर्थः पथः पृथून् । गन्तुं प्रस्थानखिन्नो[1]स्मि सत्यस्तेनेत्यगद्यत ॥३६८॥
स्नाय तावत्त्वं स्पृष्टो द्विजः कापालिना मया । उक्त्वेति तेन क्षिप्तोसावत्रासन्ने दीर्घिकाजले ॥३६९॥
उन्मीलितेक्षणोद्राक्षीत्स्वं स्वदेशादथोत्थितम् । तस्थुषश्चार्चने राज्ञो भृत्यान्व्यग्राञ्जलाहृतौ ॥३७०॥ 370
स्वमावेदयितुं तथा नीयमाने नृपान्तिकम् । अभ्याक्षिप्तोक्षिपल्लेखं स स्नानकलशे ततः ॥३७१॥
प्रवरेशं स्नापयता स्रस्तं तत्कलशात्पुनः । राज्ञा लेखं वाचयित्वा जयन्तः प्रापितोन्तिकम् ॥३७२॥
कृतं कृत्यं महद्दत्तं भोगा भुक्ता वयो गतम् । किमन्यत्करणीयं ते एहि गच्छ शिवालयम् ॥३७३॥
ततस्तं वृत्तसंकेतः संतोष्याभिमतार्पणात् । भित्त्वा तमश्मप्रासादं जगाहे विमलं नभः ॥३७४॥
जनैः स ददृशे गच्छन्कैलासतिलकां दिशम् । विषादे घटयन्व्योम्नि द्वितीयतपनोदयम् ॥३७५॥ 375

३४७. [1]) Thus corr. by A, from A, °भाल ; G °बाल. ३४९. [1]) Thus corr. by later hand from A, °ष्ठितं.—[2]) A, gloss ग्रामवट. ३५१. [1]) स्व supplied by A,. ३५४. [1]) Thus corr. by A, from A, सत्रा. ३५५. [1]) A gloss स्थापनम्. ३६२. [1]) A, °बृहत्तु°. ३६६. [1]) Thus corr. by A, from A, °र्नि°.

जयन्तेमाङ्गुतोदन्तहेतुनावाप्य संपदः । स्वनामाङ्काग्रहारादिकर्मभिर्निर्मलाः कृताः ॥३७६॥
एवं स भुवनैश्वर्यं भुक्त्वा भूमिभृतां वरः । अनेनैव शरीरेण भेजे भूतपतेः सभाम् ॥३७७॥
प्रासादे प्रवरेशस्य सिद्धिक्षेत्रे क्षमापतेः । स्वर्गद्वारप्रतिभटं द्वारमद्यापि लक्ष्यते ॥३७८॥
तस्य रत्नप्रभादेव्यां जातो राजा युधिष्ठिरः । अपासीन्नवमासोनाः क्ष्मां चत्वारिंशतिं समाः ॥३७९॥
380 सर्वरत्नजयस्कन्दगुप्तशब्दाङ्किताभिधाः । आसन्विहारचैत्यादिकृत्यैस्तत्सचिवा वराः ॥३८०॥
भवच्छेदाभिधं ग्रामं स्तुत्यं चैत्यादिसिद्धिभिः । यो व्यधात्सोस्य वज्रेन्द्रोप्यासीन्मन्त्री जयेन्द्रजः ॥३८१॥
दिक्कामिनीमुखोत्कीर्णकीर्तिचन्दनचित्रकाः । आसन्कुमारसेनाद्यास्तस्यान्येप्यग्र्यमन्त्रिणः ॥३८२॥
पद्मावत्यां सुतस्तस्य नरेन्द्रादित्य इत्यभूत् । लःखणापरनामा यो नरेन्द्रस्वामिनं व्यधात् ॥३८३॥
वज्रेन्द्रतनयौ वज्रकनकौ यस्य मन्त्रिणौ । अभूतां सुकृतोदन्तौ राज्ञी च विमलप्रभा ॥३८४॥
385 स विधायाधिकरणं लिखितस्थितये निजम् । द्यां त्रयोदशभिर्वर्षैरारुरोह महाभुजः ॥३८५॥
तस्यानुजो धरणिभृद्रणादित्यस्ततोभवत् । तुञ्जीनापरनामानं यं जनाः प्राहुरञ्जसा ॥३८६॥
जगद्विलक्षणं यस्य शङ्खमुद्राङ्कितं शिरः । अपूर्वशर्वरीशान्तर्लीनभानुश्रियं दधे ॥३८७॥
रिपुकण्ठाटवीष्वासीद्यस्य धाराधरः पतन् । तद्वधूनेत्रकुण्डैस्तु जलाधिक्यमधार्यत ॥३८८॥
अपूर्वौ यत्प्रतापाग्निः प्रविश्यौर्वीं द्विषां न्यधात् । नारीनेत्रेषु नीरोर्मीन्मन्दिरेषु तृणाङ्कुरान् ॥३८९॥
390 यस्य पाणिप्रणयिता कृपाणे समुपागते । कबन्धेभ्यः परो नृत्तं न व्यधत्त द्विषद्बले[1] ॥३९०॥
तस्याव्यपोह्यमाहात्म्या देवी दिव्याकृतेः प्रिया । विष्णुशक्तिः क्षितिं प्राप्ता रणारम्भाभिधाभवत् ॥३९१॥
स हि जन्मान्तरे पूर्वं द्यूतकारोभवत्किल । कदापि प्राप निर्वेदं सर्वस्वं कितवैर्जितः ॥३९२॥
देहत्यागोद्यतोप्यासीत्प्राप्य किंचिद्विचिन्तयन् । न पर्यन्तेप्युपेक्षन्ते कितवाः स्वार्थसाधनम् ॥३९३॥
अवन्ध्यदर्शनां विन्ध्ये देवीं भ्रमरवासिनीम् । द्रष्टुमैच्छद्वराकाङ्क्षी निर्व्यपेक्षः स्वजीविते ॥३९४॥
395 भ्रमरैः शङ्कुपुच्छाग्रैः खण्ड्यमानस्य देहिनः । तदास्पदं हि विशतो दुर्लङ्घ्या पञ्चयोजनी ॥३९५॥
स वज्रशङ्कुपुच्छानां धीमांस्तेषां प्रतिक्रियाम् । देहेनश्वरपरित्याज्ये मन्वानोभूददुष्कराम् ॥३९६॥
प्रागयोवर्मणा देहं ततो महिषचर्मणा । तेन छादयता दत्तो मृल्लेपोथ सगोमयः ॥३९७॥
अथ भानुकरोच्छुष्कमृल्लेपावेष्टिताङ्गकः । स लोष्ट इव संचारी प्रतस्थे क्रूरनिश्चयः ॥३९८॥
सरलां सरणिं त्यक्त्वा जीवितस्पृहया समम् । गुहा तेन ततः सान्द्रतमोभीमा व्यगाह्यत ॥३९९॥
400 अथोदतिष्ठन्गर्तेभ्यो घोरा भ्रमरमण्डलाः । पक्षशब्दैः श्रुतिं घ्नन्तो मृत्युतूर्यरवैरिव ॥४००॥
ते तमुच्छुष्कमृल्लेपरेणुप्रणितलोचनाः । सहसा नाक्रमन्ते स्म प्रहरन्तोपि बाधितुम् ॥४०१॥
रेणुभिर्येन्धितदृशास्ते न्यवर्तन्त षट्पदाः । तेखण्डयंस्तु मृल्लेपं न्यपतन्ये नवा नवाः ॥४०२॥
तैः खण्ड्यमानमुद्दण्डैर्व्रजतो योजनत्रयीम् । क्रमान्मृत्कवचं तस्य पथि संक्षयमाययौ ॥४०३॥
ततो मुहुः प्रहरतां तेषां महिषचर्मणि । घोरचटचटाघोषः प्रादुरासीद्भयंकरः ॥४०४॥

---

३७७. [1]) Thus $A_2$; $A_1$ स्वखुक्ता. ३७८. [1]) $A_2$ सिद्धक्षं. ३७९. [1]) Thus corr. by $A_2$ from $A_1$ चतुर्विंशतिं. ३८१. [1]) $A_2$ gloss भौतो. ३८३. [1]) $A_1$ ल×खणा°. ३९०. [1]) $A_2$ indicates a *varia lectio* in the marginal note अन्यत् कबन्धेभ्यः परं नृत्तं न व्यधत्त द्विषद्बलम्; over the last word the gloss कर्तृ by the same hand.

चतुर्थयोजनस्यार्धमतिक्रम्य विवेद सः । रणत्कारैर्हरिकांस्तानयोवर्मनिपातिनः ॥४०५॥ 405

धावंस्ततोतिवेगेन खण्ड्यमानेन षट्पदैः । स मांसवर्मणामोचि चिरं धैर्येण नो पुनः ॥४०६॥

गव्यूतिमात्रमासन्ने देवीधामनि धैर्यवान् । धुन्वन्कराभ्यां मधुपान्धावति स्म स धीरधीः ॥४०७॥

अथ त्वगस्थिशेषाङ्गो लूनमांसः षडङ्घ्रिभिः । कराभ्यामक्षिणी रक्षन्देव्यायतनमासदत् ॥४०८॥

प्रशान्ते भृङ्गसंपाते प्रकाशमवलोकयन् । स देव्याः पादयोरग्रे पपातोत्क्रान्तजीवितः ॥४०९॥

स्तोकावशेषप्राणं तं देव्याश्वासयितुं ततः । अभिरामं वपुः कृत्वा पस्पर्शाङ्गेषु पाणिना ॥४१०॥ 410

दिव्येन पाणिस्पर्शेन तेन पीयूषवर्षिणा । स क्षिप्रासादितस्वास्थ्यो दिक्षु चिक्षेप चक्षुषी ॥४११॥

प्रविष्टमात्रः प्रैक्षिष्ट सिंहविष्टरसीम्नि याम् । घोराकारां स तां देवीं नाद्राक्षीच्च तां पुनः ॥४१२॥

ददर्श पुनरुद्यानलतावासे विलासिनीम् । स्थितां पुष्करिणीतीरे श्यामां पुष्करलोचनाम् ॥४१३॥

गृहीतहारमुक्ताभ्यां बद्धां पीनस्तनाञ्जलिम् । महार्हैः कान्तिकुसुमैर्यौवनेनार्चिताङ्गकाम् ॥४१४॥

यावकाहारिणौ पादौ दधतीं कृच्छ्रचारिणौ । स्तनच्छद्ममुखं द्रष्टुं तपस्यन्ताविवान्वहम् ॥४१५॥ 415

भास्वद्बिम्बाधरां कृष्णकेशीं सितकराननाम् । हरिमध्यां शिवाकारां सर्वदेवमयीमिव ॥४१६॥

तां विभाव्यानवद्याङ्गीं निर्जने यौवनोर्जिताम् । निन्ये वारितवामेन स कामेन विधेयताम् ॥४१७॥

दधती रूपमाधुर्यपुरश्छद्मामधृष्यताम् । अप्सराः प्रत्यभात्तस्य सा हि चित्ते न देवता ॥४१८॥

कृपामृदुरवादीत्तं व्यथितोसि चिरं पथि । मुहुः सौम्य समाश्वस्य प्रार्थ्यतामुचितो वरः ॥४१९॥

स तां बभाषे शान्तो मे भवत्या दर्शनाच्छ्रमः । अदेवी किं तु भवती वरं दातुं कथं क्षमा ॥४२०॥ 420

देवी जगाद तं भद्र कोयं ते मनसि भ्रमः । देवी वा श्यामदेवी वा वरीतुं त्वां तु धीकुयाम् ॥४२१॥

इति सोभीष्टसंप्राप्तौ कारयित्वा प्रतिश्रवम् । दूरमुत्क्रान्तमर्यादः संगमं तामयाचत ॥ ४२२॥

तमभ्यधात्सा दुर्बुद्धे कोयं तेनुचितो विधिः । प्रार्थयस्वेतरद्यस्मात्साहं भ्रमरवासिनी ॥४२३॥

देवीं तां जानतोप्यस्य नाभूदस्वहितं मनः । निरुद्धा वासनाः केन जन्मान्तरनिबन्धनाः ॥४२४॥

स तामुवाच सत्यां मे देवि त्वां गिरमिच्छसि । प्रमाणीकुरु मद्वाणीमहमन्यन्न कामये ॥४२५॥ 425

पूर्वमेव हि जन्तूनां योधिवासो निलीयते । तिलानामिव तेषां स पर्यन्तेपि न शीर्यते ॥४२६॥

देवी वा भव कान्ता वा भीमा वा शोभनापि वा । यादृशीं पूर्वमद्राक्षं तादृश्येवावभासि मे ॥४२७॥

तमित्थं कथयन्तं सा ज्ञात्वा निश्चलनिश्चयम् । एवं जन्मान्तरे भावीत्यभ्यधादनुरोधतः ॥४२८॥

उत्सहन्ते हि संस्प्रष्टुं न दिव्या मर्त्यधर्मिणः । तद्गच्छ क्रूरसंकल्पेत्युक्त्वा सान्तर्दधे ततः ॥४२९॥

अभूम्यजन्मा भूयासं तया देव्येति चिन्तयन् । प्रयागवटशाखामादहासीत्स वपुस्ततः ॥४३०॥ 430

सोजायत रणादित्यो रणारम्भा च सा भुवि । मर्त्यभावेपि या नैव जहौ जन्मान्तरस्मृतिम् ॥४३१॥

रतिसेनाभिधश्चोलराजः सज्जोब्धिपूजने । तां तरङ्गान्तराल्लेभे रत्नराजिमिवोज्ज्वलाम् ॥४३२॥

---

४०६. [1]) A₂ चिरं. ४१२. [1]) Thus A₁ ; A₂ G पुरः; R and Edd. read पुनः. ४१४. [1]) Thus A₁ ; altered by A₂ to °मुक्ताभ्यांबद्धां. A₂ reads in margin गृहीतहारमुक्ताभ्यां बद्धपीनस्तनाञ्जलिम्, with gloss मुक्ता एवार्घाः. G and R follow A₁. ४१७. [1]) A₂ writes ऽ after निन्ये. ४१८. [1]) This division of the words is indicated by A₁. ४२५. [1]) Thus corr. by later hand from A₁ सत्यं ; सत्यां also in G and R. ४२९. [1]) A₂ देव्यो.

आ बाल्याद्व्यक्तदिव्योक्ति तामलंकृतयौवनाम् । दिव्यार्हां पृथिवीशेभ्यो नार्थिभ्योपि ददौ नृपः ॥४३३॥
रणादित्यनृपाभाख्ये दूत्यायाते तथैव तम् । प्रत्याख्यानेच्छुमाचख्यौ सैव तद्वरणं वरम् ॥४३४॥
435 तदर्थमेव कथितस्वोत्पत्तिं तां ततः पिता । सुतं कुन्तलभूभर्तुः सुहृदः प्राहिणोद्गृहान् ॥४३५॥
प्रहृष्टो विप्रकृष्टं तं देशं गत्वा व्यधत्त ताम् । परिणीय रणादित्यः शुद्धान्तस्याधिदेवताम् ॥४३६॥
मर्त्यसंस्पर्शभीरुः सा महादेवी भवन्त्यपि । तं मायया मोहयन्ती न पस्पर्श कदाचन ॥४३७॥
व्यधान्मायामयीं राज्ञस्तल्पे स्वसदृशीं स्त्रियम् । स्वयं सा भ्रमरीरूपा निर्जगाम बहिर्निशि ॥४३८॥
स नाम्ना स्वस्य देव्याश्च कृत्वा हरगृहद्वयम् । माहेश्वरः शैललिङ्गे कारयामास कारुभिः ॥४३९॥
440 श्वः प्रतिष्ठाप्रसङ्गेषु सज्जे तल्लिङ्गयोर्द्वयम्[1] । देशान्तरागतः कश्चिद्दूषयामास दैववित् ॥४४०॥
स दृष्टप्रत्ययः शाश्वतयोर्घटितलिङ्गयोः । अश्मखण्डैः समण्डूकैर्बभाषे गर्भमावृतम् ॥४४१॥
किंकर्तव्यतया मूढं प्रतिष्ठाविघ्नविह्वलम् । दिव्यदृष्टिः स्वयं देवी ततो राजानमब्रवीत् ॥४४२॥
राजन्गिरिसुतोद्वाहे पौरोहित्यं पुरा भजन् । स्वमर्चादेवमादत्त पूजाभाण्डात्प्रजापतिः ॥४४३॥
तां विष्णोः प्रतिमां वीक्ष्य पूजितां तेन धूर्जटिः । शून्यामिव तदा मेने शक्तिरूपां विना शिवम् ॥४४
445 निमन्त्रितैर्ढौकितानि रत्नान्यथ सुरासुरैः । पिण्डीकृत्य स्वयं चक्रे लिङ्गं भुवनवन्दितम् ॥४४५॥
तां विष्णुप्रतिमां तच्च लिङ्गमीशानपूजितम् । स्वयं प्रजासृजः पूज्यं कालेनादत्त रावणः ॥४४६॥
तेनाप्यभ्यर्च्यमानं तल्लङ्कायामभवच्चिरम् । देवद्वयं रावणान्ते नीतमासीच्च वानरैः ॥४४७॥
तिर्यक्तया ते कपयो मुग्धा हिमनगौकसः । शाम्भौल्लघ्व्याः शनैर्देवौ न्यधुरुत्तरमानसे ॥४४८॥
प्रागेव सरसस्तस्मात्कुशलैः शिल्पिभिर्मया । तावुद्धृतौ प्रातरत्र प्राप्तौ द्रक्ष्यस्यसंशयम् ॥४४९॥
450 तयोः प्रतिष्ठा क्रियतामित्युक्त्वा पृथिवीभुजम् । देवी प्रयाता शुद्धान्तं सिद्धान्सस्मार खेचरान् ॥४५०॥
ते[1] ध्यानमात्रा[2] संप्राप्ता देव्यादेशेन पाथसः[3] । उद्धृत्य नृपतेर्धाम्नि देवौ हरिहरौ न्यधुः[4] ॥४५१॥
दिव्यैः प्रसूनैः संवीतौ हरनारायणौ जनः । प्रातर्नृपगृहे दृष्ट्वा परं विस्मयमाययौ ॥४५२॥
सज्जे प्रतिष्ठालग्नेऽथ माहेश्वरतया नृपः । रणेश्वरप्रतिष्ठायां पूर्वं यत्नात्समुद्यतः ॥४५३॥
रणारम्भानुभावेन तावद्देवाद्भुताग्रहः । स्वयं पीठे रणस्वामी भित्त्वा यन्त्रमुपाविशत् ॥४५४॥
455 कर्तुं प्रभावजिज्ञासां राज्ञ्यां दत्तधनस्ततः । स स्वयंभूः स्वयं भक्तां[2]स्तांस्तान्ग्रामानदापयत् ॥४५५॥
कुम्भदासतया छन्नः सिद्धो ब्रह्माभिधो वसन् । परिज्ञाय तयोर्देव्या[1] प्रतिष्ठाकर्म कारितः ॥४५६॥
स दृष्टप्रत्यभिज्ञः सन्प्रतिष्ठाप्य रणेश्वरम् । व्योम्ना व्रजन्रणस्वामिप्रतिष्ठां गूढमादधे ॥४५७॥
जनास्त्वलक्षयन्यत्स स्वयं पीठमवातरत् । इति केषामपि हृदि प्रवादो[1]ऽद्यापि वर्तते ॥४५८॥
तं ब्रह्मप्रतिमं सिद्धं देवी ब्रह्मविदां वरम् । अकारयत्समुद्दिश्य परार्ध्यं[2] ब्रह्ममण्डपम्[3] ॥४५९॥
460 रणारम्भास्वामिदेवौ दंपतिभ्यां व्यधीयत । मठः पाशुपतानां च ताभ्यां प्रद्युम्नमूर्धनि[1] ॥४६०॥

४४०. 1) $A_2$ gloss शिवलिङ्गद्वयम्. ४४१. 1) Thus $A_2$; $A_1$ °धस्त. ४५१. 1) 2) 3) Thus corr. by later hand from $A_1$ °मात्र. पाथस.—4) Thus $A_3$; $A_1$ न्यधुः. ४५३. 1) Thus $A_1$; $A_3$ °लिङ्गे. ४२५. 1) Thus corr. by $A_2$ from $A_1$ ग्रा[...] 2) Thus $A_2$; $A_1$ भक्तैस्तां°. ४५६. 1) $A_2$ gloss हरिहरयोः. ४२८. 1) Thus $A_2$; $A_1$ प्रवचो. ४५९. 1) Thus corr. by hand from $A_1$ स.—2) Thus corr. by $A_2$ from $A_1$ परार्धं.—3) Thus $A_2$; $A_1$ °मण्डपम्. ४६०. 1) $A_2$ gloss प्रद्युम्न[...] शारिकागिरौ.

आरोग्यशाला निरवद्यसुखावस्थाय रोगिणाम्। तेन सेनामुखीदेवीभयशान्त्यै च कारिता ॥४६१॥
ख्यातिं रणपुरस्वामिसंज्ञया सर्वतो गतम्। स सिंहरोत्सिकाग्रामे मार्तण्डं प्रत्यपादयत् ॥४६२॥
अमृतप्रभया तस्य राज्ञः पत्न्यान्यया कृतः। दक्षिणेस्मिन्रणेशस्य पार्श्वे देवोमृतेश्वरः ॥४६३॥
मेघवाहनभूभर्तृपत्न्या भिन्नाख्यया कृते। विहारेपि तया बुद्धबिम्बं साधु निवेशितम् ॥४६४॥
राज्ञे देव्यनुरक्ताय सानुक्रोशाय सैकदा। पातालसिद्धिदं मन्त्रं प्रददौ हाटकेश्वरम् ॥४६५॥ 465
मा भून्मोघास्य मत्प्राप्तिरिति मत्वा तदार्पितम्। असाधयत्स तं प्राप्य वर्षान्तं[1] वत्सरान्बहून् ॥४६६॥
कृत्वेष्टिकापथे कष्टं तपो[1] नन्दिशिलां गतः। भूरिभिर्वत्सरैर्मन्त्रसिद्धेः प्रणयितां ययौ ॥४६७॥
स्वप्नेथ सिद्धिलिङ्गैश्च जाताभङ्गुरनिश्चयः। चन्द्रभागाजलं भित्त्वा नमुचेः प्राविशद्बिलम् ॥४६८॥
बिलेपावृततां याते दिवसान्थैकविंशतिम्। प्रविश्य पौरान्प्राभिन्ये दैत्यस्त्रीभोगभोगिताम् ॥४६९॥
एवं स भूपतिर्भुक्त्वा भुवं वर्षशतत्रयम्। निर्वाणभाष्यनिर्व्यूढि पातालैश्वर्यमासदत् ॥४७०॥ 470
सानुगे नृपतौ याते दैतेयदयितान्तिकम्। देवी सा वैष्णवी शक्तिः श्वेतद्वीपमगाहत ॥४७१॥
राजवंशेष्वनेकेषु राज्ञोर्वंशद्वये परम्। द्वयोरेवात्र निर्व्यूढि प्रजावात्सल्यमागतम् ॥४७२॥
रणादित्यस्य गोनन्दवंशे रामस्य राघवे। लोकान्तरस्थस्यापि ययोरंशभुजः प्रजाः ॥४७३॥
विक्रमाक्रान्तविश्वस्य विक्रमेश्वरकृत्सुतः। तस्यासीद्विक्रमादित्यस्त्रिविक्रमपराक्रमः ॥४७४॥
राजा ब्रह्मगल्लूनाभ्यां सचिवाभ्यां समं महीम्। सोपासीद्वासवसमो द्वाचत्वारिंशतिं समाः ॥४७५॥ 475
चक्रे ब्रह्ममठं ब्रह्मा गल्लूनो लूनदुष्कृतः। रत्नावल्याख्यया वध्वा विहारं निरमापयत् ॥४७६॥
राज्ञोनन्तरजस्तस्य राजाभूत्तदनन्तरम्। नापितारातिभूपालो बालादित्यो बलोर्जितः ॥४७७॥
लवणार्णवपानेन तर्षोत्कर्षमिवोद्वहन्। यत्प्रतापो रिपुस्त्रीणां सनेत्राम्भोभजन्मुखम् ॥४७८॥
आसन्येरमनोगाधबोधदण्डा इवाहताः। यस्याद्यापि जयस्तम्भाः सन्ति ते पूर्ववारिधौ ॥४७९॥
प्रभावाङ्केन वङ्कालाञ्जित्वा येन व्यधीयत। काश्मीरिकनिवासाय कालम्ब्याख्यो जनाश्रयः ॥४८०॥ 480
कश्मीरेषु धनोदममग्रहारं द्विजन्मनाम्। राजा मडवराज्ये यो भेडराख्यमकारयत् ॥४८१॥
त्रिशां विपाटितारिष्टमरिष्टोत्सादनं व्यधात्। वल्लभा यस्य बिम्बोष्ठी बिम्बा बिम्बेश्वरं हरम् ॥४८२॥
भ्रातरो मन्त्रिणस्तस्य त्रयो मवसुरीकसोः। सेनोथ कारका आसन्खङ्खशानुप्रमालवाः ॥४८३॥
बभूव तस्य भूभर्तुर्भुवनाद्भुतविभ्रमा। तनयानङ्गलेखाख्या शृङ्गारोदधिकौमुदी ॥४८४॥
तां वीक्ष्य लक्षणोपेतां मृगाक्षीं पितुरन्तिके। अमोघप्रत्ययो व्यक्तं व्याजहारेति दैववित् ॥४८५॥ 485
भविता तव जामाता जगतीभोगभाजनम्। स्ववन्तमेव साम्राज्यं गोनन्दान्वयजन्मनाम् ॥४८६॥
सुतासंतानसाम्राज्यमनिच्छन्नथ पार्थिवः। दैवं पुरुषकारेण जेतुमासीत्कृतोद्यमः ॥४८७॥

---

४६६. [1]) Thus A ; R G वंशान्तं ; Edd. वसन्तं. ४६७. [1]) Thus $A_3$ ; $A_1$ ततो. ४६८. [1]) Thus corr. by later hand from $A_1$ चान्द्र°. ४७०. [1]) Thus corr. by $A_2$ from $A_1$ भुक्ता.—[2]) Thus $A_3$ ; $A_1$ °लैश्वरम्. ४७३. [1]) $A_1$ gloss वंशे.—[2]) $A_3$ gloss ययोः रामरणादित्ययोः. ४७५. [1]) Emended ; A R G °गलूरा°. ४८०. [1]) The words from कालम्ब्याख्यो to कारका in verse 483 have been supplied by $A_1$ at a later date and in a smaller handwriting, partly in space left for this purpose, partly in margin. ४८१. [1]) Thus corr. by $A_2$ from $A_1$ भेरडा°. ४८२. [1]) $A_3$ gloss गृहोत्साने. ४८३. [1]) See note to verse 480 above.

भराजान्वयिने[1] दत्ता नेयं साम्राज्यहारिणी । मत्वेति प्रददौ कन्यां न कस्मैचन भूभुजे ॥४८८॥
हेतुं स कल्पनामात्रं कृत्वा जामातरं नृपः । अश्वघासकायस्थं चक्रे दुर्लभवर्धनम् ॥४८९॥
490 मातुः कार्कोटनागेन सुश्रवाः समीयुषो[1] । राज्यार्थेव हि संजातो राज्ञा नाज्ञायि तेन सः[2] ॥४९०॥
निश्चिन्वते हि संमन्त्र्य यमेवायोग्यमायतात् । जिगीषयेव तमेव निदधाति विधिः शुभम् ॥४९१॥
मात्सर्येण जहद्द्रुहान्विनिवृत्तो धूमध्वजे योग्यतां ज्ञात्वा स्वां निदधत्स्विषं दिनपतिर्हास्यः प्रयान्त्युन्मुखः ।
दैवं वेत्ति न यः शिखी तु परतां नामास्तु तत्संभवाः स्युर्दीपा अपि यद्दशेन जगतास्तिग्मांशुविस्मारकाः ॥४९२॥
धिया भाग्यानुगामिन्या चेष्टमानो यथोचितम् । अभूत्सर्वस्य चक्षुष्यः स तु दुर्लभवर्धनः ॥४९३॥
प्रज्ञया द्योतमानं तं प्रज्ञादित्य इति प्रथाम् । कौबीरभाग्यस्वाम्यं च शनैः श्वशुरोनयत् ॥४९४॥
495 पित्रोः प्रेयस्तयोढ़त्वां तारुण्यादिमदेन च । राजपुत्री यथावस्तु गणयामास नैव तम् ॥४९५॥
स्वैरिणीसंगमो भोगा युवानोभे पितुर्गृहम् । पत्युर्मृदुत्वमित्यस्याः किं नाभूच्छीलविघ्नकृत् ॥४९६॥
सा नित्यदर्शनाभ्यासाच्चञ्चलैर्विघ्नता मनः । अनङ्गलेखा खङ्खेन समायुज्यत मन्त्रिणा ॥४९७॥
प्रथमप्रेमसुखाभ्यासनष्टह्रीभीतिसंभ्रमा । धाष्टर्यं दिनादिनं यान्ती ततस्तन्मयतां ययौ ॥४९८॥
स मन्त्री दानमानाभ्यां वशीकृतपरिच्छदः । अन्तःपुरे यथाकामं विजहार तया सह ॥४९९॥
500 उपलेभे च शनकैस्तस्यास्तं शीलविप्लवम् । विरागलिङ्गैरपाङ्गैर्धीमान्दुर्लभवर्धनः ॥५००॥
सखीमध्ये रहः स्मेरा विवर्णा भर्तृदर्शने । अकाण्ड एव मोत्थाय पश्यन्ती सस्मितं पथः ॥५०१॥
पत्युः कोपे कृतावज्ञा भ्रूनेत्रचिबुकाञ्चनैः । तदप्रियं भाषमाणे सस्मितं न्यस्तलोचना ॥५०२॥
तत्तुल्यगुणनिर्विण्णा तद्विपक्षस्तुतौ रता । दिरंसां तस्य संलक्ष्य सखीभिर्बद्धसंकथा ॥५०३॥
तच्चुम्बने भुग्नकण्ठी तदाश्लेषसशङ्किका । तत्संभोगे त्यक्तहर्षा तत्तल्पे व्याजनिद्रिता ॥५०४॥
505 अवेदि प्रायशो योषित्प्रेमविक्रीतचेतना । निवेदयन्ती दौःशील्यपिशाचावेशवैकृतम् ॥५०५॥ कुलकम् ॥
निगूढदारदौरात्म्यचिन्ताकृशवपुस्ततः । शुद्धान्तमविशज्जातु निशि दुर्लभवर्धनः ॥५०६॥
सोपश्यत्सुरतक्लान्तिसुलभस्वापनिःसहाम् । दुर्जारभर्तुरङ्केषु प्रसुप्तामिव वल्लभाम् ॥५०७॥
श्वासैरगलितावेगैः कम्पयद्भिः कुचाङ्कुरौ । निवेदयन्तीं तत्कालमेव निर्वहणं रतेः ॥५०८॥
अन्यस्यापि क्रुधो हेतुं पुनरप्यक्षमावशाम् । तां तथावस्थितां वीक्ष्य स प्रजज्वाल मन्युना ॥५०९॥
510 प्रजिहीर्षुः स रोषेण विमर्शेन निवारितः । प्रहस्येव प्रहस्येव निभृतं स्वममन्यत ॥५१०॥
ततस्तथाविधः क्षुभ्यत्स्मक्रोधावेशसागरः । विचारवेलया तस्य बलात्क्रममनीयत ॥५११॥
नमस्तस्मै ततः कोन्यो गण्यते वशिनां धुरि । जीर्यन्ते येन पर्याप्ता ईर्ष्याविषविषूचिकाः ॥५१२॥
सोचिन्तयदहो कष्टाश्चेष्टारागानुगा इमाः । विचारवन्ध्याः क्षिप्यन्ते क्षिप्रं याभिरधो नराः ॥५१३॥

४८८. 1) $A_2$ gloss न्यूनकुलीनत्वाय दत्ता. ४८९. 1) कृत्वा जामा supplied by $A_2$ in space left by $A_1$. ४९०. 1) Thus corr. by $A_2$ from $A_1$ समेयुषा.— 2) Thus corr. by $A_2$ from $A_1$ सा. ४९२. 1) Emended; A R G जहज्ज°.— 2) Thus $A_3$; $A_1$ स.— 3) $A_2$ gloss दूरे इत्यर्थः. ४९५. 1) $A_2$ gloss अर्थोपचितमर्यादा. ४९७. 1) Emended; A संमयु°. ४९९. 1) $A_2$ छन्दम्. ५००. 1) The text from मान्दुर्लभवर्धनः to the end of verse 507 below has been supplied by $A_2$, partly in space left by $A_1$, partly in margin. ५०४. 1) Emended with Edd.; A °निद्रता. ५०७. 1) $A_2$ दुर्जार°, with v. l. as above.— 2) See note to verse 500 above. ५०८. 1) Thus corr. by $A_2$ from $A_1$ °यन्ती. ५१३. 1) Thus corrected by $A_2$ from $A_1$ कष्टाः चेष्टा°.

स्त्रीति नामेन्द्रियार्थोयमिन्द्रियार्थो यथा परे । तथैव सर्वसामान्या वशिनामत्र काः क्षुधः ॥५१४॥
निसर्गतरला नारीः को नियन्त्रयितुं क्षमः । नियन्त्रणेन किं वा स्यात्स्वायत्ततां स्मरणोचितम् ॥५१५॥ 515
यः शुनोरिव संघर्ष एकार्थाभिनिविष्टयोः । रागिणोर्यदि मानः स कोपमानस्ततः परः ॥५१६॥
ममकारो मृगाक्षीषु क इवायं सचेतसाम् । स्वदेहेनुपपन्नोपि यः सोन्यत्र कथं मतः ॥५१७॥
उद्वेगोत्पादनाद्वेषा मध्या चेत्प्रतिभाति मे । रागस्तर्हि स्मृतः कस्मान्मूलमुद्वेगशाखिनः ॥५१८॥
सप्तपातालनिक्षिप्तमूलो रागमहीरुहः । भूमिभूतमनुत्पाद्य द्वेषमुन्मूल्यते कथम् ॥५१९॥
द्वेषो नामैव दुर्धर्षो जितो येन विवेकिना । क्षणार्धेनैव रागस्य तेन नामापि नाशितम् ॥५२०॥ 520
वीक्ष्यैतद्दिव्यया दृष्ट्या रागिणां साध्यमौषधम् । ईर्ष्या जेया ततो रागः स्वयमाशु पलायते ॥५२१॥
इति ध्यात्वालिखद्वर्णान्खड्गस्यांशुकपल्लवे । वध्योपि न हतो यत्त्वं स्मर्तव्यं तत्त्वयेत्यसौ ॥५२२॥
जनैरलक्ष्यमाणोथ याते दुर्लभवर्धने । त्यक्तनिद्रः स मन्त्री तं दृष्ट्वा वर्णानवाचयत् ॥५२३॥
दाक्षिण्यात्प्राणदस्यास्य खड्गः स मनसा तदा । विसस्मारानङ्गलेखां दध्यौ तु प्रत्युपक्रियाम् ॥५२४॥
तस्योपकर्तुरुचितं प्रतिकारमिच्छोश्चिन्ताविवेश न तु मनः स्मरबाणपङ्क्तिः ।
दृग्गोचरे परिचयप्रणयं प्रपेदे निर्निद्रता न तु कदाचन राजपुत्री ॥५२५॥ 525
भुक्त्वा सप्तत्रिंशतिमब्दान्स चतुर्भिर्मासैर्वन्ध्यौ मूर्धनि रत्नं नृपतीनाम् ।
तस्मिन्काले लोकमवापोज्ज्वलकृत्यो बाल्यादिष्टो बालशशाङ्काङ्कितमौलेः ॥५२६॥
पूर्वं विपन्नतनयेभिजनस्य शेषे गोनन्दसंततिरजायत तत्र शान्ते ।
प्राग्वन्निभुग्ननलिनाथ हठप्रविष्टतोयौघपाटितबिसा नलिनीव हीना ॥५२७॥
अथ शिथिलितमुख्यामात्यवैमत्यविघ्नः कनकघटविमुक्तैः पावनं तीर्थतोयैः ।
कथमपि स कृतज्ञो राजजामातुरुच्चैर्व्यधित विधिवदिष्टं मूर्ध्नि राज्याभिषेकम् ॥५२८॥
कार्कोटप्रभवः प्रभुः स मुकुटप्रत्युप्तमुक्ताकणद्योतश्रेणिफणाङ्कुराङ्कितवृहद्वाहुर्महीमुद्वहन् ।
ज्ञातिप्रीतिससंतोषशेषफणभृत्संफुल्लदृक्पद्मवन्यासावर्जकहाटकाब्जपटलस्रग्धामशोभोभवत् ॥५२९॥
अथ विगलिता गोनन्दोर्वीभुजोभिजनाम्बुधेरतिभुजिनि भूः कार्कोटाहेः कुले व्यधित स्थितिम् ।
चिरपरिचितात्स्वर्गाभोगाध्वनः पतनं श्रिता त्रिभुवनगुरोः शंभोर्मौलाविवामरनिम्नगा ॥५३०॥ 530

१० ॥ ५३६ ॥ आदितः ५३ ॥ ग्रं १०६१॥

इति श्रीकाश्मीरिकमहामात्यश्रीचण्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां तृतीयस्तरङ्गः ॥[1]

---

५१६. [1]) $A_3$ gloss विरोधः. ५२२. [1]) Thus corr. by $A_3$ from $A_1$ °ध्यात्वा°. ५२३. [1]) मन्त्री स supplied by $A_3$ in space left by $A_1$. ५२४. [1]) तदा वि supplied by $A_3$ in space left by $A_1$. ५२६. [1]) Thus $A_1$; altered by $A_3$ to क्ष्मादि°.— [2]) $A_3$ gloss कलामिरूपर्षः. ५२७. [1]) $A_3$ gloss तस्मिन्. ५२८. [1]) $A_3$ gloss खड्गः. ५२९. [1]) Thus corr. by $A_3$ from $A_1$ कर्कोट°. *Colophon.* [1]) $A_1$ adds here लिखितश्चैव मया राजानकरत्नकण्ठेन.

लास्यं स द्रष्टुमविशत्कार्तिकेयनिकेतनम् । भरतानुमतालक्ष्यनृत्तगीतादिशास्त्रवित् ॥४२२॥
ततो देवगृहद्वारशिलामध्यास्त स क्षणम् ।[1] ........................ ॥४२३॥
तेजोविशेषचकितैर्जनैः परिहृतान्तिकम् । नर्तकी कमला नाम कान्तिमन्तं ददर्श तम् ॥४२४॥
425 असामान्याकृतेः पुंसः सा ददर्श सविस्मया । अंसपृष्ठेन[1] धावन्तं करं तस्यान्तरान्तरा ॥४२५॥
अचिन्तयत्ततो गूढं चरत्येष भवेद्ध्रुवम् । राजा वा राजपुत्रो वा लोकोत्तरकुलोद्भवः ॥४२६॥
एवं ग्रहीतुमभ्यासः पृष्ठस्थाः पर्णवीटिकाः । अंसपृष्ठेन येनाये लसत्पाणि[3]ः प्रतिक्षणम् ॥४२७॥
लोलश्रोत्रपुटो मदोत्कमधुपापातास्थयोऽपि द्विपः सिंहोऽस्त्यपि पृष्ठतः करिकुले व्यावृत्य विप्रेक्षिता ।
मेघोन्मुक्तदशास्वप्यशान्तवदनोद्गीर्णस्वरो बर्हिणश्चेष्टानां विरमेन्न हेतुविगमेऽप्यभ्यासदीर्घा स्थितिः ॥४२८॥
इत्यन्तश्चिन्तयन्ती सा कृत्वा संक्रान्तसंविदम् । सखीमभिन्नहृदयां विससर्ज तदन्तिकम् ॥४२९॥
430 प्राग्वत्पृष्ठे गते पाणौ पूगखण्डांस्तयार्पितान् । वक्त्रे क्षिपञ्जयापीडः परिवृत्य ददर्श ताम् ॥४३०॥
भूसंज्ञयासि कस्य त्वं पृष्टाया इति सुभ्रुवः । ददत्या[1] वीटिकास्तस्या वृत्तान्तमुपलब्धवान् ॥४३१॥
तया जनितदाक्षिण्यस्तैस्तैर्मधुरभाषितैः । सख्याः समाप्तनृत्ताया निन्ये स[1] वसतिं शनैः ॥४३२॥
अथान्यपेशलालापा तथा तं सा विलासिनी । उपाचरत्परार्ध्यैर्भोः सोऽप्यभूद्विस्मितो यथा ॥४३३॥
ततः शशाङ्कधवले संजाते रजनीमुखे । पाणिनालम्ब्य भूपालं शय्यावेश्म विवेश सा ॥४३४॥
435 ततः काञ्चनपर्यङ्कशायी मैरेयमत्तया । तयार्थितोऽपि शिथिलं विदधे नाधरांशुकम् ॥४३५॥
प्रवेशयन्निव बृहद्वक्षस्तां सत्रपां ततः । दीर्घबाहुः समाश्लिष्य स शनैरिदमब्रवीत् ॥४३६॥
न त्वं पद्मपलाशाक्षि न मे हृदयहारिणी । किं तु कालानुरोधोऽयं सापराधं करोति माम् ॥४३७॥
दासस्तवाहं कल्याणि गुणैः क्रीतोऽस्म्यकृत्रिमैः । अचिराज्ज्ञातवृत्तान्ता ध्रुवं दाक्षिण्यमेष्यसि ॥४३८॥
कार्यशेषमनिष्पाद्य सज्जं मानिनि केचन । अभोगे कृतसंकल्पं सुखानां त्वमवेहि माम् ॥४३९॥
440 तामेवमुक्त्वा पर्यङ्कं साङ्गुलीयेन पाणिना । वादयन्निव निःश्वस्य श्लोकमेतं पपाठ सः ॥४४०॥
असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः । अनाक्रम्य जगत्कृत्स्नं[1] नो संध्यां भजते रविः ॥४४१॥
श्लोकेनात्मगतं तेन पठितेन महीभुजा । सा कलाकुशलाशासीन्महान्तं कंचिदेव तम् ॥४४२॥
गन्तुकामं च तं प्रातर्नृपं प्रणयिनी बलात् । अर्थयित्वा चिरं[1] कालमप्रस्थानमयाचत ॥४४३॥
एकदा वन्दितुं संध्यां प्रयातः सरितस्तटम्[1] । चिरायातो गृहं तस्या ददर्श भृशविह्वलम्[2] ॥४४४॥
445 किमेतदिति पृष्टाय तमूचे सा शुचिस्मिता । सिंहोऽत्र सुमहाकायो निपत्याहन्ति देहिनः ॥४४५॥
नरनागाश्वसंहारः कृतस्तेन दिने दिने । त्वय्यभूवं चिरायाते तद्भयेन समाकुला ॥४४६॥
राजानो राजपुत्रा वा तद्भयेन विशङ्किताः । गृहेभ्यो नात्र निर्यान्ति प्रवृत्ते क्षणदाक्षणे ॥४४७॥
तामिति ब्रुवतीं[1] मुग्धां निषिध्य च विहस्य च । मत्तीड इव तां रात्रिं जयापीडोऽत्यवाहयत् ॥४४८॥

---

४२२. [1]) द्रष्टु supplied by $A_2$ in space left by $A_1$.—[2]) $A_1$ gloss भरताचार्यकृतगीतशास्त्रसदृशं शास्त्रं. ४२३. [1]) Here two padas seem to be wanting. ४२५. [1]) Thus $A_1$; $A_2$ °पृष्ठेष. ४२७. [1]) $A_2$ भुजं.—[2]) Emended; A गृहीतु°.—[3]) $A_1$ पाणयः. ४२८. [1]) Thus corr. by $A_2$ from $A_1$ सिंह:. ४३१. [1]) Thus corr. by $A_2$ from $A_1$ ददत्त्वा. ४३२. [1]) Thus corr. by $A_2$ from $A_1$ स्व. ४४०. [1]) $A_2$ कथयन्निव. ४४१. [1]) Thus $A_2$; $A_1$ जगत्त्रितयं. ४४३. [1]) $A_2$ चिरं. ४४४. [1]) $A_2$ स तत्क्षणम्.—[2]) Thus $A_1$; altered by later hand to °ह्वलाम्. ४४८. [1]) Thus corr. by later hand from $A_1$ ब्रुवतां.

अपरेद्युर्दिनापाये निर्गतो नगरान्तरात् । विहारकमलीवीथीमुन्महावटतरोरधः ॥४४९॥
अदृश्यत ततो दूरादुत्फुल्लबकुलच्छविः । अट्टहासः कृतान्तस्य संचारीव मृगाधिपः ॥४५०॥ 450
अध्वगान्येन यान्तं तमथ मन्थरगामिनम् । राजसिंहो महासिंहं[1] समाह्वयत हेलया ॥४५१॥
स्तब्धघोणो व्यात्तवक्त्रः कम्प्रकूर्चः[1] प्रदीप्तदृक् । उदस्तपूर्वकायस्तं सगर्जः समुपाद्रवत् ॥४५२॥
तस्य न्यस्याननबिले कफोणिं पततः क्रुधा । क्षिप्रकारी जयापीडो वक्षः क्षुरिकयाभिनत्[1] ॥४५३॥
शोणितं जन्यगन्धेभसिन्दूराभं विमुञ्चता । एकप्रहारभिन्नेन तेनात्यज्यत जीवितम् ॥४५४॥
आमुक्तव्रणपट्टः स कफोणिमथ गोपयन् । प्रविश्य नर्तकीवेश्म निशि सुष्वाप पूर्ववत् ॥४५५॥ 455
प्रभातायां विभावर्यां श्रुत्वा सिंहं हतं नृपः । प्रहृष्टः कौतुकाद्द्रष्टुं जयन्तो निर्ययौ स्वयम् ॥४५६॥
स दृष्ट्वा तं महाकायमेकप्रहतिसंहतम् । साश्चर्यो निश्चयान्मेने प्रहर्तारममानुषम् ॥४५७॥
तस्य दन्तान्तरालग्नं केयूरं पार्श्वगार्पितम् । श्रीजयापीडनामाङ्कं ददर्शाथ सविस्मयः ॥४५८॥
स्यात्कुतोऽत्र स भूपाल इति ब्रुवति पार्थिवे । जयापीडागमाशङ्कि पुरमासीद्भयाकुलम् ॥४५९॥
ततः पौरान्विमृश्यैवं जयन्तः क्षितिपोऽब्रवीत् । प्रहर्षावसरे भूयः कस्मादेष भयसंभवः ॥४६०॥ 460
श्रूयते हि जयापीडो राजा भुजबलोर्जितः । केनापि हेतुना भ्राम्यन्नेकाक्येव दिगन्तरे ॥४६१॥
राजपुत्रः कल्लट इत्युक्ता कल्याणदेव्यसौ । तस्मै नियमिता दातुं निष्पुत्रेण सता मया ॥४६२॥
सोऽन्वेष्यश्चेत्स्वयं प्राप्तस्तत्राहरणेच्छया । रत्नद्वीपं प्रतिष्ठासोर्मिथावासादनं गृहात्[1] ॥४६३॥
अस्मिन्नेव पुरे तेन भाव्यं भुजमशालिना । ब्रूयाद्येनं समान्वेष्य योऽस्मै दद्यामभीप्सितम् ॥४६४॥
वाचि सप्रत्ययाः[1] पौरा भूपतेः सत्यवादिनः । अन्विष्य कमलावासवर्तिनं तं न्यवेदयन् ॥४६५॥ 465
सामात्यान्तःपुरोऽभ्येत्य प्रयत्नेन प्रसाद्य तम् । ततः स्ववेश्म नृपतिर्निनाय विहितोत्सवः ॥४६६॥
कल्याणदेव्यास्तेनाथ कल्याणाभिनिवेशिना । राजलक्ष्म्या स्वयमासाया इव सोऽग्रहीत्करम् ॥४६७॥
व्यधाद्दिनानि सामग्रीं तत्र शक्तिं प्रकाशयन् । पञ्च गौडाधिपाञ्जित्वा श्वशुरं तदधीश्वरम् ॥४६८॥
गमशेषं[1] प्रभुत्वस्य सैन्यं संवाहयन्स्वतः । मित्रशर्मात्मजो देवशर्मामात्यस्तमाययौ ॥४६९॥
निजदेशं प्रति ततः स प्रतस्थे तदर्थितः । अग्रे जयश्रियं कुर्वन्प्रयाणेषु सुलोचने[1] ॥४७०॥ 470
सिंहासनं जिताद्राजौ[1] कन्यकुब्जमहीभुजः । स राज्यककुदं राजा जहारोदारपौरुषः ॥४७१॥
तस्मिन्प्रविष्टे स्वभुवं स्फूर्जदूर्जितविक्रमे । सैन्यैः समं समित्सज्जैर्जज्जो योद्धुं विनिर्ययौ ॥४७२॥
शुष्कलेत्राभिधे ग्रामे तेन सार्धं सुदारुणः । जयापीडस्य संग्रामः सुबहूनि दिनान्यभूत् ॥४७३॥
प्रभुरक्तप्रजो राजा जज्जराज्यासहिष्णुभिः । युधि सोऽन्वीयमानोऽभूद्ग्राम्याटविकमण्डलैः[1] ॥४७४॥
श्रीदेवो नाम चण्डालः ग्रामो ग्राम्यैः समं युधि । कोऽत्र जज्ज इति भ्राम्यन्योधान्प्रपच्छ सर्वतः ॥४७५॥ 475
तृष्णार्तं स्वर्णभृङ्गारात्पिबन्तं वारि तस्य ते । रणमध्ये हयारूढं तं दूरात्समदर्शयन् ॥४७६॥

---

४५१. [1]) Thus corr. by $A_3$ from $A_1$ °सिंहं. ४५२. [1]) Thus corr. by $A_3$ from $A_1$ कम्प°. ४५३. [1]) $A_3$ gloss खड्गम्. ४६३. [1]) $A_3$ gloss गृहान्निर्गत्य. ४६५. [1]) $A_4$ gloss सविश्वासाः. ४६९. [1]) $A_3$ gloss प्रभुत्वं कथासम्बन्धं स्मारयति गमशेषमिति. ४७०. [1]) $A_4$ gloss कमलनर्तकीं कल्याणदेवीं च. ४७१. [1]) Thus $A_2$; $A_1$ °वाजौ. ४७४. [1]) Thus $A_3$; $A_1$ सोऽन्वियमानो.

भ्रमयन्क्षेपणीयं स शिलाश्मानं तदानने । सोऽयं हतो मया जज्ज इत्यमोघक्रियोऽनदत् ॥४७७॥

साहायकाय राज्ञोऽथ यामीस्तुत्कार्पितात्मनः । भ्रातुर्दत्तवत्या जज्जस्य प्रतिज्ञामामयी वधम् ॥४७८॥

अश्मसंचूर्णभीमास्यं मुमूर्षुं पतितं हयात् । विवेष्टमानं मेदिन्यां जज्जं त्यक्त्वा ययुर्निजाः ॥४७९॥

480 स समर्थाहिताघातचिन्तासततदुःस्थितः । द्रोहार्जितेन राज्येन त्रिभिर्वर्षैरभुज्यत ॥४८०॥

न्यासापहाराद्वणिजां वेश्यानां कामिवञ्चनात् । द्रोहाकोपनतां राज्ञामस्थिरा एव संपदः ॥४८१॥

हते जज्जे जयापीडः प्रत्याहृत्य निजां श्रियम् । जहार दोष्णा भूभारं कृत्स्नेन च सतां मनः ॥४८२॥

प्रपेदे यत्र कल्याणं स विरोधिवधान्नृपः । देशे कल्याणपुरकृत्तत्र कल्याणदेव्यभूत् ॥४८३॥

राजा मल्हाणपुरकृच्चक्रे विपुलकेशवम् । कमला सां स्वनाम्नापि कमलाख्यं पुरं व्यधात् ॥४८४॥

485 महाप्रतीहारपीडाभिकारं प्रतिपद्य सः । कल्याणदेवीदाक्षिण्यादकरोदधिकोन्नतिम् ॥४८५॥

उत्पत्तिभूमौ देशेऽस्मिन्दूरदूरतिरोहिता । कश्यपेन वितस्तेव तेन विद्यावतारिता ॥४८६॥

वचोमूर्खोऽयमित्येव कस्मैचिद्ददते स्फुटम् । सर्वज्ञानान्ददच्चक्रे सर्वान्विद्याभियोगिनः ॥४८७॥

देशान्तरादागमय्य व्याचक्षाणान्क्षमापतिः । प्रावर्तयत विच्छिन्नं महाभाष्यं स्वमण्डले ॥४८८॥

क्षीराभिधाच्छब्दविद्योपाध्यायात्संभृतश्रुतः । बुधैः सह ययौ वृद्धिं स जयापीडपण्डितः ॥४८९॥

490 भूपतेरात्मना स्पर्धी प्रक्रमे न स कस्यचित् । आत्मनस्तु बुधैः स्पर्धी शुद्धधीर्बह्वमन्यत ॥४९०॥

तावत्पण्डितशब्देऽभूद्राजशब्दादपि प्रथा । तैस्तैर्दोषैर्न तु म्लानिं कालान्तरवशाद्ययौ ॥४९१॥

नृपतौ विद्वदायत्ते राजसंमुख्यकाङ्क्षिभिः । गृहा बभूवुर्विदुषां व्याप्ताः सेवागतैर्नृपैः ॥४९२॥

समग्रहीत्तथा राजा सोऽन्विष्य निखिलान्बुधान् । विद्वद्दुर्भिक्षमभवद्यथान्यनृपमण्डले ॥४९३॥

अध्यक्षो भक्तशालायां शुक्रदन्तस्य मन्त्रिणः । विद्वत्तया थक्कियाख्यस्तेन स्वीकृत्य वर्धितः ॥४९४॥

495 विद्वान्दीनारलक्षेण प्रत्यहं कृतवेतनः । भट्टोऽभूदुद्भटस्तस्य भूमिभर्तुः सभापतिः ॥४९५॥

स दामोदरगुप्ताख्यं कुट्टनीमतकारिणम् । कविं कविं बलिरिव धुर्यं धीसचिवं व्यधात् ॥४९६॥

मनोरथः शङ्खदत्तश्चटकः संधिमांस्तथा । बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः ॥४९७॥

स स्वप्ने पश्चिमाशायां लक्षयन्नुदयं रवेः । देशे धर्मोत्तराचार्यं प्रविष्टं साध्वमन्यत ॥४९८॥

सचेताः संस्तवव्यक्तचित्रकृत्यो बभूव सः । भावानां भुज्यमानानामास्वादान्तरवित्नृपः ॥४९९॥

500 अपश्यद्भिर्महास्वादान्भावान्स्वादुविवेकिभिः । किं श्रेयमशनादन्यत्क्ष्मापैरन्धैरिवोक्षभिः ॥५००॥

---

४७८. [1]) $A_2$ indicates by asterisks and the marginal note मण्डले: साहायकाय, a different reading in which this verse followed after verse 474.—[2]) Thus $A_2$; $A_1$ शिलायान:. ४७९. [1]) Thus $A_1$; $A_2$ °संचीर्ण°. ४८०. [1]) Thus $A_2$; $A_1$ द्रोहाब्जिनेन. ४८१. [1]) Thus corr. by $A_2$ from $A_1$ °कोपहता. ४८४. [1]) $A_2$ gloss मल्हरी इति भाषया.—[2]) Doubtful: thus $A_2$; $A_1$ विरलके°; $A_2$ मलकेशवम्.—[3]) Thus corr. by $A_2$ from $A_1$ स्वा.—[4]) $A_2$ gloss कलमपुरं. ४८५. [1]) Thus corr. by $A_2$ from $A_1$ °पेडाधि°. Cf. महाप्रतीहारपीडा iv. 142.—[2]) Thus $A_1$; $A_2$ °देवीं and °न्नताम्. ४८६. [1]) Thus G R Edd.; A हितो. ४८७. [1]) पेशाना supplied by $A_2$ in space left by $A_1$. ४८८. [1]) $A_2$ gloss प्रापय्य.—[2]) Thus $A_2$; $A_1$ °चक्षाण:, ४८९. [1]) $A_2$ gloss क्षीरस्वामिन:. ४९२. [1]) Thus corr. by $A_1$ from राजच°. ४९४. [1]) Thus corr. by later hand from $A_1$ थाकया°. ४९५. [1]) $A_2$ gloss महोद्भट आलङ्कारिक:. ४९६. [1]) $A_2$ °कारणम्.—[2]) $A_2$ gloss मुख्यं°. ४९८. [1]) Thus $A_2$; $A_1$ लुप्तमं.—[2]) Thus according to marginal note of $A_2$ देश धर्मोत्तराचार्यमित्यस्मादर्शे; $A_1$ देशे धर्मोत्तराचार्ये. ५००. [1]) Thus corr. by $A_2$ from $A_1$ °रस्त्रैरि°.

आरूढस्य चितां कृतानुमरणोद्योगप्रियालिङ्गनं पुण्ड्रक्ष्मापसुतस्य पानमुल्बणमहामोहप्रलुप्तस्मृतेः ।
श्रीताखोरमतंसमाल्यवलयमोदश्च यादृग्भवेद्भावानां सुभगः स्वभावमहिमा निर्वेदतस्तादृशः ॥५०१॥
बन्धविक्रमयोस्तस्य द्वयोर्दर्पणयोरिव । एकैव बिम्बिता मूर्तिः सकलगुणतां ययौ ॥५०२॥
आज्ञां कुर्वन्विगुणामाज्ञां लङ्केन्द्रात्सप्त राक्षसान्[1] । तेनानयेति जगदे दूतो जातु पुरः स्थितः ॥५०३॥
सोऽभिज्ञैर्मद्रिकैः सोऽथ गच्छन्पोताच्च्युतोऽम्बुधौ । प्राप पारं तिमिग्रासं तिमिमुत्पाट्य निर्गतः ॥५०४॥
प्रियमर्त्यो रामभक्त्या नृपाज्ञालेखवाचिनम् । स्वदेशमनयत्तस्मै रक्षोभिस्तं विभीषणः ॥५०५॥ 505
दुर्गं चितैः पूरयित्वा सरोगाधं च राक्षसैः । चक्रे जयपुरं कोट्टं त्रिविष्टपसमं नृपः ॥५०६॥
बुद्धद्वयं महाकारं विहारं च विधाय सः । नगरान्तर्जयादेवीं पुण्यकर्मा स निर्ममे ॥५०७॥
तत्पुरे चतुरात्मा च शेषशायी च केशवः । विष्णुलोकस्थितिं त्यक्त्वा ध्रुवं भजति संनिधिम् ॥५०८॥
अन्यत्कर्मान्तरं किंचित्कारयित्वा स राक्षसान् । व्यधात्कारभिरेवाम्भ इति शंसन्ति केचन ॥५०९॥
स हि स्वप्ने जलान्तर्मे कुरु द्वारवतीमिति । उक्तः कंसारिणा चक्रे विनिर्माणं तथाविधम् ॥५१०॥ 510
श्रीद्वारवत्यधिष्ठानं बाह्यं कोट्टं तथा ह्यसौ । अभ्यंतरं[1] जयपुरं ब्रूतेऽद्याप्यखिलो जनः ॥५११॥
मन्त्री पञ्चमहाशब्दभाजनं जगतीभुजः । तस्मिञ्जयपुरे कोट्टे जयदत्तो व्यधान्मठम् ॥५१२॥
राजश्वशुरः प्रमोदस्य जामाता मथुरापतेः[1] । आचाभिधो व्यरचयच्छुचिराचेश्वरं हरम् ॥५१३॥
पुनः संभृतसामग्र्यो दिग्जयाय विनिर्ययौ । बलैर्जलधिवेलाद्रीन्ग्रावयञ्जलधुद्विपैः ॥५१४॥
संप्रविष्टापि पूर्वाब्धिमविच्छिन्ना हिमाचलात् । भगीरथस्य गङ्गेव रेजे तस्यानुगा चमूः ॥५१५॥ 515
सार्धं प्रचण्डैश्चण्डालैरटन्तः कटकाद्बहिः । तस्यासन्यामिका रात्रौ मुम्मुनिप्रमुखा नृपाः ॥५१६॥
नामान्यद्विनयादित्य इति प्रख्यापयन्नृपः । पूर्वाशां विनयादित्यपुरेणालंकृतां व्यधात् ॥५१७॥
अत्युत्सेकेन महसां साहसाध्यवसायिनाम्[1] । श्रीदारोहति संदेहं महतामपि भूभृताम् ॥५१८॥
भीमसेनाभिधानस्य स दुर्गं पूर्वदिक्पतेः[1] । निःशब्दो व्रतिभिः सार्धं व्रतिलिङ्गी विवेश यत् ॥५१९॥
तं रन्ध्रान्वेषिणं तत्र परिज्ञाय चिरस्थितः । भ्राता अज्जस्य सिद्धाख्यो गत्वा राज्ञे न्यवेदयत् ॥५२०॥ 520
भूपतिं[1] भीमसेनोऽथ राजाकस्मादबन्ध तम् । नहुषाजगरो भीमामिव भीमपराक्रमम् ॥५२१॥
तस्मिन्वीरे तथा बद्धे धुर्ये पुरुषकारिणाम् । पौरुषद्वेषिणा जाने दैवेनोन्नमितं शिरः ॥५२२॥
जयापीडस्त्वसंमूढो व्यसनेऽप्यतिदारुणे । तांस्तान्संचिन्तयन्नासीदुपायानुदयोन्मुखः ॥५२३॥
अत्रान्तरे नरपतेः पौराणामतिदुस्तरा । लूतामयकृता[1] व्यापदुदपद्यत मण्डले ॥५२४॥

५०१. [1]) $A_2$ note in margin: आरूढस्येत्यादिस्थाने चण्डस्योन्मदबालपङ्कजमुखीपीनस्तनालिङ्गनमित्यपि पाठो रम्यः. ५०३. [1]) The original reading of $A_1$, अकुर्वन्वि°, has been corrected into आंकुर्वन्वि° by a later hand, probably $A_2$; $A_2$ explains the latter reading by the gloss विगुणामपि आज्ञामांकुर्वन् स्वां अङ्गीकारे. $A_3$ gives the interlinear note अकुर्वन्विगुणामित्यस्मादर्थे, and explains this reading in margin: दूतः किं कुर्वन् आज्ञां राजसम्बन्धिनीं विगुणां निष्फलां अकुर्वन् न विरचयन मानयन्नाज्ञासिद्धयेः.—[2]) Thus corr. by $A_3$ from $A_1$ लङ्केन्द्रात्सप्त. ५०४. [1]) Thus corr. by later hand from $A_1$ °महक:· ५०७. [1]) बुद्ध supplied by $A_3$ in space left by $A_1$; found also in G R; C बुद्°. ५११. [1]) Thus A R G; C राज्यं.—[2]) A gloss अभ्यन्तरकोट इति भाषया. ५१३. [1]) Thus corr. by $A_2$ from $A_1$ मधुरा°. ५१५. [1]) Thus corr. by $A_3$ from $A_1$ °ख़ि. ५१८. [1]) Thus $A_3$; $A_1$ सहसा.—[2]) Thus corr. by $A_3$ from $A_1$ सहसाध्यवसायिनाम्; $A_3$ gloss साहसेन हिताहितानपेक्षेण कर्मणा अध्यवसायो येषां. ५१९. [1]) Thus $A_3$; $A_1$ °भूपतेः. ५२१. [1]) Thus corr. by $A_3$ from $A_1$ °पतिर्भीम°. ५२४. [1]) $A_2$ gloss उच्छूनो रक्तवर्णः पिटकाकृतिविस्तृतः सञ्चारी च त्वचि रोगविशेषः लूतामयः लोत् इति प्रसिद्धः.

525 आमयः स्पर्शसंचारी¹ तत्र व्यापादकश्च सः । देशादीपावतो जन्तुर्लूताव्यामो विवर्ज्यते ॥५२५॥
तदाकर्ण्य जयापीडो जातोपायप्रयुक्तधीः । स्वभृत्येनोपयुक्तानि द्रव्याण्यानीतवानहः ॥५२६॥
तैः पिष्टोद्वेष्टकैर्भुक्तैर्व्यक्तलसित्सोदरज्वरम् । वनवृक्षपयःपाके क्षिप्त्वा सपिटकोभवत् ॥५२७॥
तं लूताव्यामभाकर्ण्य विपन्नं रक्षिणां मुखात् । विपत्स्यते ध्रुवमिति ध्यात्वा देशाद्बहिर्व्यधात् ॥५२८॥
एवं स्वमतिमाहात्म्यात्संतीर्णो विपदर्णवात् । व्याप्तव्योमामहीदुर्गे यत्राथ परिपन्थिनः ॥५२९॥
यः सर्वकालमबुधैः परिहस्यमानो मूलाङ्कुराद्यपि न जातु पुरस्करोति ।
530 व्यापत्स्तु शाखाविटपी स फलं प्रसूय पुंसः किलैकपद एव लुनात्यलक्ष्मीम् ॥५३०॥
तमैच्छदभिसंधातुं विद्याविक्रमसंयुतः । मायाव्यरमुडिर्नाम राजा नेपालपालकः ॥५३१॥
अकृतप्रणतिस्तस्य प्रविहस्य स्वमण्डलम् । अपास्थद्दूरमध्वानं ससैन्योऽपससार सः ॥५३२॥
जिगीषोस्तस्य तु तथा तत्तत्पार्थिवनिर्जयः । पृथक्प्रयत्ननिर्वर्त्यो नाभूत्तदनुसारिणः ॥५३३॥
मग्नं क्वापि कचिद्दृश्यं प्रतिदेशं स वैरिणम् । श्येनः कपोतं कक्ष्यान्तरितमन्विष्यञ्जगाम सः ॥५३४॥
535 ततो निःशेषितप्राये तस्मिन्कुर्वन्दिग्जयम् । आसन्नाब्धेस्तटे सिन्धोः¹ समुपावेशयद्बलम् ॥५३५॥
प्रतस्थे विषयैर्हीनैरिव पूर्वार्णवोन्मुखः । कर्षन्वेलानिलस्पर्शोत्सृष्टध्वजपटाश्चमूः ॥५३६॥
ततस्तस्मिन्सरित्पारे दक्षिणस्मिन्समापतेः । तस्थावरमुडिः¹ सैन्यं स्वपक्षाङ्कं प्रकाशयन् ॥५३७॥
भूरिभेरीरवोद्गारि प्रबलं वीक्ष्य तद्बलम् । प्रजज्वाल जयापीडः पीतसर्पिरिवानलः ॥५३८॥
स जानुदघ्नं निर्भिन्ने पश्यञ्जघ्ने सरिज्जलम् । अपूर्वत्वादभूमिज्ञः क्रुद्धस्तर्तुं¹ व्यगाहत ॥५३९॥
540 मध्यं प्राप्ते नृपे पूर्णा वेलया वर्धमानया । अकालेभूदगाधाम्भाः सार्णवाभ्यर्णगा सरित् ॥५४०॥
नरनागाश्वबहुलं तथा सैन्यं महीपतेः । प्रवृद्धया भ्राम्यमाणं क्षणात्संक्षयमाययौ ॥५४१॥
नृपतिर्वीचिसंमर्दभ्रंशिताभरणांशुकः । बाहुभ्यां लहरीभिश्चलज्जलैर्दूरमनीयत ॥५४२॥
एकस्य करुणाक्रन्दैः सैन्यस्यान्यस्य गर्जितैः । सरित्तरङ्गघोषैश्च बभूवुस्तुमुला दिशः ॥५४३॥
क्षिप्रकारी सद्वृत्तिभिः संवरैः¹ सरितोन्तरात् । स चाकृष्य जयापीडं बबन्ध विहितोत्सवः ॥५४४॥
दैवस्याद्भुतमुखस्य नास्ति नियमः कोप्यानुकूल्यं प्रति व्यञ्जन्यः प्रियमुत्कटं घटयते जन्तोः क्षणादप्रियम् ।
545 क्षिप्रं दीर्घनिदाघवासरविपत्संतापनिर्वापणं प्रादुष्कृत्य वनस्पतेः प्रकुरुते विद्युद्विसर्गं च यः ॥५४५॥
स कालगण्डिकातीरावास्तुपाषाणवेश्मनि । निचिक्षेप जयापीडमामानां¹ रक्षिणां करे ॥५४६॥
तथा काश्मीरिको राजा निमग्नो व्यसने पुनः । स किंकर्तव्यतामूढः शुचा गूढमदह्यत ॥५४७॥
कलावत्स्व राहुग्रस्तोपि तेजस्विश्चर्यमापि तम् । न ददर्श यथा धीमान्स ररक्ष तथा नृपः ॥५४८॥
अपश्यन्निर्गतिं¹ किंचिदालोकन्यस्तलोचनः² । आसन्नां तटिनीमासीदुपायांश्च स चिन्तयन् ॥५४९॥

५२५. ¹) Thus corr. by A₁ from सर्वेसं°. ५३२. ¹) A₄ gloss अरमुडिः.—²) A₄ gloss जयापीडस्य.—³) Thus A₁; A₂ अपा. स्तु°; G R have both readings. ५३३. ¹) A₄ gloss जयापीडस्य. ५३४. ¹) A₂ gloss श्येनः कपोतं भक्षयतीति प्रसिद्धिः.—²) Emended; A G R °न्वेष्य°. ५३५. ¹) A₂ gloss सरितः. ५३७. ¹) Thus corr. by A₃ from A₁ तस्थानुरमुडे. ५३९. ¹) Thus corr. by A₂ from A₁ °स्तर्तुं. ५४२. ¹) Thus corr. by A₂ from A₁ °बर्न°. ५४४. ¹) A₂ gloss वृत्तिः जलोत्तरणार्थं आहा इति प्रसिद्धा. ५४६. ¹) Thus corr. by A₃ from A₁ °पीडं सतानां. ५४९. ¹) Thus corr. by later hand from A₁ निर्गतं.—²) A₂ gloss आलोक्यतेनेनेत्यालोकः वातायनं । तस्मिन् न्यस्ते लोचने येन सः.

अवस्थावेदकास्तत्र प्रहिताः पृथिवीभुजा । आर्द्रान्तःकरणैः श्लोकाः स्मर्यन्तेद्यापि सूरिभिः ॥५५०॥ 550

तदा तस्मिन्स्थिते मानी देवशर्मेव मन्त्रिषु । चिन्तयन्स्वामिसंत्राणमनिशं पर्यतप्यत ॥५५१॥

भर्तुः स्वदेहत्यागेन स हितं कर्तुमुद्यतः । दूतैररमुडेश्चक्रे प्रियवाग्भिः प्रलोभनम् ॥५५२॥

जयापीडश्रिया साकं राज्यं कश्मीरमण्डले । दास्यामि तुभ्यमित्यस्य दूतैः स भावितोभवत् ॥५५३॥

ग्रामेषु प्रतिदूतेषु पूर्णायामथ संविदि । गृहीतकटको मन्त्री नेपालविषयं ययौ ॥५५४॥

स कालगण्डिकासिन्धोरर्वाचि कटकं तटे । स्थापयित्वा परं पारं ययौ मितपरिच्छदः ॥५५५॥ 555

सामन्तैरममायातैस्तां सभां संप्रवेशितम् । सत्कृत्यारमुडिः प्रह्वं न्यवेशयत विष्टरे ॥५५६॥

अध्वभ्रान्त इति क्षिप्रं प्रतिमुक्तः क्षमाभुजा । तद्दिष्टोपचारस्तन्निनायावसथे दिनम् ॥५५७॥

स चारमुडिभूभुच पीतकोशौ परस्परम् । आसतां निर्जनेन्येद्युः कर्तव्यकृतनिश्चयौ ॥५५८॥

नृपमूचे स सचिवो जयापीडार्जितं धनम् । अस्ति सैन्ये तवाप्तानां तस्य वा विदितं च तत् ॥५५९॥

दानेन भविता मोक्षस्तवेत्युक्त्वा विमोहयन् । तस्मात्तं प्रष्टुमिच्छामि क्व वस्तु न्यस्तमित्यहम् ॥५६०॥ 560

अत एव मया सैन्यं संहृतं न प्रवेशितम् । यदेतन्मध्यगाः शक्या न बन्द्धुं न्यासधारिणः ॥५६१॥

तस्मादेकैकमाहूय तेषु बद्धेषु सैनिकाः । कोपमज्ञातहृदया न यास्यन्ति विपक्षगः ॥५६२॥

एवं विमोहितात्तस्मात्प्राज्ञोनुज्ञां स लब्धवान् । बद्धस्य प्रययौ पार्श्वं जयापीडमहीभुजः ॥५६३॥

तदालोकनजं शोकं गोपयन्धैर्यसागरः । गृहं तन्निर्जनं कृत्वा क्षिप्रं पप्रच्छ तं नृपम् ॥५६४॥

अपि त्वया निजं तेजो भित्तिभूतं न हारितम् । तस्मिन्हि सति सिध्यन्ति साहसालेख्यकल्पनाः ॥५६५॥ 565

स तं बभाषे निःशस्त्रो मन्त्रिन्नेवं व्यवस्थितः । अद्भुतं कर्म किं कुर्यां ध्रियमाणेन तेजसा ॥५६६॥

मन्त्री तमूचे तेजश्चेद्राजन्न निसृतं तव । जानीहि तत्क्षणेनैव लङ्घितं विपदर्णवम् ॥५६७॥

अपि वातायनादस्मात्पतित्वा निम्नगाम्भसि । पारं गन्तुं समर्थोसि सैन्यं यत्र निजं तव ॥५६८॥

राजा जगाद तं नास्मात्पतितस्योत्थीयतेम्भसः । विना दृतिं दृतिश्चात्र दूरपाताद्विदीर्यते ॥५६९॥

तस्मात्त्राणमुपायोत्र न च नाम विमानितः । बहु मन्ये तनुत्यागमनिर्मथ्यापकारिणम् ॥५७०॥ 570

ततो[1] निश्चित्य सोमात्यस्तमवादीन्महीपते । बहिः केनाप्युपायेन वहेस्त्वं नालिकाद्वयम् ॥५७१॥

प्रविश्यैकाकिनैवाथ द्रष्टव्यः संभृतो मया । सरिदुत्तरणोपायः सोनुष्ठेयोप्यशङ्कितम् ॥५७२॥

श्रुत्वेति निर्गतो गत्वा पायुक्षालनवेश्म सः । सविलम्बं बहिर्वेलां तदुक्तामत्यवाहयत् ॥५७३॥

एकाकी संप्रविष्टोथ तं ददर्श च्युतं क्षितौ । विपन्नं गलमुद्बध्य दृढया चेलचीरया ॥५७४॥

---

५५०. [1]) $A_3$ gloss सम्बन्धवेश्मनि. ५५१. [1]) Thus corr. by later hand from $A_1$ °न्स्थितौ. ५५२. [1]) न supplied by $A_3$.—[2]) Emended; $A_1$ °रारमुडैश्चक्रे, changed by later hand to °मुडेश्चक्रे.—[3]) Thus corr. by later hand from $A_1$ °प्रियविलोभनम्. ५५६. [1]) Thus corr. by $A_3$ from $A_1$ °डेः. ५५७. [1]) Thus $A_1$; $A_3$ प्रतिक्षिप्तः. ५५८. [1]) $A_2$ gloss पीतकोशौ कृतशौण्डिकाविन्यर्थः; to शौण्डिका° $A_2$ adds the note शपथः. ५६१. [1]) Thus corr. by $A_3$ from $A_1$ यदि तन्म°; $A_3$ gloss एतन्मध्यगाः संहतसैन्यमध्यगा इत्यर्थः.—[2]) Thus corr. by $A_3$ from $A_1$ बन्धुं. ५६३. [1]) Thus $A_3$; $A_1$ प्राङ्गोज्ञां; R G follow $A_3$. ५६४. [1]) Thus corr. by $A_3$ from $A_1$ धैर्य° ५७१. [1]) Thus corr. by $A_3$ from $A_1$ इति.—[2]) Thus corr. by later hand from $A_1$ वहस्त्वं; $A_3$ gloss बहेः गमयेरित्यर्थः.—[3]) $A_3$ gloss घटिकाद्वयमित्यर्थः. ५७३. [1]) Thus corr. by $A_3$ from $A_1$ पाद°.—[2]) $A_3$ gloss घटिकाद्वयकपां.

575 सद्यो व्यापादिततनुः श्वासापूरितविग्रहः । अमेध्योहं तव दृतिर्मामारुह्य तरापगाम् ॥५७५॥
आरोढुरूरुबन्धाय स्वोर्वोरुष्णीषपट्टिकां । बद्धा मया तां प्रविश्य क्षिप्रमेव पताम्भसि ॥५७६॥
नखनिर्भिन्नगात्राक्षलिखितामिति संविदम् । दृष्ट्वा चावाचयत्कण्ठनिबद्धांशुकपल्लवे ॥५७७॥ तिलकम् ॥
विस्मयखेदयोः पश्चात्पूर्वं स त्वरितस्ततः । प्रवाहे पतितो राजा परं पारं समासदत् ॥५७८॥
प्राप्तसैन्यः प्रविश्याथ क्षणेनैव निनाय सः । तमशेषं सभूपालं नेपालविषयं क्षयम् ॥५७९॥
580 रक्षिणोपि न यावत्तमजानन्बन्धनाच्युतम् । तावदेव कथाशेषं विषयं तं चकार सः ॥५८०॥
नृत्यत्कबन्धः स्वर्गस्त्रीमुक्तजन्यतूर्यघोषवान् । भूपतेर्बन्धनान्मोक्षे बभूव समरोत्सवः ॥५८१॥
दावानलोल्बणभुवो गिरयो निदाघे यत्रैव दूरमितरे परिवर्जनीयाः ।
तत्रैव संभवति सान्द्रहिमप्रपातैश्चित्रं तुषारशिखरी नितरां निषेव्यः ॥५८२॥
अज्जादीनां क्षणे यत्र जन्म स्वामिद्रुहामभूत् । तत्रैव मन्त्रिणश्चित्रं कृतिनो देवशर्मणः ॥५८३॥
नाभूद्धि सदृशः सूनुः स पितुर्मित्रशर्मणः । तमोमयो भास्वरस्य भानोरिव शनैश्चरः ॥५८४॥
585 रत्नाकरोपमे तस्मिन्सचिवेस्तमुपागते । प्राप्तामपि श्रियं मेने नृपतिर्हारितामिव ॥५८५॥
तस्य दिग्विजयस्यान्ते मानम्लानिर्विनिर्ययौ । मानसात्पृथिवीभर्तुर्नामास्योपक्रिया पुनः ॥५८६॥
चित्रं जितवतस्तस्य स्त्रीराज्ये मण्डलं महत् । इन्द्रियग्रामविजयं बहमन्यन्त भूभुजः ॥५८७॥
कर्णश्रीपट्टमाबध्य स्त्रीराज्यार्जितमद्भुतम् । धर्माधिकरणाख्यं च कर्मस्थानं विनिर्ममे ॥५८८॥
द्वितीयं चलगञ्जाख्यं कर्मस्थानमपि व्यधात् । उपयुक्तं प्रयाणेषु गञ्जे दूरस्थिते निजे ॥५८९॥
590 किमन्यत्ककुभावासनिवासिन्या जयश्रियः । चत्वारोम्बुधयोभूवन्विलासमणिदर्पणाः ॥५९०॥
पुनः प्रविश्य कश्मीरान्स भूपैः परिवारितः । चिराय बुभुजे राजा विजयोपार्जितां श्रियम् ॥५९१॥
तं कदाचिन्नृपं स्वप्ने सर्वाशाविजयोर्जितम् । पुमान्दिव्याकृतिः कोपि व्याजहार कृताञ्जलिः ॥५९२॥
सुखं त्वद्विषये राजन्वसन्नस्मि सबान्धवः । नागेन्द्रोहं महापद्मनामा त्वां शरणं श्रितः ॥५९३॥
द्राविडो मान्त्रिकः कश्चिन्मामितो नेतुमुद्यतः । जलाकाङ्क्षिणि वित्तेन विक्रेतुं मरुमण्डले ॥५९४॥
595 तस्माच्चेत्पासि मां तत्ते स्वर्णधातुस्रवं गिरिम् । स्वदेशे दर्शयिष्यामि स्फीतोपकृतिकारिणः ॥५९५॥
राजा स्वप्ने निशम्येति दिक्षु संप्रेरितैश्चरैः[1] । कुतोपि प्राप्तमानीय तं पप्रच्छ चिकीर्षितम् ॥५९६॥
दत्ताभयः स नागोक्तं यथावत्सर्वमुक्तवान् । सविस्मयेन भूभर्त्रा स्वयं भूयोप्यपृच्छ्यत ॥५९७॥
भूरियोजनविस्तीर्णात्सरसोभ्यन्तराश्रयः । नागः प्रभावोत्कृष्टः स निष्क्रष्टुं शक्यते कथम् ॥५९८॥
स तं व्यजिज्ञपद्राजन्नचिन्त्या मन्त्रशक्तयः । ताश्चेद्दिदृक्षसे क्षिप्रमेत्याश्चर्यं विलोक्यताम् ॥५९९॥
600 अथानुगम्यमानः स राज्ञा प्राप सरोन्तिकम् । अभिमन्त्र्योज्झितैर्बाणैर्द्राक्शोशोषयज्जलम् ॥६००॥

---

५७५. [1]) $A_2$ gloss सद्यो व्यापादिततनुरित्यादि पताम्भसीत्यन्ता शिक्षा राज्ञः कृते नखनिर्भिन्नस्वशरीररक्तेन लिखिता तेन कृतघ्नेन मन्त्रिवरेण स्वकीयकण्ठनिबद्धे वस्त्रखण्डे.—[2]) $A_2$ gloss अत एव दृतित्वमित्यर्थः.—[3]) $A_1$ originally दृतेर्मा°; to this reading refers the gloss of $A_2$. दृतेः सकाशादप्यमेध्योहमित्यर्थः On altering the reading to दृतिर्मा°, $A_2$ has struck out the first gloss and added a fresh one: अहममेध्यो दृतिरस्मि.—[4]) $A_2$ gloss मां दृतिरूपं. ५७६. [1]) Thus corr. by later hand from $A_1$ °रूढबन्धाय.—[2]) $A_2$ gloss उष्णीषपट्टिका वेष्टनाञ्चलद्वयपट्टिकेत्यर्थः. ५८३. [1]) Thus corr. by later hand from $A_1$ क्षणं. ५८४. [1]) Thus A R G; C नाभूद्विसदृश.—[2]) Thus $A_1$; $A_2$ भास्वरस्य. ५९६. [1]) Thus $A_1$; $A_2$ °प्रेषितैश्च°.

राजापश्यत्ततः पङ्के लुठन्तं मानुषाननम् । बिलसद्देहयमुरगं भूरिह्रस्वोरगान्वितम् ॥६०१॥
मन्त्रसंकोचितं राजन्मूकाम्यमुमिति ब्रुवन् । मा वधीरिति भूपेन सोभिधावन्न्यषिध्यत ॥६०२॥
तूर्णं राजाज्ञया तेन[1] मन्त्रवीर्येण संहृते । सरोभूत्प्रागवस्थं तत्पुनर्व्योमविनिर्मलम् ॥६०३॥
द्राविडं द्रविणं दत्त्वा विसृज्याचिन्तयन्नृपः । तथाख्याताप्यसौ नागः कथं स्वर्णाकरं गिरिम् ॥६०४॥
ध्यायन्तमेव तं स्वप्ने ततः प्रोवाच पन्नगः । केनोपकारेण गिरिः स्वर्णसूस्तव दर्श्यते ॥६०५॥ 605
स्वदेशोयं विदेशोयमिति बुद्धेः प्रवर्तकः । अन्वयव्यतिरेकाभ्यां स्थित्यभ्यासः शरीरिणाम् ॥६०६॥
शरणं त्वामहमगामवमानभयात्पुनः । शरण्येन सता ननु भवतैव प्रदर्शितम् ॥६०७॥
उदन्वानिव योक्षोभ्यो ज्ञायते स्तम्भितैः प्रभुः । का ह्रीस्ततोन्या सोन्मेषैस्तेषामप्यभिभूयते[1] ॥६०८॥
याभिरन्याभिभूताभिरीक्षितस्त्रातुमक्षमः । तासां केनाभिमानेन स्त्रीणां द्रक्ष्याम्यहं मुखम् ॥६०९॥
येकारणसधर्माणो[1] व्यामूढस्य भवाम ते । विडम्ब्यमानाः क्रीडार्थं ते वयं प्राकृता इव ॥६१०॥ 610
अथ वा श्रीमदान्धानामप्रेक्षापूर्वकारिणाम् । यत्किंचनविधायित्वं पार्थिवानां किमद्भुतम् ॥६११॥
मन्यन्ते क्ष्माभुजः क्रीडामुन्नतानां विमाननाम्[1] । यावज्जीवं तु सन्धातं मरणं तां विदन्ति ते ॥६१२॥
उपेक्ष्यं[1] पक्षे भूपानां मानः स्वार्थस्य सिद्धये । स तु प्राणानुपेक्ष्यापि प्राप्यपक्षे मनस्विनाम् ॥६१३॥
महतो येवमन्यन्ते घटन्ते च विमानितैः । मनःस्वरूपाभिज्ञत्वं तेषां केनानुमीयते ॥६१४॥
भवन्त इव तत्रापि न वयं व्यर्थदर्शनाः । ताम्रधातुरसस्यन्दी दर्श्यते तद्गिरिस्तव ॥६१५॥ 615
इत्युक्त्वा संविदं तस्मै स्वप्न एव स तां ददौ । यथा प्रबुद्धः प्रत्यूषे प्राप ताम्राकरं गिरिम् ॥६१६॥
स तस्मात्क्रमराज्यस्थात्ताम्रमाकृष्य निर्ममे । शतं दीनारकोटीनामेकोनं[1] स्वाभिधाङ्कितम् ॥६१७॥
पूर्णं कोटिशतं कुर्याद्यः स मां निर्जयेदिति । दर्पभङ्गाय भूपानां समयं स्थापयन्नृपः ॥६१८॥
समस्या इव स क्ष्माभृत्सावशेषैर्विचेष्टितैः । चिक्षेप तुल्यानिर्माणकुण्ठत्वायेति भूभृताम् ॥६१९॥
अथाकस्मान्महीपालः प्रजाभाग्यविपर्ययैः । त्यक्त्वा पैतामहं मार्गं ययौ पित्र्येण सोध्वना ॥६२०॥ 620
किं दिग्जयादिभिः क्लेशैः स्वदेशादर्ज्यतां धनम् । इत्यर्थ्यमानः कायस्थैः स्वमण्डलमदण्डयत् ॥६२१॥
शिवदासादिभिर्लुब्धैर्धनस्थानाधिकारिभिः[1] । प्रविवर्धितवित्तेच्छः सोभूल्लोभवशंवदः ॥६२२॥
काश्मीरिकाणामुत्पन्नं[1] निजाज्ञाव्यवधायकम् । कायस्थचक्रप्रेक्षित्वं ततः प्रभृति भूभृताम् ॥६२३॥
मन्त्रस्तस्य महीभर्तुर्योभूत्तं संस्तुमहे । वास्तव्यबन्धचिन्तायां स एव स्थैर्यमाययौ ॥६२४॥
यस्ततां प्रशमाधायि पापस्योपादिदेश तत् । जयापीडस्य पाण्डित्यं प्रजापीडनशौण्डताम् ॥६२५॥ 625
स सौदास इवानेकलोकप्राणापहारकृत् । अस्तुत्यकृत्यसौहित्यं स्वप्नेपि न समाययौ ॥६२६॥
कुर्मः किल्बिषमेतदेव हृदये कृत्वेति कौतूहलात्स्वैरिण्यः क्षितिपाश्च धिक्चपलतां क्रौर्यं च कुर्युः सकृत् ।
पापाक्रान्तधियो भवन्त्यथ तथा[1] नान्त्यात्स्पृशन्त्योपि ता दूयन्ते न च ते यथा स्वपितरौ घ्नन्तोपि शान्तत्रपाः ॥६२७॥

---

६०२. [1]) Emended; A सोभ्यधाव. ६०३. [1]) Thus corr. by $A_2$ from $A_1$ वाते. ६०८. [1]) Thus corr. by $A_3$ from $A_1$ °भूतये. ६१०. [1]) $A_1$ येऽकारण°. ६१२. [1]) Thus corr. by later hand from $A_1$ विमाननिनाम्. ६१३. [1]) $A_2$ gloss स्वाकम्. ६१७. [1]) Thus $A_1$; $A_2$ दीनार°. ६२२. [1]) Thus corr. by $A_2$ from $A_1$ °कारिभिः. ६२३. [1]) Thus corr. by $A_2$ from $A_1$ काश्मीरका°. ६२७. [1]) Thus $A_3$; $A_1$ यथा.

लोभाभ्यासात्तथा क्रौर्यं स ययौ वत्सरत्रयम् । सह कार्षकभागेन यथाहार्षीत्करात्फलम् ॥६२८॥
लुब्धस्य ध्वस्तधीर्भूभृत्स्वल्पवित्तलवप्रदाम् । सर्वस्वहारिणो मेने कायस्थान्हितकारिणः ॥६२९॥
सामुद्रास्तिमयो नृपाश्च सदृशा एके हतावंभसः स्वस्मादेव कणान्घनस्य जहतो जानन्ति ये दातृताम् ।
630 सर्वस्मात्स्फुटलुण्ठिताहितनुतो लेशान्किलान्येपि ये दुष्कायस्थकुलस्य हन्त कलयन्त्यन्तर्हिताधायिताम् ॥६३०॥
सर्वकालं ब्राह्मणानामहो धैर्यमकुण्ठितम् । निस्त्रिंशस्य बभूवुर्ये तस्यापि परिपन्थिनः ॥ ६३१ ॥
देशान्तरं प्रयातेभ्यो ये शेषास्ते व्यरंसिषुः । विक्रोशन्तो न मरणाद्धरणाच्चापि पार्थिवं ॥६३२॥
विप्राणां शतमेकोनमेकाहेन विपद्यते । निवेद्यमेतदित्यूचे क्रौर्याक्रान्तोथ पार्थिवः ॥६३३॥
विपर्यस्तपरिज्ञस्य तस्यैं क्रूरस्य भूपतेः । एवं स्तुतिविपर्यासः काव्येष्वपि बुधैः कृतः ॥६३४॥
635 नितान्तं कृतकृत्यस्य गुणवृद्धिविधायिनः । श्रीजयापीडदेवस्य पाणिनेश्च किमन्तरम् ॥६३५॥
भाष्यव्याख्याक्षणे श्लोकैर्वैचक्षण्यहतैः कृतः । सोयं तस्य विपर्यासो बुधैरेवं प्रवर्तितः ॥६३६॥
कृतविप्रोपसर्गस्य भूतनिष्ठाविधायिनः । श्रीजयापीडदेवस्य पाणिनेश्च किमन्तरम् ॥६३७॥
तुलमूल्यापहर्ता च चन्द्रभागातटे स्थितः । विप्राणां शतमेकोनमभृणोत्तज्जले मृतम् ॥६३८॥
ततोग्रहारहरणादेव प्रविरतोभवत् । वास्तव्यानां हृतां भूमिं न तु निःशेषतो जहौ ॥६३९॥
640 अथ विश्रामिसमये तुलमूल्यौकसो द्विजाः । चुक्रुशुर्जातु तस्याग्रे प्रतीहारकराहताः ॥६४०॥
मनुमान्धातृरामाद्या बभूवुः प्रवरा नृपाः । अन्वभावि तदग्रेपि ब्राह्मणैर्न विमानना ॥६४१॥
सेन्द्रं स्वर्गं सशैलां क्ष्मां सनागेन्द्रं रसातलम् । निर्दग्धुं हि क्षणेनैव विप्राः शक्ताः प्रकोपिताः ॥६४२॥
तदाकर्ण्यास्तसामन्तस्कन्धपृष्ठः क्षमापतिः । उल्लासितैकभ्रूलेखो दर्पाद्वचनमब्रवीत् ॥६४३॥
भिक्षाकणभुजां कोयं शठानां वो मदज्वरः । येनर्षय इव ब्रूथ प्रभावख्यापकं वचः ॥६४४॥
645 भीमभ्रूभङ्गभीतेषु तेषु तूष्णीं स्थितेष्वथ । इट्टिलाख्यस्तमाह स्म ब्रह्मतेजोनिधिर्द्विजः ॥६४५॥
राजन्युगानुरूप्येण भावाभावानुवर्तिनः । शासितुस्तेनुसारेण न कस्मादृषयो वयम् ॥६४६॥
आह स्म विश्वामित्रो वा वसिष्ठो वा तपोनिधिः । त्वमगस्त्योथ वा किं स्या इति दर्पेण तं नृपः ॥६४७॥
ज्वलन्निव ततः स्फूर्जत्तेजोदुष्प्रेक्ष्यविग्रहः । स फणीवोत्फणस्ताम्यन्कोपान्नृपतिमब्रवीत् ॥६४८॥
भवान्यत्र हरिश्चन्द्रस्त्रिशङ्कुर्नहुषोपि वा । विश्वामित्रमुखेभ्योहं तत्रैको भवितुं क्षमः ॥६४९॥
650 विहस्योवाच तं राजा विश्वामित्रादिकोपतः । हरिश्चन्द्रादयो नष्टास्त्वयि क्रुद्धे तु किं भवेत् ॥६५०॥
पाणिना ताडयन्नुर्वीं ततः क्रुद्धोभ्यधाद्द्विजः । मयि क्रुद्धे क्षणादेव ब्रह्मदण्डः पतेन्न किम् ॥६५१॥
तच्छ्रुत्वा विहसन्राजा कोपाद्ब्राह्मणमब्रवीत् । पततु ब्रह्मदण्डोसौ किमद्यापि विलम्ब्यते ॥६५२॥
नन्वयं पतितो जाल्मेत्यथ विप्रेण भाषिते । राज्ञः कनकदण्डोङ्गे वितानस्खलितोपतत् ॥६५३॥

---

६३०. 1) Thus $A_1$; $A_2$ हतान°.—2) Thus $A_1$; $A_2$ °ताम्बि°. ६३३. 1) Thus $A_1$; $A_2$ °काहे चेहि°. ६३६. 1) Thus $A_1$; $A_2$ लोके वै°.—2) Thus corr. by $A_2$ from $A_1$ विपर्यासे.—3) Thus corr. by $A_2$ from $A_1$ विवर्तितः. ६३७. 1) $A_2$ gloss निष्ठायाश्च इह भावापत्ती. ६३८. 1) Thus corr. by $A_2$ from $A_1$ तुलमूला°. ६४०. 1) Thus $A_2$; $A_1$ तुलमूलौ°. $A_2$ gloss तुलमूलाख्यो ग्रामः ६४४. 1) Thus corr. by $A_2$ from $A_1$ °ख्यापकं. ६४५. 1) Thus corr. by $A_2$ from $A_1$ तूर्णीं.—2) Thus corr. by $A_2$ from $A_1$ हट्टिला°. ६४६. 1) $A_2$ विप्रा नृपानुवर्तिनः इत्यन्यत्रादर्शे. ६४८. 1) Thus $A_1$; $A_2$ दुष्प्रेक्ष°. ६४९. 1) $A_2$ gloss भवान्भवेदिति विश्वामित्रशापाद्धरिश्चन्द्रो भ्रष्टः स्वपदात् वसिष्ठशापात्त्रिशङ्कुर्भ्रष्टः अगस्त्यशापाच्च नहुषो भ्रष्टः इति तद्दृष्टान्तोत्र स्पष्टः.

कृतव्रणः स तेनाङ्गे विमर्दक्लिष्टविग्रहः । कीर्यमाणकृमिकुलः क्रकचैश्चारितैरभूत् ॥६५४॥

अनुभाव्य व्यथां भाविनिरयक्लेशवर्णिकाम् । गणरात्रेण तं प्राणाः काङ्क्षितापगमा जहुः ॥६५५॥ 655

ब्रह्मदण्डकृतं दण्डं भुक्त्वा दण्डधराधिपः । अकाण्डदण्डपाताय ययौ दण्डधरान्तिकम् ॥६५६॥

तस्यानियतचित्तस्य त्रिंशतं परिवत्सरान् । एवं प्रतापिनः सैकान्भूभोगो भूपतेरभूत् ॥६५७॥

तथा भूभृन्मत्स्या द्रविणकलुषाम्भःकृततृषः स्थितिं व्यामुञ्चन्तो विदधति कुमार्गानुसरणम् ।
क्रियन्ते कालान्तानुगविकृतकैवर्तनिवहैर्यथा तेनैकस्मात्स्थिरनिरयजालप्रणयिनः ॥६५८॥

कृतपापं तमुद्दिश्य विप्रश्रममृतप्रभा । मृतोद्धाराय तन्माता व्यधत्तामृतकेशवम् ॥६५९॥

ललितापीडनामाभूत्ततो वसुमतीपतिः । देव्यां दुर्गाभिधायां यो जयापीडादजायत ॥६६०॥ 660

बभूव रागिणो राज्ये राज्यकार्याण्यपश्यतः । यस्य वाराङ्गनाभोग्यं राज्यं दुर्नयदूषितम् ॥६६१॥

दुष्कृतैरार्जितं वित्तं पित्रा निरयभागिना । यं धारणादिषु न्यस्यन्ननुरूपं व्ययं व्यधात् ॥६६२॥

बन्धकीबन्धुभावेन प्राप्तराजगृहाश्रयाः । ते पांसुलीयविद्यानामन्तरङ्गं व्यधुर्विटाः ॥६६३॥

केशान्स्त्रीदशनच्छिन्नान्वक्षस्तन्नखलाञ्छितम् । वपुषो मण्डनं मेने किरीटकटकोज्झितः ॥६६४॥

यो यो वेश्याकथाभिज्ञो यो यो नर्मविचक्षणः । स स तत्प्रियतां लेभे न शूरो न च पण्डितः ॥६६५॥ 665

अतृप्तः स्त्रीभिरल्पाभिरुपरागः स पार्थिवः । जडं मेने जयापीडं स्त्रीराज्यान्निर्गतं जितात् ॥६६६॥

दिग्विजयव्यसनिनः पूर्वभूपाञ्जहास सः । गणिकाभोगसुखितः स्वसामयिकमध्यगः ॥६६७॥

संकोचकारिणो वृद्धाञ्शर्मास्त्योद्वेज्य वारयन् । तस्माद्विटजनो लेभे संप्रीतात्पारितोषकम् ॥६६८॥

भट्टचेट इव स्पष्टपरिहासविचक्षणः । सोऽलज्जयन्मन्त्रिवृद्धानास्थाने गणिकासखः ॥६६९॥

बन्धकीपादमुद्राङ्कं चारु प्राग्वरणादि सः । गौरवार्होन्दुराचारः सचिवान्पर्यधापयत् ॥६७०॥ 670

मानी मनोरथो मन्त्री परं परिजहार तम् । अशक्नुवन्यमयितुं मध्यपातपराङ्मुखः ॥६७१॥

कुकृत्यं योगराहित्यं वैधुर्यं द्रोहवृत्तिता । ...... दुर्वृत्तस्य प्रभोरन्यत्परिहारान्न भेषजम् ॥६७२॥

सुवर्णपार्श्वं विप्रेभ्यो ददत्फलपुरं तथा । भूभृत्स लोचनोत्सं च द्वादशाब्दानभूद्विभुः ॥६७३॥

कल्याणदेव्यां संजातो जयापीडमहीभुजः । संग्रामापीडनामाथ बभूव भुवनेश्वरः ॥६७४॥

पृथिव्यापीड इत्यन्यनाम बिभ्रत्स भूपतिः । समाप्तिं सप्तभिर्वर्षैः साम्राज्यस्य समासदत् ॥६७५॥ 675

श्रीचिप्पटजयापीडो बृहस्पत्यपराभिधः । ललितापीडजो राजा शिशुर्वेश्यस्ततोऽभवत् ॥६७६॥

रागग्रहगृहीतस्य ललितापीडभूपतेः । वेश्यायां कल्यपाल्यां यो जयादेव्यामजायत ॥६७७॥

उप्पाख्यस्यासुवग्रामकल्यपालस्य तां सुताम् । रूपलुब्धोवरुद्धां स्वामनैषीत्स हि भूपतिः ॥६७८॥

पद्मोत्पलककल्याणमम्मधर्मैः स मातुलैः । बालकैः पाल्यमानोऽभूत्पृथिवीभोगभागिभिः ॥६७९॥

---

६५४. 1) Thus corr. by $A_2$ from $A_1$ विसर्प°. ६५८. 1) Thus corr. by $A_2$ from $A_1$ स्थितिं. ६६२. 1) $A_1$ seems to have read बधार°; corrected by $A_2$. ६६५. 1) Thus corr. by $A_2$ from $A_1$ °कथाविज्ञो. ६७१. 1) Thus corr. by $A_2$ from $A_1$ मन्. ६७२. 1) Thus corr. by $A_2$ from $A_1$ योगवाहित्यं.—2) Here seems to be a *lacuna* in the text. ६७३. 1) $A_2$ gloss सुनपाह्.—2) $A_2$ gloss परिहासपुरसमीपे. ६७८. 1) $A_3$ gloss कल्यं सुरां पालयतीति कल्यपालः कलवाल् इति भाषया.—2) Thus corr. by $A_3$; two aksharas of $A_1$, corresponding to रुद्धा, are illegible on account of an ink blot. $A_3$ gloss अवरुद्धा उरुद्धा इति भाषया. ६७९. 1) Thus $A_1$; $A_3$ °धर्म्मैः.

680 तस्य पञ्च महाशब्दाञ्छ्रयायानुत्पलकोग्रहीत् । अन्ये जगृहिरेन्यानि कर्मस्थानानि[1] मातुलाः ॥६८०॥
आयत्तीकृतसाम्राज्यैर्भ्रातृभिर्मन्त्रिताशया । भूभृज्जनन्या विदधे जयादेव्या जयेश्वरः ॥६८१॥
राज्ञां कृपणवित्तैर्यत्नविहितैर्दूष्यते धनम् । अचिरान्नीयते शान्तिमपूर्वैः कैश्चिदेव तत् ॥६८२॥
जयापीडस्य यत्किंचित्तनुजानां हि व्ययीकृतम् । तनुत्वालैरशेषं तैः क्रमेण हृतं वसु ॥६८३॥
भगिनीभर्तृसौभाग्यसंभवैर्विभवैः कृताः । तेभङ्गुराणां भोगानां भोक्तारो भाग्यभागिनः । ६८४॥
685 निरङ्कुशं चेष्टमानाः शनकैस्त्यक्तशासनात् । ते स्वकीयान्नृपात्पापमकुलीनाः शशङ्किरे ॥६८५॥
अथाभिचारक्रियया मिथः संमन्त्र्य पापिभिः । राज्येच्छया तैः स्वकीयः स्वामी च स नृपो हतः ॥६८६॥
भुक्तक्षितौ द्वादशाब्दांस्तस्मिन्व्यापादिते तथा । नैच्छन्नेकस्य ते राज्यं परस्परमहंकृताः ॥६८७॥
तेषामाक्रान्तदेशानां[1] नाममात्रमहीपतीन् । तांस्तान्कर्तुमनामान्यान्विरोधोन्योन्यमुपययौ[2] ॥६८८॥
अथ मेघावलीदेव्यां जातो वप्पियभूपतेः । अज्ञोप्यबालिकतया योभूद्राज्यविवर्जितः ॥६८९॥
690 सोयं त्रिभुवनापीडो जयादेव्यामजीजनत् । राजानमजितापीडं तं बलादुत्पलो व्यधात् ॥६९०॥ युग्मम्[1] ॥
श्रीडाविगणनास्थाननिष्पन्नोत्थाकृपाय ते । पञ्चपालकनास्थानादशनाच्छादने ददुः ॥६९१॥
एकसंभाषणाखेदं यास्वन्येषु दिने दिने । पञ्च तुल्यमुखाप्रेक्षुःस्थो राजा तदाश्रितः ॥६९२॥
ते राजन्यजितापीडे राज्योत्पत्तस्वपहारिणः । पुरदेवगृहादीनां प्रतिष्ठाकर्म चक्रिरे ॥६९३॥
सापत्न्यास्ते बुभुजिरे राज्यं स्वामिविवर्जितम् । निर्जने महिषं शान्तं मिथः सेर्ष्या वृका इव ॥६९४॥
695 उत्पलेनोत्पलस्वामी तथोत्पलपुरं कृतम् । पद्मस्य पद्मस्वाम्यास्ते कृतिः पद्मपुरं तथा ॥६९५॥
वधूर्ध्वभक्त पद्मस्य गुणादेवी गुणोज्ज्वला । मठमेकमधिष्ठाने द्वितीयं विजयेश्वरे ॥६९६॥
धर्मो धर्मोद्यमी हेतुर्धर्मस्वामिविनिर्मितेः । कल्याणवर्मा सत्कर्मा कल्याणस्वामिकेशवे ॥६९७॥
दीनाराणां सहस्राणि पञ्चोपकरणं कृती । एकैकस्याः सुधीर्धेनोः कृत्वा मम्मो महाधनः ॥६९८॥
पञ्चाशीतिसहस्राणि गवां दत्त्वा प्रकल्पयन् । कुम्भप्रतिष्ठासंभारं यो मम्मस्वामिनं व्यधात् ॥६९९॥
700 तस्यैकस्यैव सामग्र्यां कः संख्यां कर्तुमर्हति । भ्रातॄणां किं पुनस्तेषां सर्वेषां भूरिसंपदाम् ॥७००॥
द्रोहार्जितास्तु या लक्ष्मीः सुकृतोपार्जिताथ वा । सर्वेषां स्पृहणीयैव तेषां दातृतया तया ॥७०१॥
कृता देवगृहास्तैर्ये तत्पार्श्वेन्यसुरास्पदैः । दिङ्मातङ्गसमीपस्थकलभौपम्यमाश्रितम् ॥७०२॥
एकोननवते वर्षे स्वकीये शान्तिमागते । निर्विघ्नभोगास्तेभुवन्षट्त्रिंशाब्दात्ययावधि ॥७०३॥
अथ मम्मोत्पलकयोरुदभूद्दारुणो रणः । रुद्धप्रवाहा यत्रासीद्वितस्ता सुभटैर्हतैः ॥७०४॥
705 कविर्बुधमनःसिन्धुशशाङ्कः शङ्कुकाभिधः[1] । यमुद्दिश्याकरोत्काव्यं भुवनाभ्युदयाभिधम् ॥७०५॥

---

६८०. [1]) $A_2$ gloss कर्मस्थानानि काद्दखान इति प्रसिद्धानि. ६८१. [1]) $A_4$ glosses ललितापीडेन and पद्मोत्पलकादिभिः. ६८८. [1]) Thus corr. by $A_3$ from $A_1$ °देहानां.—[2]) $A_1$ wrote °मनामान्यांवि°; $A_2$ altered this to °मनाम्नस्ता; $A_3$ has struck out the reading of $A_2$ and has written above °मनामान्यान्वि°.—[3]) Thus corr. by $A_3$ from $A_1$ °मावती. ६९०. [1]) युग्मम् added by $A_3$. ६९१. [1]) Thus corr. by a later hand from $A_1$ देडा°; R Edd. क्रीडा°; G देडा°. Cf. viii. 578 (*C.*).—[2]) $A_2$ gives the marginal note पञ्चस्थूलं नामैत्स्थानकं मिथान नवमानादि एषां चतुर्णां सम्बन्धी एकोत्पत्तिप्रवेशः स पञ्चमगणनास्थानमिति लोकाचारः. ६९२. [1]) Thus $A_1$; $A_2$ °मुखान्वे° ६९९. [1]) To this verse seems to refer the gloss of $A_2$: मधुनाथां. ७०५. [1]) $A_2$ gloss श्रीशङ्कुकाभिधः प्रसिद्ध आलङ्कारिकः यस्य मतं रसनिरूपणे काव्यप्रकाशे चतुर्थोल्लासे श्रीमम्मटाचार्येण निरूपितम्.

मम्मवन्नुर्यशोवर्मा संग्रामाये व्यपाहरत् । स यत्र तेजः भूतानां नक्षत्राणामिवार्यमा ॥७०६॥

अथोत्पाट्याजितापीडं संग्रामापीडसंभवः । अनङ्गापीडनामाभूत्कृतो मम्मादिभिर्नृपः ॥७०७॥

मम्मोत्पलाहासहिष्णुत्वात्संभृतामर्षवैकृतः । तस्य राज्यं हियन्नासीत्सुखवर्मोत्पलात्मजः ॥७०८॥

वर्षत्रयेणोत्पलके ततः प्रभवमागते । सं चकारोत्पलापीडमजितापीडजं नृपम् ॥७०९॥

तेषामाश्वयुजीराजसदृशानां महीभुजाम् । भृत्यापि भृत्याः कृतिनो विभूतिं केपि लेभिरे ॥७१०॥ 710

सांधिविग्रहिकस्तस्य रत्नो नाम विभूतिभाक् । तस्मिन्कालेपि यश्चक्रे रत्नस्वामिसुरास्पदम् ॥७११॥

भेजुर्दार्वाभिसारादीन्देशानुत्सृज्य भूपताम् । विमलाभा ग्रामभुजो नराद्या व्यवहारिणः ॥७१२॥

राज्ञां कार्कोटवंश्यानां क्षीणप्रायमभूत्कुलम् । वंशस्तूत्पलकुल्यानां भुवि वैपुल्यमाययौ ॥७१३॥

सामर्थ्योपनतप्रायपार्थिवत्वो व्यपद्यत । विहेयास्सुखवर्माथ शुष्काख्येन स्वबन्धुना ॥७१४॥

ततः शूराभिधो मन्त्री सुखवर्मात्मजेकरोत् । राज्ययोग्योयमित्यास्थां सगुणेवन्तिवर्मणि ॥७१५॥ 715

एकविंशे स वर्षेथ प्रजाविप्लवशान्तये । विनिवार्योत्पलापीडं तमेव नृपतिं व्यधात् ॥७१६॥

यत्कृते विफलक्लेशा आसन्पितृपितामहाः । पौत्रेण हेलया प्राप्ता सा सिद्धिः पुण्यकर्मणा ॥७१७॥

कुम्भाः पयोनिधिपयोहरणप्रवृत्ता नित्यं वहन्ति किल ये विफलश्रमत्वम् ।
चित्रं क्षणादिह तदेकसमुद्भवेन संदर्शिता निखिलवारिधिपानलीला ॥७१८॥

अभूत तदनु मूर्ध्नि राजलक्ष्मीघटितकटाक्षकृतादिपट्टबन्धे ।
कनकघटमुखाम्बुनाभिषेकं झटिति पतन्तमवन्तिवर्मदेवः ॥७१९॥

संग्रामाद्युपदेष्टुमिन्दुतपनावुच्चैः स्ववंशोद्भवैर्भूपालैर्नवराज्यतन्त्रमिव स श्रोत्रद्वये धारयन् ।
राजा मण्डनकुण्डलद्वयमिषात्स्वच्छातपत्रच्छलाल्लक्ष्मीविष्टरपुण्डरीकघटितच्छायोदयो दिद्युते ॥७२०॥ 720

[1]इति श्रीकाश्मीरिकमहामात्यचण्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां चतुर्थस्तरङ्गः ॥
समाशतद्वये षष्टियुते मासेषु षट्सु च । त्रिदशाहेषु कार्कोटवंश्या सप्तदशाभवन् ॥

---

७०९. [1]) $A_4$ gloss सुखवर्मा. ७१०. [1]) Thus corr. by $A_1$ from °युजे मासस[2]; $A_2$ gloss आश्वयुजे मासि यथर्तवो ये निर्गच्छन्ति ते शैवाख्या इति प्रसिद्धास्तत्सदृशानां.—[2]) Thus $A_2$; $A_1$ कतिना. ७१६. [1]) $A_4$ gloss अवन्तिवर्माणम्. ७१९. [1]) Thus corr. by $A_3$ from $A_1$ तदुह. ७२०. [1]) Thus $A_1$; $A_2$ °तपनौ शुक्तं. *Colophon.* [1]) $A_2$ inserts before this the following note: रा १० वं ७९६ आश्विन: राजान: ७० सं १७८९

## ॥ पञ्चमस्तरङ्गः ॥

काम्येतेषु रुचिः कचेषु फणिनां पुंस्कोकिलस्येव ते गोभिः कण्ठतटस्य हृष्यति पुरो दृक्पद्दय चक्षुःश्रुतेः ।
संधानेभिनवे मिथो भगवतोर्जिह्वापृथक्स्पन्दिनी[2] भिन्नार्थां सदृशाक्षरामपि वदन्त्येवं गिरं पातु वः ॥१॥
अत्रन्निवर्मा साम्राज्यं प्राप्य पाटितकण्टकः । चकार चरितैश्चित्रं सतां कण्टकितं वपुः ॥२॥
आसतां क्षितिपामात्यौ तौ द्वावपि परस्परम् । आज्ञादाने[1] परिवृढौ भृत्यावाज्ञापरिग्रहे ॥३॥
कृतज्ञः क्षान्तिमान्क्ष्माभृन्मन्त्री भक्तः स्मयोज्झितः । अभङ्गुरोयं संयोगः सुकृतैर्जातु दृश्यते ॥४॥
5 विवेक्ता मामराज्यः स क्ष्माभृद्वीक्ष्य नृपश्रियम् । अविलुप्तस्मृतिर्धीमानन्तरेवमचिन्तयत् ॥५॥
गोभुजां वल्लभा लक्ष्मीर्मातङ्गोत्सङ्गलालिता । सेयं स्पृहां समुत्पाद्य दूषयत्युन्नतात्मनः ॥६॥
स नास्ति कश्चित्प्रथमं यः प्रदर्श्यानुकूलताम्[1] । संताप्यते न चरमं नीचस्त्रीस्येव नानया ॥७॥
चपलाभिः प्रवृद्धेयं स्त्रवैरयाभिः सहाम्बुधौ । तदेकचारिणीवृत्तमनया शिक्षितं कुतः ॥८॥
निःस्नेहा नान्वगात्कांश्चित्सुचिरं संस्तुताप्यसौ । परलोकाध्वगान्भूमानपाथेयानबान्धवान् ॥९॥
10 हेमभोजनभाण्डादि भाण्डागारे यदर्जितम् । कस्मादस्य न[1] नाथास्ते लोकान्तरगता नृपाः ॥१०॥
अन्योच्छिष्टेषु पात्रेषु भुक्तेषु महीभुजः । कस्माच्च लज्जामवहञ्शौचचिन्तां न वा दधुः ॥११॥
स्थूलेषु राजतस्थालकपालेष्ववलोकितैः । प्रेतभूपालनामाङ्कैः शङ्का कस्य न जायते ॥१२॥
कृष्टाः प्रविष्टे ये कालपाशे कण्ठान्मुमूर्षताम् । अशस्ता अपवित्राश्च ते हाराः कस्य हारिणः ॥१३॥
संदूष्य बाष्पैर्दुःखोष्णैस्त्यक्तान्पूर्वैर्मुमूर्षुभिः । स्पृशन्नेतानलंकारांश्च कः संकोचमाप्नुयात् ॥१४॥
या वारिराशिसलिलान्तरसंनिधानसंसेवयापि सततं मलिनैव लक्ष्मीः ।
15 पात्रेषु रोरशिखिभागिषु सा विमुक्ता नैर्मल्यमेति हरिणीव हुताशशौचा[2] ॥१५॥

---

१. [1]) A₂ gloss: काम्येतेषु इति । एतेषु प्रत्यक्षविषयेषु फणिनां सर्पाणां कचेषु बन्धनेषु ते कापि रुचिः कांश्चिदप्यभिलाषोऽस्ति । जटाजूटकक्ष्यादिबन्धनार्थमत्यन्तं सर्पानभिलषसीति देवीवचनम् । बन्धनस्थानानां कण्ठप्रकोष्ठकक्ष्यादीनां बहुत्वाद्बन्धनानामपि बहुवचनम् । एतेषु कचेषु केशेषु फणिनां सम्बन्धिनी अर्थान्मोक्षकारिणी कापि रुचिर्निर्वचनीया कान्तिरस्ति तव केशानाम् ... दर्शनमात्रेण मोहो जायते इति महादेववचनम् । पुंस्कोकिलस्येव तव कण्ठतटस्य गोभिर्ध्वनैः चक्षुःश्रुतेः सर्पस्य दृक् नेत्रं हृष्यति मोदते । कोकिलरुतमिव तव कण्ठध्वनिं श्रुत्वा सर्पस्य दृग्हर्षं सर्पाणां चक्षुरेव श्रवणस्थानीयमित्यतो दृक् हृष्यतीत्युक्तम् । गीतप्रियो हि सर्पः । यदुक्तम् । चक्षुर्भिः पश्यतीस वेत्ति गीतरसं फणी । साहित्यामृतसारस्य शङ्करो वेत्ति वा न वेति ॥ इति महादेववचनम् ॥ देवीवचनं तु । तव कण्ठतटस्य कोकिलस्येव करैः पुरो मे नेत्रं हृष्यति । गोभिः किरणैः । कोकिलतुल्यवर्णकण्ठतटनैल्यदर्शनेन सर्पस्य दृग्हर्षः दृग्विकासः कोकिलरुतं श्रुत्वा सर्पाणां नेत्रविकासो जायते शीतसमये तु संकोच इति लौकिकाः ॥.—[2]) Thus A₁; A₂ °स्पर्धिनी. ३. [1]) Thus corr. by A₁ from A₁ °धाने. ७. [1]) Thus corr. by later hand from A₁ °कूलवताम्. १०. [1]) न supplied by A₂. १५. [1]) A₂ gloss रोर: दारिद्र्यं.—[2]) A₁ °शौचे altered by later hand to °शौचा; A₂ glosses: अग्निशौचानां मृगाणां अग्निना लोमशुद्धिः अग्निशौचवस्त्रवत्, and हुताशेनाग्निना शौचं शुद्धिर्यस्याः सा हुताशशौचा । हरिणी मृगी इव यथा सा अग्नौ प्रक्षिप्तदेहा सती शुद्धलोमा भवति तद्वत्.

इति निर्ध्याय नृपतिर्नीत्वा स्वर्णाद्रिं चूर्णताम् । भिक्षेरञ्जलिभिः प्रादाद्विजन्मभ्यः करम्भकम् ॥१६॥
साधु भूपेति वक्तव्ये हर्षाधिगौरवं द्विजः । साध्ववन्तिविति वदन्नेकः प्रापाञ्जलीन्बहून् ॥१७॥
लक्ष्मीं कृत्वार्थिसात्कृत्स्नां कृतिनावन्तिवर्मणा । विभूतिधामरत्नत्रमात्रशेषा व्यधीयत ॥१८॥
अनन्तसंपत्संपन्नभूरिगोत्रप्रतिग्रहे । राजश्रीर्दुर्भरा तस्य नवत्वे भूभुजोभवत् ॥१९॥
शिशुनान्समरे भ्रातृन्भ्रातृव्यांश्च विजित्य सः । चकार भूरिभिर्वारै राज्यं विगतकण्टकम् ॥२०॥ 20
राज्यं निष्पाद्य निर्विघ्नमथ वात्सल्यपेशलः । विभज्य बन्धुभृत्येषु बुभुजे पार्थिवः श्रियम् ॥२१॥
भ्राता द्वैमातुरस्तेन शूरवर्माभिधः सुधीः । शान्तिप्रियेण वितते यौवराज्येभ्यषिच्यत ॥२२॥
खाधूयांहस्तिकर्णाख्याग्रहारौ प्रदाय यः । शूरवर्मस्वामिनं च गोकुलं च विनिर्ममे ॥२३॥
संपूर्णः पूर्णमहिमामर्त्यमाहात्म्यमन्दिरम् । पञ्चहस्तामदश्चक्रे मठं सुकृतकर्मठः ॥२४॥
भ्राता व्यधत्त नृपतेरपरः समराभिधः । केशवं चतुरात्मानं समरस्वामिनं तथा ॥२५॥ 25
द्वौ शूरावरजौ धीरविघ्नपाख्यौ निजाख्यया । व्यधत्तां विबुधावासौ श्रावन्यौ गणनापती ॥२६॥
भूत्वा वातूलतांच्छन्नप्रभावानुभवौ भुवि । गतौ सविभ्रमावेव हरावासान्वसम्भवताम् ॥२७॥ युग्मम् ॥
राजदौवारिकः श्रीमाञ्छूरस्यासीन्महोदयः । महोदयस्वामिनो यः प्रतिष्ठां समपादयत् ॥२८॥
रामटाख्यमुपाध्यायं ख्यातव्याकरणश्रमम् । व्याख्यातृपदके चक्रे स तस्मिन्सुरमन्दिरे ॥२९॥
अमात्येन महीभर्तुः श्रीप्रभाकरवर्मणा । कृतं प्रभाकरस्वामिनाम्नो विष्णोर्निकेतनम् ॥३०॥ 30
आयातेन भुक्तैः सार्धं दत्ता गृहभुकेन यः । मुक्ताः प्राप्य प्रतिष्ठायां चक्रे ख्यातां शुक्रावलीम् ॥३१॥
विच्छिन्नप्रसरा विद्या भूयः शूरेण मन्त्रिणा । सत्कृत्य विबुधः सभ्यान्देशेस्मिन्नवतारिता ॥३२॥
पुण्यैः क्षितिभुजां योग्यैरुह्यमाना महर्द्धयः । बुधाः प्रवृद्धसत्कारा विविशुर्भूपतेः सभाम् ॥३३॥
मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः । प्रथां रत्नाकरश्चागात्साम्राज्येवन्तिवर्मणः ॥३४॥
आस्थाने कृतमन्दारो वन्दी शूरस्य मन्त्रिणः । संकल्पस्मृतिमाधातुमिमामार्यां सदापठत् ॥३५॥ 35
अयमवसर उपकृतये प्रकृतिचला यावदस्ति संपदियम् । विपदि सदाभ्युदयिन्यां पुनरुपकर्तुं कुतोवसरः ॥३६॥
कृतः सुरेश्वरीक्षेत्रे बहुगेहविधायिना । शिवयोर्भिभवोस्तेन प्रासादः सोव्ययस्थितिः ॥३७॥
शूरेश्वरं प्रतिष्ठाप्य स्ववेश्मेव समुन्नतम् । चक्रे शूरमठं धीमान्स भोगाय तपस्विनाम् ॥३८॥
स्वकृते पत्तनवरे तेन शूरपुराभिधे । क्रमवर्तमवेशस्थो ढक्कोभूद्विनिवेशितः ॥३९॥
सुरेश्वरीप्राङ्गनतश्चक्रे भूतेश्वरं हरम् । मठं शूरमठान्तश्च शूरजो रत्नवर्धनः ॥४०॥ 40
काव्यदेव्यभिधा शूरवधूः शुद्धान्वया व्यधात् । सदाशिवं सुरेश्वर्यां काव्यदेवीश्वराभिधम् ॥४१॥

---

१६. [1]) $A_2$ gloss आदिशब्देन मौक्तिकादेः परिग्रहः.—[2]) $A_2$ glosses हस्ताभ्यां and करम्भं व्यामिश्रं खिचडू इति भाषया. २३. [1]) $A_2$ gloss धुधखोहा.—[2]) $A_2$ gloss व्याघ्राश्रमे वागहामे.—[3]) $A_2$ विधाय. २४. [1]) Thus $A_1$; $A_2$ सपूर्णपुण्यमहिमा.—[2]) Thus $A_1$; $A_2$ मन्मथा°.—[3]) $A_2$ gloss पाञ्चप. २५. [1]) $A_2$ gloss चान्द्रामग्रामे समरमोष. २७. [1]) तू written above the line by $A_2$; corresponding letter of $A_1$ smeared over. $A_2$ gloss द्वौ वातूलातुल्यसाविति स्वस्व तच्छारवमिव विधाय लोकविषये गोपितनिजप्रभावाविस्वर्थः.—[2]) Thus corr. by $A_2$ from $A_1$ हरौ. २८. [1]) $A_2$ gloss मइयाश्रमे. ३१. [1]) सार्धं supplied by $A_2$ in space left by $A_1$.—[2]) Thus corr. by later hand from $A_1$ ख्यातमुक्ता°. ३४. [1]) $A_2$ gloss ध्वनिमन्थकर्ता काव्यालङ्कारध्वनिग्रन्थकारः.—[2]) $A_2$ gloss रत्नाकरः हरविजयकारः. ३६. [1]) Thus corr. by $A_2$ from $A_1$ सभाभ्यु°. ३८. [1]) $A_2$ gloss शूरपुरे. ३९ [1]) $A_2$ gloss कापिलमकौरस्य.—[2]) $A_2$ gloss ढक्कः

निर्मत्सरोवन्तिवर्मा सोदरेभ्योनपायिनीम् । शूराय च सपुत्राय नृपतिप्रक्रियां ददौ ॥४२॥
छन्दानुवर्ती भूपालो दैवतस्येव मन्त्रिणः । आ बाल्याद्वैष्णवोप्यासीच्छैवतामुपदर्शयन् ॥४३॥
क्षेत्रे विश्वैकसाराख्ये मृतानामपवर्गदे । भूरिभोगास्पदं राज्ञा तेनावन्तिपुरं कृतम् ॥४४॥
45 अवन्तिस्वामिनं तत्र प्राग्राज्याधिगमात्कृती । विधाय प्राप्तसाम्राज्यश्चक्रेवन्तीश्वरं तदा ॥४५॥
त्रिपुरेश्वरभूतेशविजयेशेषु भूभृता । स्नानद्रोण्या रूप्यमय्या तेन पीठत्रयं कृतम् ॥४६॥
शूरस्यापि नरेन्द्रं तं ध्यायतः स्वाधिदैवतम् । तत्प्रियार्थमुपेक्ष्योभूद्धर्मः प्राणाः सुतोपि वा ॥४७॥
तथा चार्चयितुं जातु यातो भूतेश्वरं नृपः । विभवानुगुणे स्वस्मिन्पूजोपकरणेर्पिते ॥४८॥
ददर्श पीठे देवस्य पूजकैरुपपादितम् । वन्यमुत्पलशाकाख्यं तिक्तशाकमवस्थितम् ॥४९॥
50 तत्रस्थाः क्ष्माभुजा पृष्टास्तन्निवेदनकारणम् । व्यजिज्ञपन्क्षितिन्यस्तजानुप्राञ्जलयस्ततः ॥५०॥
डामरो धन्वनामास्ति लहरे विषये बली । शूरस्य मन्त्रिणो देव सेवको यः सुतोपमः ॥५१॥
दत्तेषु तेन ग्रामेषु निरवग्रहशक्तिना । निवेद्यमेतदेवास्मै भूतेशाय निवेद्यते ॥५२॥
अकाण्डशूलजनितां पार्थिवः कथयन्व्यथाम् । श्रुतमश्रुतवत्कृत्वा त्यक्तपूजोथ निर्ययौ ॥५३॥
पूजां संत्यज्य गमनं शूलं चाकस्मिकं प्रभोः । सहेतुकं विदञ्शूरो वृत्तान्तान्वेषकोभवत् ॥५४॥
55 ज्ञातवृत्तस्ततस्तूर्णं भूतेशाभ्यर्णवर्तिनः । क्रुद्धः सभागृहकस्थं भैरवस्याविशद्गृहम् ॥५५॥
निषिद्धजनबाहुल्यात्कृत्वा विरलपार्श्वगः । प्राहिणोद्धन्वमानेतुं ततो दूतान्पुनः पुनः ॥५६॥
स क्षितिं पत्तिपृतनासंमर्देन प्रकम्पयन् । अप्रकम्प्यतनुः प्राप क्रूरः शूरान्तिकं शनैः ॥५७॥
तस्य प्रविष्टमात्रस्य शस्त्रिणः शूरचोदिताः । मुण्डं सजीवितस्यैव चिच्छिदुर्भैरवाग्रतः ॥५८॥
आसन्ने सरसि क्षिप्त्वा रुधिरोद्गारि तद्वपुः । क्ष्मापतेः क्षालितामर्षो धीरः शूरो विनिर्ययौ ॥५९॥
60 तस्य श्रुत्वा शिरश्छेदं स्वपुत्रस्येव मन्त्रिणा । क्षीणमन्युः क्षितिपतिः सचैलस्नात इवाभवत् ॥६०॥
शूरोथ पृष्टकुशलो निर्व्यथोस्मीति भाषिणम् । उत्थाप्य तल्पात्तं देवं पूजाशेषमकारयत् ॥६१॥
इत्थं समस्तकृत्येषु भावज्ञः स महीपतेः । अनुक्तैव हितं तत्तत्प्राणांस्त्यक्त्वाप्यसाधयत् ॥६२॥
परस्परमनुत्पन्नमन्युकालुष्यदूषणौ । न दृष्टौ न श्रुतौ वान्यौ तादृशौ राजमन्त्रिणौ ॥६३॥
श्रीमेघवाहनस्येव साम्राज्येवन्तिवर्मणः । अशेषप्राणिनामासीदमारो दश वत्सरान् ॥६४॥
65 जलं ग्रहद्भिः शिशिरं तटानेत्याकुतोभयैः । तत्काले सेवितः पृष्ठे पाठीनैः शरदातपः ॥६५॥
अनुग्रहाय लोकानां भट्टश्रीकल्लटादयः । अवन्तिवर्मणः काले सिद्धा भुवमवातरन् ॥६६॥
चरित्रे बहुवक्तव्ये येषामेकस्य पावनः । अयं प्रासङ्गिकः कश्चिद्वृत्तान्तो वर्णयिष्यते ॥६७॥
देशः प्रबलतोयोयं महापद्मसरोजलैः । कूलिनीभिश्च शबलः स्वल्पोत्पत्तिः सदाभवत् ॥६८॥
ललितादित्यभूभर्तुरुद्योगेन बलीयसा । किंचिदाकृष्टसलिलः प्रापोत्पत्तिं समाक्रमः ॥६९॥

---

४४. ¹) $A_2$ gloss विश्वैकसाराख्ये भारतो इति ग्रामे.—²) Thus corr. by later hand from $A_1$ राजा. ४८. ¹) Thus corr. by later hand from $A_1$ जातो. ५१. ¹) $A_2$ gloss लाङ् इति प्रसिद्धे राष्ट्रे. ५५. ¹) $A_2$ separates स from the following and gives the gloss शूरः to स. ५६. ¹) Thus $A_1$; $A_2$ °बाहुल्यां भूत्वा. ५७. ¹) Thus $A_2$; $A_1$ शूरः. ६०. ¹) Thus corr. by $A_2$ from $A_1$ श्रव°.

जयापीडे क्रमायाते स्वल्पधीर्येषु राजसु । सलिलोपप्लवैरासीत्पुनरेवावृता क्षितिः ॥७०॥ 70
दीनाराणां द्विशती पञ्चाशत्यधिकाभवत् । धान्यखारीक्रये हेतुर्देशे दुर्भिक्षविक्षते ॥७१॥
अवन्तिवर्मणः पुण्यैर्जन्तूञ्जीवयितुं ततः । स्वयमन्नपतिः श्रीमान्सुय्यः क्षितिमवातरत् ॥७२॥
यस्याविज्ञातसंभूतेस्तुर्ये कालेपि निश्चितम् । अयोनिजत्वं कृतिनश्चरितैर्भुवनाद्भुतैः ॥७३॥
पुरा रथ्यारजःपुञ्जं संमार्जन्ती पिधानवत् । सुय्याभिधाना चण्डाली मृद्भाण्डं प्राप नूतनम् ॥७४॥
तस्मिन्पिधानमुद्धृत्य सापश्यन्मध्यशायिनम् । बालं कमलपत्राक्षं धयन्तं स्वकराङ्गुलीः ॥७५॥ 75
मात्रा कयापि त्यक्तोसौ सुन्दरो मन्दभाग्यया । अयेति चिन्तयन्त्यासीत्सा स्नेहात्प्रस्नुतस्तनी ॥७६॥
अदूषयन्त्यां स्पर्शेन धात्र्याः शूद्रस्त्रियो गृहे । तया विहितवृत्तिः स शिशुर्वृद्धिमनीयत ॥७७॥
स सुय्यनामा मतिमान्प्रवृद्धः शिक्षिताक्षरः । कस्याप्यासीद्गृहपतेरर्भकाध्यापको गृहे ॥७८॥
व्रतज्ञानादिनियमैस्तं सतां हृदयंगमम् । गोष्ठीषु विशदप्रज्ञं विदग्धाः पर्यवारयन् ॥७९॥
तेषां कथाव्यवस्थासु निन्दतां जलविप्लवम् । धीरस्ति मे निरर्थस्तु किं कुर्यामिति सोब्रवीत् ॥८०॥ 80
उन्मत्तस्येव वदतस्तस्य तच्चियमाहृतः । निशम्य भूभृच्चारेभ्यश्चिरमासीत्सविस्मयः ॥८१॥
ततस्तमानीय नृपः किं ब्रूष इति पृष्टवान् । धीरस्तीत्यादि राजाग्रेप्यवोचत्सोप्यसंभ्रमः ॥८२॥
वातूलोसाविति निजैरुक्तोप्यथ महीपतिः । धियं दिदृक्षुर्विदधे तस्यायत्तं निजं धनम् ॥८३॥
कोशाद्दीनारभाण्डानि बहून्यादाय हेलया । ययौ मडवराज्यं स नावमारुह्य रंहसा ॥८४॥
ग्रामे तत्र प्रवृद्धाम्बुनिमग्ने नन्दकाभिधे । एकं निक्षिप्य दीनारभाण्डं व्यावर्तत द्रुतम् ॥८५॥ 85
सत्यं वातूल एवासौ सभ्येष्वपि वदत्स्वपि । वार्तां निशम्य तां राजा तच्छिद्रान्वेषकोभवत् ॥८६॥
क्रमराज्यं स संप्राप्य देशे यक्षदराभिधे । अञ्जलिभ्यां निचिक्षेप दीनारान्सलिलान्तरे ॥८७॥
यत्र तीरद्वयालम्बिशैलनिर्लुठिताः शिलाः । चक्रुर्वितस्तां निष्पीड्य पयः प्रतिपयोन्मुखम् ॥८८॥
दुर्भिक्षोपहता ग्राम्या दीनारान्वेषिणस्तदा । शिलाः प्रवाहादुद्धृत्य वितस्तां समशोधयन् ॥८९॥
एवं दिनानि द्वित्राणि पयो युक्त्या निरुध्य तत् । वितस्तामेकतः स्थानात्कर्मकृद्भिरबन्धयत् ॥९०॥ 90
पाषाणसेतुबन्धेन सुय्येनाद्भुतकर्मणा । सप्ताहमभवद्रुद्धा निखिला नीलजा सरित् ॥९१॥
अधः प्रवाहं संशोध्य लुठद्दृषमतिक्रियाम् । कृत्वा तटैः शिलाबन्धैः सेतुबन्धमपाटयत् ॥९२॥
चिरकालनिरोधेन सोत्कण्ठेवाम्बुधिं प्रति । ततः प्रावर्तत जवादम्बु सागरगामिनी ॥९३॥
जम्बालाङ्का स्फुरन्मीना भूर्बभौ सलिलोज्झिता । व्यक्तकार्ष्ण्या सनक्षत्रा निर्मेघेव नभःस्थली ॥९४॥
यत्र यत्र विवेदौघबन्धं सलिलविप्लवे । तत्र तत्र वितस्तायाः प्रवाहान्नूतनान्व्यधात् ॥९५॥ 95
मूलस्रोतोन्यविनिष्क्रान्तभूरिस्रोता बभौ सरित् । एकभोगाश्रयानेकफणेवासितपन्नगी ॥९६॥
वामेन सिन्धुस्त्रिग्राम्या वितस्ता दक्षिणेन तु । यान्त्यौ ये समगंसातां प्राग्वैन्यस्वामिनोन्तिके ॥९७॥
वर्ततेद्य महानद्योः कल्पापायेप्यनत्ययः । संगमो नगरोपान्ते स सुय्योपक्रमस्तयोः ॥९८॥

७१. 1) Thus $A_1$; $A_2$ पञ्चाशदधि°.—2) Thus corr. by $A_2$ from $A_1$ °खारैः. ७३. 1) $A_2$ gloss चतुर्थे युगे. ७४. 1) Thus $A_1$; $A_2$ पुरापि°. ७७. 1) Thus corr. by later hand from $A_1$ °स्त्रया. ८२. 1) Thus corr. by $A_2$ from $A_1$ °सम्भवः. ८७. 1) $A_2$ gloss पारगन्तव्ये. ९७. 1) समगं supplied by $A_2$ in space left by $A_1$.

अथाप्यास्ता फलपुरपरिहासपुरस्थितौ । विष्णुस्वामी संगमस्य वैन्यस्वामी च तीरयोः ॥९९॥
100 सुन्दरीभवनाभ्यर्णग्रामस्थायतनस्य तु । योगशायी हृषीकेशः सुय्यस्याभ्यर्चितस्तटे ॥१००॥
दृश्यन्तेद्यापि सरितां पूर्वस्रोतस्तटोद्भवाः । निपाताकृष्टनौरज्जुरेखाङ्का जीर्णपादपाः ॥१०१॥
स्फुरत्तरङ्गजिह्वाः स नदीर्मार्गमजिग्रहत् । तास्ताः स्वेच्छानुसारेण मान्त्रिकः पन्नगीरिव ॥१०२॥
बद्ध्वा शैलमयान्सेतून्वितस्तां सप्तयोजनीम् । महापद्मसरोवारि स चकार नियन्त्रितम् ॥१०३॥
महापद्मसरःकुण्डाद्वितस्ता येन योजिता । जवान्निर्याति कोदण्डयन्त्रादिषुरिवाध्वना ॥१०४॥
105 उद्धृत्य सलिलादुर्वीमेवमादिवराहवत् । अनेकजनसंकीर्णान्ग्रामान्नानाविधान्व्यधात् ॥१०५॥
पालीभिरम्भः संरोध्य यान्कुण्डसदृशान्व्यधात् । कुण्डलानीति सर्वान्नसमृद्धान्ब्रुवते जनाः ॥१०६॥
उत्खातकीलनिवहानद्योऽद्यापि शरत्कृशाः । व्यञ्जन्ति जलगन्धेभबन्धनस्तम्भसंनिभान् ॥१०७॥
दीनारभाण्डानौज्झीत्स यदगाधजलान्तरे । नन्दके निर्गतजले स्थलान्तात्तदलभ्यत ॥१०८॥
अदेवमातृकान्ग्रामान्परीक्ष्य विविधाः क्षितीः । संविभेजे विभक्तेन नादेयेन स वारिणा ॥१०९॥
110 असिञ्चच्च जलैर्ग्रामान्ग्रामान्मृदमुपाहृताम् । या यावता क्षणेनागाच्छोषं तां तावता हृदि ॥११०॥
कालेन मत्वा सेकार्हां प्रतिग्रामं जलस्रुतेः । परिमाणं विभागं च परिकल्प्य निरत्ययम् ॥१११॥
चकार चानूलाद्याभिः सिन्धुभिः सर्वतो दिशः । सत्फलोदारकेदारसंपत्संपन्नविभ्रमाः ॥११२॥ तिलकम् ॥
न कश्यपेनोपकृतं न यत्संकर्षणेन वा । हेलया मण्डलेमुष्मिंस्तत्सुय्येन स्वकर्मणा ॥११३॥
भूमेर्जलादुद्धरणं द्विजक्षेत्रे तथार्पणम् । सेतुबन्धोश्मभिस्तोये यमनं कालियस्य च ॥११४॥
115 चतुर्षु सिद्धमिति यद्विष्णोः सत्कर्मजन्मसु । सुय्यस्य तत्पुण्यराशेरेकस्मिन्नेव जन्मनि ॥११५॥ युग्मम् ॥
यस्मिन्महासुभिक्षेषु दीनाराणां शतद्वयी । धान्यखारेः प्राग्भिहेतुरा सर्गोद्भवत्पुरा ॥११६॥
ततः प्रभृति तत्रैव चित्रं कश्मीरमण्डले । षट्त्रिंशता धान्यखारेर्दीनारैरुदितः क्रयः ॥११७॥
निर्गतायां महापद्मसलिलात्स्वर्गसंनिभम् । वितस्तायास्तटे चक्रे स्वनामाङ्कं स पत्तनम् ॥११८॥
स्वकृता स्थापिता तेन सरसि व्यामविकटे । आसंसारं स्थितामारमर्यादा झषपक्षिणाम् ॥११९॥
120 सुय्याकुण्डलनामानं ग्रामं कृत्वा द्विजातिसात् । सुय्यामुद्दिश्य तन्नाम्ना सुय्यासेतुं स निर्ममे ॥१२०॥
तेनोद्धृताश्च सलिलाद्भूषु ग्रामाः सहस्रशः । अवन्तिवर्मप्रमुखैर्जयस्थलमुखाः कृताः ॥१२१॥
ईदृशैर्धर्म्यवृत्तान्तैः प्रवर्तितकृतोदयः । अवन्तिदेवः पाति स्म मान्धातेव वसुंधराम् ॥१२२॥
प्राणप्रयाणसंयोगरोगग्रस्तस्ततो ययौ । क्षेत्रं स त्रिपुरेशाद्रिनिष्ठज्येष्ठेश्वराश्रितम् ॥१२३॥
आत्मनस्तत्र निश्चित्य विपत्तिं चिरगोपिताम् । प्राणान्ते प्राञ्जलिः शूरो वैष्णवत्वमदर्शयत् ॥१२४॥
125 तेनान्ते भगवद्गीताः शृण्वता भावितात्मना । ध्यायता वैष्णवं धाम निरमुच्यत जीवितम् ॥१२५॥

---

९९. ¹) Emended; $A_1$ अध्यव्या°, altered by later hand to अथप्या°. १०१. ¹) Thus G and Edd.; A °द्भव:. १०४. ¹) Thus G and Edd.; A °यान्ति. १०८. ¹) Emended; A °भाण्डानौ°. ११२. ¹) Supplied by $A_2$. ११५. ¹) Thus corr. by $A_2$ from $A_1$ यद्विष्णु°.—²) युग्मम् supplied by $A_2$. ११६. ¹) Thus corr. by $A_1$ from खारी. ११७. ¹) $A_2$ gloss द्वादशदीनाराणां वाहगन्धे इति कश्मीरदेशभाषया परिगणने षट्त्रिंशद्दीनाराः त्रिवाहगन्धा इति ज्ञेयाः. ११८. ¹) Thus corr. by $A_2$ from $A_1$ निर्गता वा.—²) $A_2$ gloss सुय्यपुराख्यम्. ११९. ¹) Thus corr. by $A_2$ from $A_1$ स्थितासार°. १२०. ¹) Thus corr. by later hand from $A_1$ सुय्यकु°.—²) Emended; A सय्या°.—³) Thus corr. by later hand from $A_1$ सय्या°. १२१. ¹) $A_2$ gloss विषयम्.

आषाढशुक्लपक्षस्य तृतीयस्यां क्षमापतिः[1] । वर्षे एकोनषष्टे स स्वर्गावासमुपाययौ ॥१२६॥

तस्मिन्प्रशान्ते प्रत्येकं विभवोल्लसितचेतसाम् । तुल्यमुत्पलवंश्यानां राज्येच्छा भूभुजामभूत् ॥१२७॥

ततश्चक्रे प्रतीहारः प्रबलाद्रत्नवर्धनः । नृपं शंकरवर्माणमवन्तिनृपतेः सुतम् ॥१२८॥

कर्णपो विश्वपामात्यस्तनूजं शूरवर्मणः[2] । तद्भ्रातुः सुखवर्माख्यं यौवराज्ये व्ययोजयत् ॥१२९॥

अन्तस्तयोरभूद्वैरं क्षितीशयुवराजयोः । तस्मिन्क्षणे क्षणे राज्यमासीद्दोलामिवाश्रयत् ॥१३०॥ 130

शिवशक्त्यादयो वीराः स्वामिकार्योज्झितासवः । यत्राभूवन्स्वसत्त्वस्य परीक्षाक्षणलाभिनः ॥१३१॥

कुर्वतां स्वामिशत्रूणां दानमानप्रतिश्रवम् । सत्त्वैकाम्याच्च ते यस्मादानुकूल्यमशिश्रयन् ॥१३२॥

पिण्डस्पृहां परित्यज्याहंकृताः शिक्षिताः क्वचित् । तावच्च वीततमसः श्ववृत्तिमनुजीविनः ॥१३३॥

कथंचिदथ निर्जित्य युवराजं महौजसम् । प्राज्यः स्वविजयोंकारश्चक्रे शंकरवर्मणा ॥१३४॥

सचाद्समरवर्माद्यैर्वितीर्णसमरोऽसकृत् । कीर्तिं श्रिया प्रणयिनीं लब्धयाधिविवेद सः ॥१३५॥ 135

अथ निर्जित्य दायादांल्लब्ध्वा लक्ष्मीं क्षितीश्वरः । जिष्णुर्दिग्विजयं कर्तुं श्रीमानासीन्महोद्यमः ॥१३६॥

तस्य कालबलाद्देशे प्रक्षीणजनसंपदि । लक्षाणि नव पत्तीनां द्वाराभिष्क्रामतोऽभवन् ॥१३७॥

स्वपुरस्योपकण्ठेऽपि योऽभूत्कुण्ठितशासनः । स एव रत्नोत्तंसेषु राज्ञामाज्ञां न्यवेशयत् ॥१३८॥

गच्छदाम्नायविच्छेदसंप्रदायः ककुब्जये । स्वप्रज्ञया समुन्नीतो राज्ञा शंकरवर्मणा ॥१३९॥

तत्सेना नरनाथानां पृतनाभिः पदे पदे । कूलापगेव कुल्याभिर्विशन्तीभिरवर्धत ॥१४०॥ 140

दार्वाभिसारराजेन्द्रं श्रयतां समुपाश्रिताः । अद्रिद्रोण्यो न वाहिन्यस्तत्सेनानादमादधुः ॥१४१॥

जनोल्बणैर्हरिगणैर्गृह्णन्हरिगणं क्षणात् । अनासादितदुर्गं स चक्रे दुर्गान्तरातिथिम् ॥१४२॥

लक्षाणि नव पत्तीनां वारणानां शतत्रयी । लक्षं च वाजिनामासीद्यस्य सेनापुरःसरम् ॥१४३॥

स गूर्जरं[1] जयव्यग्रः स्वपराभवशङ्किनम् । त्रैगर्तं[2] पृथिवीचन्द्रं निन्ये तमसि हास्यताम् ॥१४४॥

पुत्रं भुवनचन्द्राख्यं नीविं[1] प्रागेव दत्तवान् । स प्रभूत्प्रणतिं कर्तुं तस्याभ्यर्णमुपागतः ॥१४५॥ 145

अथ तत्कटकं भ्राम्यद्भूरिमण्डलनायकम् । वीक्ष्य संमुखमायान्तं महार्णवमिवोल्बणम् ॥१४६॥

समागमक्षणे त्रस्माच्छङ्कमानः स्वबन्धनम् । पलाय्य प्रययौ दूरं नि[1]र्वाणौजोविजृम्भितः ॥१४७॥ तिलकम्॥

यमप्रतिमसौन्दर्यमथाख्यायुः पुराविदः । तमेवाप्राक्षुरुत्त्रस्ता नृपाः कालमिवोल्बणम् ॥१४८॥

उत्खातालखानस्य संक्षये गूर्जरभूभुजः । बद्धमूलां क्षगाल्लक्ष्मीं भुजं दीर्घामरोपयत् ॥१४९॥

तस्मै दत्त्वा टक्कदेशं[1] विनयादङ्गुलीमिव । स्वशरीरमिवापासीन्मण्डलं गूर्जराधिपः ॥१५०॥ 150

हृतं भोजाधिराजेन स साम्राज्यमदापयत् । प्रतीहारतया भृत्यीभूते थक्कियकान्वये ॥१५१॥

---

१२६. 1) Thus corr. by $A_2$ from $A_1$ °पतेः. १२९ 1) Thus $A_2$; $A_1$ °पापरव°.—2) $A_4$ gloss अवन्तिवर्मभ्रातुः. १३४. 1) $A_4$ gloss सुखवर्माणम्. १३९. 1) Thus $A_1$; altered by later hand to °विच्छेदं. १४१. 1) $A_2$ gloss दर्वाभिसारः नाम गली इति भाषया.—2) $A_4$ gloss नरवाहनमाला.—3) $A_2$ आम्बता.—4) $A_4$ gloss दार्वाभिसारनृपस्य सेनाः. १४४. 1) $A_2$ gloss गूर्जरेति अथ गूर्जरः लघुगोजरात इति प्रसिद्धो देशः.—2) $A_2$ gloss त्रिगर्ते नगरकोटः तदधीशः. १४५. 1) $A_2$ writes in margin the gloss : नीविः । मेव इति देशभाषया म, which $A_2$ continues with सिद्धः यः स्वप्रतिनिधिः न्यूनबलेन माण्डलिकेनाधिकबलस्य राज्ञः प्रतीरक्षार्थं समर्प्यते ॥. १४७ 1) र्वि supplied by $A_2$ in space left by $A_1$. १५०. 1) $A_4$ gloss तक्कदेशः अद्यापि तत्र टाकरसो नाम गुहरेशात् दूरं वर्तमानो कोअमविंशातिकेन.

दरत्तुरुष्काधिपयोर्यः केसरिवराहयोः । हिमवद्विन्ध्ययोरासीदार्यावर्त इवान्तरे ॥१५२॥
उदभाण्डपुरे तस्थुर्यदीये निर्भया नृपाः । पक्षच्छेदव्ययात्रस्ता महार्णव इवाद्रयः ॥१५३॥
नक्षत्रेष्विव भूपेषु नमत्स्वीशोत्तरापथे । यस्यैव विपुला ख्यातिर्मार्तण्डस्येव मण्डलम् ॥१५४॥
155 स श्रीमांल्लल्लियः शाहिरलखानाभयः क्रुधा । निराकरिष्णोः[1] साम्राज्यात्तस्य सेवां न लब्धवान् ॥१५५॥
एवं दिग्विजयं कृत्वा प्राप्तः स निजमण्डलम् । प्रदेशे पञ्चसत्राख्ये स्वनाम्ना विदधे पुरम् ॥१५६॥
तस्य श्रीस्वामिराजस्य तनयोदकपथप्रभोः । पूर्णिमेव क्षपाबन्धोः सुगन्धाख्याभवत्प्रिया ॥१५७॥
तया समं पुरवरे सुरराजोपमो नृपः । तस्मिञ्शंकरगौरीशसुगन्धेशौ विनिर्ममे ॥१५८॥
द्विजस्तयोर्नायकाख्यो गौरीशङ्करसद्मनोः । चातुर्विद्यः कृतस्तेन वाग्देवीकुलमन्दिरम् ॥१५९॥
160 परकाव्येन कवयः परद्रव्येण चेश्वराः । निर्लोठितेन स्वकृतिं पुष्णन्त्यद्यतने क्षणे ॥१६०॥
स्वल्पसत्त्वो नरपतिः स्वपुरख्यापनाय सः । सारापहारमकरोत्परिहासपुरस्य यत् ॥१६१॥
ख्यातिहेतुः पट्टयानं पशूनां क्रयविक्रयौ । इत्यादि यत्पत्तनेस्ति तत्तस्मिन्हि पुरेभवत् ॥१६२॥
राज्यप्रदेन नृपते रत्नवर्धनमन्त्रिणा । श्रीरत्नवर्धनेशाख्यो व्यधीयत सदाशिवः ॥१६३॥
चित्रं नृपद्विपाः पूतमूर्तयः कीर्तिनिर्झरैः । भवन्ति व्यसनासक्तिपांसुस्नानमलीमसाः ॥१६४॥
165 अथ क्रमेण नृपतिर्लोभाभ्यासेन भूयसा । आधीयमानवित्तोभूत्प्रजापीडनपण्डितः ॥१६५॥
आरब्धैर्व्यसनैर्भूत्वा क्षीणकोशः क्षणे क्षणे । देवादीनां स सर्वस्वं जहारायासयुक्तिभिः ॥१६६॥
कर्मस्थाने पुरगृहग्रामादिधनहारिणा । तेनाट्टपतिभागाख्यगृहकृत्याभिधे कृते ॥१६७॥
धूपचन्दनतैलादिविक्रयोत्थं समाददे । द्रविणं देववेश्मभ्यः क्रयमूल्यंकलाच्छलात् ॥१६८॥
प्रत्यवेक्षां मुखे दत्त्वा विभक्तैरधिकारिभिः । चतुःषष्टिं सुरगृहान्सुमोषैतरदञ्जसा ॥१६९॥
170 ग्रामान्देवगृहग्राह्यान्राजा प्रतिकरेण सः । स्वयं स्वीकृत्य चोत्पत्तिं क्ष्मां कार्षक इव व्यधात् ॥१७०॥
तुलां कृत्वा त्रिभागोनां वर्षदेयां स पर्षदे । भुक्तिकम्बलमूल्यादिदम्भादभ्यधिकं ददौ ॥१७१॥
दिगन्तरस्थो ग्रामीणानूढभारानमागतान् । तद्देशार्घैर्भारमूल्यं वर्षमेकमदण्डयत् ॥१७२॥
वर्षेपरस्मिन्निखिलान्भारमूल्यं निरागसः । तथैव संख्यया ग्राम्यान्प्रतिग्राममदण्डयत् ॥१७३॥
इत्येषा रूढभारोढिः प्रथमं तेन पातिता । दारिद्र्यदूती ग्रामाणां या त्रयोदशधा स्थिता ॥१७४॥
175 स्कन्दकग्रामकायस्थमासवृत्त्यादिसंग्रहैः । अन्यैश्च विविधायासैर्व्यधाद्ग्रामान्स निर्धनान् ॥१७५॥
तुलापहारोपनयग्रामदण्डादिसंग्रहैः । इत्येष तेन संवाहो गृहकृत्ये प्रवर्तितः ॥१७६॥
व्यधत्त पञ्च दिविरांस्तस्मिन्भिन्नकर्मणि । षष्ठं तथा गञ्जवरं शाकचं लवटाभिधम् ॥१७७॥

---

१५३. [1]) This verse is added in margin by $A_2$; found in G R. १५४. [1]) $A_1$ विपुलख्यातिर्मा°; $A_2$ has altered this to विपुला ख्यातिर्मा°, but has subsequently restored the reading of $A_1$. G follows $A_2$, R reads as $A_1$. १५५. [1]) Thus corr. by $A_2$; $A_1$ °ल्लिय:.—[2]) Thus corr. by $A_1$ from °रिष्णु:; R G °रिष्णोः. १५६. [1]) $A_2$ gloss पञ्चत्रवर्णा.—[2]) $A_2$ gloss शङ्करपुर. १५७. [1]) $A_2$ gloss शङ्करवर्मण:.—[2]) $A_2$ gloss कन्या. १५८. [1]) Emended; A गौरीश°. १६६. [1]) Thus corr. by $A_2$ from $A_1$ अधीयमान°. १६८. [1]) Thus $A_1$; $A_2$ °नचेला°.—[2]) Thus corr. by later hand from $A_1$ °मूल्ये.—[3]) $A_2$ gloss कलालाभ:. १६९. [1]) Thus $A_2$; $A_1$ सुमोषेत°. १७१. [1]) Thus $A_1$; $A_2$ भुक्क°.—[2]) दम्भा supplied by $A_2$ in space left by $A_1$. १७७. [1]) Thus $A_1$. Cf. vi. 130; vii. 111, 119; misread लिपिराक्स in R G Edd.

आत्मनो निरयं मूढः सोङ्गीकृत्येत्युपक्रियाम् । भाविनामकरोद्राज्ञां पापी[1] पद्यां नियोगिनाम्[2] ॥१७८॥
निमित्तं मण्डलेमुष्मिन्सविधानामनादरे । राज्ञां प्रतापहानौ च नान्यः शंकरवर्मणः ॥१७९॥
मुख्येन गुणिनां राज्ञा धनहान्या प्रथापहाः । मूर्खेण येन कायस्था हास्याः पुत्राः प्रवर्तिताः ॥१८०॥ 180
तथा कायस्थभोज्या भूर्जाता तस्यस्यवेक्षया । यथा संजायतेवर्णे हरणादिव भूभुजाम् ॥१८१॥
तस्मिन्घोरे प्रजादुःखे कृपार्द्रः पृथिवीपतिम् । पुत्रो गोपालवर्माख्यः कदाचिदिदमब्रवीत् ॥१८२॥
प्रदातुस्तात भवतः पूर्वं न्यासीकृतः स्थितः । वरो यः सत्यसंधस्य सोधुना प्रार्थ्यते मया ॥१८३॥
कायस्थप्रेरणादेतैर्दैवेनाद्य प्रवर्तितैः । आयासैः श्वासशेषैव प्राणवृत्तिः शरीरिणाम् ॥१८४॥
न च नामास्ति तातस्य काचिल्लोकद्वयोचिता । मनागपि हितप्राप्तिरेतया जनपीडया ॥१८५॥ 185
अदृष्टविषयां वार्तां गहनां विवृणोति कः । दृष्टेप्यनिष्टादन्यन्न कर्मणानेन दृश्यते ॥१८६॥
एकतो व्याधिदुर्भिक्षप्रमुखा विपदोखिलाः । प्रजानामेकतस्त्वेका लुब्धता वसुधापतेः ॥१८७॥
भूभुजोभ्यस्तलोभस्य श्रीः कैश्चिन्नाभिनन्द्यते । अकालकुसुमस्येव फलसंभावनोज्झिता ॥१८८॥
दानं च सूनृता सूक्तिर्विश्वसंवननं[1] प्रभोः । लोभः पूर्वं तयोरेव विनाशाय महोद्यमः ॥१८९॥
प्रतापमायतिं शोभां हेमन्ताहस्य वारिदः । स्मृतिशेषां करोत्येव लोभश्च पृथिवीभुजाम् ॥१९०॥ 190
दायादा व्ययभीरुतापरिहतारम्भैर्भवन्त्युद्यता भृत्याः प्रत्युपकारकातरमतेः कुर्युर्न केपि प्रियम् ।
राशीभूतधनस्य जीवितहतौ शश्वद्यतेरन्विजा भूभर्तुः क्रियते द्विषेव रभसाल्लोभेन किं नाप्रियम् ॥१९१॥
राजसंवाहनामार्यं तत्रायासो जनाद्धरत् । तदेष लोभप्रभवः प्रजानाथ निवार्यताम् ॥१९२॥
श्रुत्वेति राजपुत्रस्य सौजन्येनोज्ज्वलं वचः । स्मितधौताधरो राजा शनैर्वचनमब्रवीत् ॥१९३॥
तथाकृत्यविसंवादि वचः सौजन्यपेशलम् । स्मारयत्यद्य मामेतच्चित्तवृत्तिं पुरातनीम् ॥१९४॥
कुमारभावे पूर्वं मे तवेवार्द्रान्तरात्मनः । प्रजावत्सलता वत्स पर्याप्ता पर्यवर्धत ॥१९५॥ 195
सोहं धर्मे महद्धर्मं शीते दत्त्वाच्छर्मभुकम्[1] । पदातिरपपादत्रः पित्रा संचारितोभवम् ॥१९६॥
मृगव्यादौ हयैः सार्धमटन्तं कण्टकक्षतम् । अन्तर्बाष्पं मां विलोक्य तमसूयिषुरप्यगाः[1] ॥१९७॥
स तानुवाच सामान्यो भूत्वाहं राज्यमाप्तवान् । काले काले सेवकानां जाने सेवापरिश्रमम् ॥१९८॥
ईदृग्दुःखमयं भुक्त्वा शास्यत्यन्यव्यथां ध्रुवम् । प्राप्तैश्वर्यो भवेन्मूढो गर्भभरतथान्यथा ॥१९९॥
उपायैरीदृशैर्योहं कृतः पित्रा सुशिक्षितः[1] । तेनापि प्राप्तराज्येन मयैवं पीडिताः प्रजाः ॥२००॥ 200
गर्भवासव्यथां जातः शरीरी विस्मरेद्यथा । प्राप्तराज्यस्तथा राजा नियतं पूर्वचिन्तनम्[1] ॥२०१॥
त्वयैव तस्मादेकोद्य वरो मह्यं प्रदीयताम् । प्राप्तराज्यः प्रजापीडां मा कार्षीस्त्वमतोधिकाम् ॥२०२॥
साध्वयमिति तेनोक्तः कृतान्योन्यस्मितैर्भटैः । राजाग्रैर्वीक्षितश्चासीत्कुमारो ह्रीनताननः ॥२०३॥
त्यागभीरुतया तस्मिन्गुणिसङ्गपराङ्मुखे । आसेवन्तावरा वृत्तीः कवयो भल्लटादयः ॥२०४॥
निर्वेतनाः सुकवयो भारिको लवटस्त्वभूत् । प्रसादात्तस्य दीनारसहस्रद्वयवेतनः ॥२०५॥ 205

---

१७८. [1]) Thus A; *varia lectio* in R G पापीयस्या.—[2]) Thus corr. by $A_3$ from $A_1$ नियोगि°. १८९. [1]) $A_2$ gloss अपचयः. १९६. [1]) Thus $A_3$; $A_1$ °दत्तोत्तमं°. १९७. [1]) Thus corr. by $A_3$ from $A_1$ °रुच्चाः. २००. [1]) Thus corr. by $A_3$ from $A_1$ °क्षिताः. २०१. [1]) $A_3$ °चिन्तितम्.

कल्यपालकुले जन्म तस्यैव प्रमाणितम् । क्षीबोचितापभ्रंशोक्तैर्देवी वाग्यस्य नाभवत् ॥२०६॥
वेष्टितश्मश्रुरुष्णीषी प्राणस्थाने प्रदेशिनी । ध्यानैकाग्रा दृगित्यासीत्सुखराजस्य[1] मन्त्रिणः ॥२०७॥
योगमार्गोचितो वेषो दुर्नयासेविनः प्रभोः । छन्दानुवृत्त्या स प्राप नटस्येव विडम्बनाम् ॥२०८॥ युग्मम्॥
सोऽनुगैः सह निर्द्रोहं जघान द्रोहशङ्कया । भूरं दार्वाभिसारेशं शर्वर्यां नरवाहनम् ॥२०९॥
210 प्रजाभिशापे पतिते नृपस्योन्मार्गवर्तिनः । त्रिंशद्विंशाः[1][2] सुतास्तस्य व्यपद्यन्तामयं विना ॥२१०॥
वंशः श्रीर्जीवितं दारा नामापि पृथिवीभुजाम् । क्षणादेव क्षयं याति प्रजाविप्रियकारिणाम् ॥२११॥
इत्युक्तं वक्ष्यते चाग्रे व्यक्तमेतत्तु चिन्त्यताम् । प्रनष्टं तस्य नामापि यथा क्रूरेण कर्मणा ॥२१२॥
नाम्ना पत्तनमित्येव[1] प्रख्यातं स्वपुरं कृतम् । कस्यान्यस्याभिधाध्वंसि यथा शंकरवर्मणः ॥२१३॥
स्वकीयः सुखराजस्य तेन द्वाराधिपः कृतः । वीरानकाभिधे[1] स्थाने प्रमादादासदद्वधम्[2] ॥२१४॥
215 तत्कोपात्स स्वयं राजा दत्तयात्रो मदोर्जितः । वीरानकं समुन्मूल्य प्रविवेशोत्तरापथम् ॥२१५॥
सिन्धुकूलाश्रयान्देशांश्छित्त्वा भूरीन्भयातुरैः । कृतानतिर्महीपालैः प्रत्यावृत्तोऽभवत्ततः ॥२१६॥
उरशां[1] विशतस्तस्य वास्तव्यैरौरशैः समम् । निकेतहेतोः सैन्यानामकस्मादुदभूत्कलिः ॥२१७॥
गिरिशृङ्गाधिरूढेन श्वपाकेन निपातितः । वेगवाही शरस्तस्य प्रमादादविशद्गलम् ॥२१८॥
मुमूर्षुरामान्कटकं संरक्ष्य नयतेति सः । उक्त्वा कर्णीरथारूढः[1] स्थानात्तस्माद्विनिर्ययौ ॥२१९॥
220 हीनदर्शनसामर्थ्यः परिज्ञाय शनैर्गिरा । क्रन्दन्त्या वपुरालिङ्ग्य[1] स्थितायाः क्षामभाषितः ॥२२०॥
पुत्रं गोपालवर्माख्यं न्यासीकृत्य च रक्षितुम् । शिशुदेश्यं महादेव्याः सुगन्धाया अबान्धवम् ॥२२१॥
फाल्गुने कृष्णसप्तम्यां वत्सरे सप्तसप्ततौ । उत्खाय मानविशिखो मार्ग एव व्यपद्यत ॥२२२॥ तिलकम्॥
सुखराजादयः[1] सैन्यं रक्षन्तः परभूमिषु । वृत्तान्तैर्गोपयन्तस्तं[2] यान्त एवाभवन्पथि ॥२२३॥
तं वल्कसूत्रैस्ते मूर्ध्नो नम्रतोच्छ्वसनावहैः । प्रतिप्रणामं ग्रामाणां सामन्तानामकारयन् ॥२२४॥
225 षड्भिर्दिनैर्निजे स्थाने प्राप्ते बोल्यासकाभिधे[1] । चक्रिरे गतसंत्रासास्ततस्तस्यान्त्यसत्क्रियाम् ॥२२५॥
द्विजः सुरेन्द्रवत्याद्या राज्ञ्यो राजानमन्वयुः । वेलावित्तः[1] कृतज्ञश्च जयसिंहाह्वयः कृती ॥२२६॥
द्वौ लाडो वज्रसारश्च तं भृत्यावनुजग्मतुः । इति षड्भिश्चिताकुण्डैः सहसाक्रियताग्निसात् ॥२२७॥
ततो जुगोप गोपालवर्मा धार्मिकतोज्ज्वलः । सुगन्धया पाल्यमानः सत्यसंधो वसुंधराम् ॥२२८॥
मध्ये लालितकादीनां[1] दुर्वृत्तानां वसन्नपि । अनतिक्रान्तबाल्योऽपि दुःसंस्कारान्न सोऽग्रहीत् ॥२२९॥
230 भूपालजननी भोगैर्वैधव्येऽधिकमुन्मदा । सा प्रभाकरदेवाख्यमचीकमत मन्त्रिणम् ॥२३०॥
तया निर्भरसंभोगप्रीतया स व्यधीयत । सौभाग्यपदभृङ्गारमौलिच्छत्रत्रयाङ्कितः ॥२३१॥
कोशाध्यक्षेण रागिण्यास्तस्या लुण्ठितसंपदा । उदभाण्डपुरे[1] तेन शाहिराज्यं व्यजीयत[2] ॥२३२॥

२०७. [1]) Thus corr. by $A_2$ from $A_1$ °रागस्य. २१०. [1]) न supplied by $A_3$.—[2]) $A_1$ writes below this word ५०. २१३. [1]) $A_2$ gloss पट्टन्. २१४. [1]) $A_2$ gloss द्वारविषयायां वीरानकं.—[2]) $A_4$ gloss सुखराजस्य जीव°. २१७. [1]) $A_2$ gloss उडू. २१९. [1]) Thus $A_2$; $A_1$ °कड्डान्स्था°. २२०. [1]) Thus corr. by later hand from $A_1$ °लिङ्ग्या. २२३. [1]) $A_3$ gloss मन्त्रिणः.—[2]) Thus $A_1$; $A_3$ वृत्तान्तं गो°. २२५. [1]) Thus A R G; $A_2$ gloss वराहमूलसमीपे द्वारवर्त्यां. २२६. [1]) Emended: A R वालावित्तः; G वालावित्तुः. Cf. वेलावित्त: vi. 73, 106; 324. २२९. [1]) $A_3$ gloss लालितकाः पञ्चाशत्. २३२. [1]) Thus corr. from $A_1$ उदभाण्ड° by $A_2$ which adds the gloss वैहन्द; R G read as $A_2$. Cf. उदभाण्डपुरे v. 153.—[2]) Thus $A_1$; $A_2$ व्यधीयत; G R follow $A_2$.

आज्ञातिक्रमिणः शाहेः हृत्वा कमलुकाभिधाम् | तोरमाणायं स प्रादाद्राज्यं लल्लियसूनवे ||२३३||
प्रत्यावृत्तोथ नगरं विवेश विजयोर्जितः | शौर्यभृङ्गारवसती साभिमानः स्वविग्रहे ||२३४||
स राजजननीजारः साहंकारो जयार्जनात् | मानक्षतिमधिक्षेपैर्वीराणां व्यधितान्वहम् ||२३५|| 235
क्षुद्रेण कामिना वेश्यावेश्मनीव नृपास्पदे | तेनावृते संप्रवेशो नाभूदन्यस्य कस्यचित् ||२३६||
शनैर्विज्ञातवार्तस्य धनमानापहारकृत् | सोभूदक्षिगतोत्यर्थं राज्ञो गोपालवर्मणः ||२३७||
निधत्ते यत्र गञ्जेस्मिंस्तत्सर्वं शाहिविग्रहे | गतमित्यब्रवीद्रूपं स कोशगणनोद्यतम् ||२३८||
अथ गञ्जाधिपो राजभीतः स्वार्वोदयेविनम् | रामदेवाह्वयं बन्धुमभिचारमकारयत् ||२३९||
तयाभिचारक्रियया भुक्तभूर्वत्सरद्वयम् | गोपालवर्मनृपतिर्जातदाहो व्यपद्यत ||२४०|| 240
व्यक्तीभूतकुकर्मा स राजदण्डभयाकुलः | रामदेवोवधीत्पापः स्वयमेव स्वविग्रहम् ||२४१||
रथ्यागृहीतो गोपालवर्मभ्राताथ संकटः | बभूव प्राप्तराज्यः स दशभिर्दिवसैर्व्यसुः ||२४२||
अथ वंशक्षये ग्रस्ते राज्ञः शंकरवर्मणः | प्रजाप्रार्थनया राज्यं सुगन्धा विदधे स्वयम् ||२४३||
गोपालपुरगोपालमठगोपालकेशवान् | सा पुरं च स्वनामाङ्कं विदधे धर्मवृद्धये ||२४४||
गोपालवर्मणो जाया नन्दानिन्द्यान्वयोद्भवा | शिशुरप्यभवन्नन्दामठकेशवधारिणी ||२४५|| 245
अन्तर्वत्न्याः क्षणे तस्मिन्पत्न्या गोपालवर्मणः | अथ लक्ष्म्यां बबन्धास्थां श्वश्रूः संतानकाङ्क्षिणी ||२४६||
तस्यां विपन्नापत्यायां प्रसवान्तेतिदुःखिता | साभूदन्वयिने राज्यं कस्मैचिद्दातुमुद्यता ||२४७||
तस्मिन्काले महीपालनिग्रहानुग्रहक्षमम् | तत्र तन्त्रिपदातीनां कृतसंहत्यभूत्कुलम् ||२४८||
ततः समाश्रितैकाङ्गा स्वयं संवत्सरद्वयम् | सुगन्धा विदधे राज्यं सा मित्रत्वेन तन्त्रिणाम् ||२४९||
योग्याय दातुं साम्राज्यं कस्मैचित्सा किलैकदा | मन्त्राय मन्त्रिसामन्तांस्तन्त्र्येकाङ्गानढौकयत् ||२५०|| 250
अवन्तिवर्मवंशान्ते नप्तारं शूरवर्मणः | गग्गायाः स्वकुटुम्बिन्याः संजातं सुखवर्मणा ||२५१||
अनुमतो मे संबन्धिस्नेहादेवं भवेदिति | राज्ये निर्जितवर्माख्यं कर्तुं तस्या मनोभवत् ||२५२|| युग्मम् ||
तथा तदुक्तं विषयव्यसनित्वेन जागरात् | रात्रौ दिवाशयतया योप्यनुत्थानदूषितः ||२५३||
नाम पङ्गुरिति प्राप राज्ये का तस्य योग्यता | इत्युदीर्याभवन्भ्रान्तो यावत्केचन मन्त्रिणः ||२५४||
संहतैर्भेदनिर्यातैस्तावन्निर्जितवर्मजः | दशवर्षः कृतो राजा पार्थस्तन्त्रिपदातिभिः ||२५५|| तिलकम् || 255
ते गञ्जाधिपवाक्यानां सुगन्धोत्पाटनात्कृतम् | प्रायश्चित्तममन्यन्त मानक्षतिविधायिनाम् ||२५६||
सा राजधान्याः साम्राज्यपरिभ्रष्टा विनिर्ययौ | कृताधिकारा हारस्य पतितैर्बाष्पबिन्दुभिः ||२५७||
शरणं प्रत्यभात्कृत्यो यो यस्तस्याः क्रमागतः | तं तमैक्षिष्ट निर्यान्ती विपक्षैः सह संगतम् ||२५८||
वर्षे एकाग्रनवते संभूयैकाङ्गसैनिकाः | गत्वा सुगन्धामानिन्युः पुनर्हुष्कपुरस्थिताम् ||२५९||

---

२३३. [1]) Thus corr. by later hand from A₁ °धम्.—[2]) Thus A₂; A₁ तोमराणाय. २३५. [1]) Thus A₂; A₁ °जननीसङ्गात्सा-भिमानी.—[2]) Thus corr. by A₂ from A₁ मन:°. २३७. [1]) Thus corr. by A₂ from A₁ °मानाप°. २३९. [1]) A₂ gloss प्रभाकर:. २४३. [1]) A₂ gloss गोपालवर्मसङ्कटयोर्माता सुगन्धा.—[2]) Thus corr. by A₂ from A₁ पुरम्. २४४. [1]) A₂ gloss गुरीपुरम्. २४५. [1]) A₂ gloss नन्दीमठं. २४८. [1]) Thus corr. by A₂ from A₁ विग्रह°.—[2]) Thus A₂; A₁ तच. २४९. [1]) Thus emended; A G R समित्र°.—[2]) A₂ v. l. मन्त्रिणाम्; struck out. २५०. [1]) Thus A₂; A₁ °न्मात्यमथै°. २५४. [1]) A₂ gloss निर्जितवर्मा. २५६. [1]) A₂ gloss कोशरक्षाः. २५७. [1]) Thus corr. by later hand from A₁ राज्य°.—[2]) Thus A₂; A₁ हता°. २५९. [1]) Thus A₁; A₂ एकोन°.—[2]) A₂ gloss वराहमूले.

260 तामापतन्तीमाकर्ण्य पार्थानुचरका भयात् । वैशान्ते तन्त्रिणः सर्वे निर्ययुः समरोन्मुखाः ॥२६०॥
ते जित्वा नवते वर्षे वैशाखे भिन्नसंहतीन् । एकाङ्गान्व्यूढसंघातान्बबन्धुस्तां पलायिताम् ॥२६१॥
निष्पाल्कविहारान्तस्तैर्बद्धा सा व्यपद्यत । अनित्यपतनोच्छ्राया विचित्रा भाग्यवृत्तयः ॥२६२॥
अस्मिन्धनजनक्षैण्यनिमित्तं मण्डलोत्तमे । सर्वतोदिक्कमुत्तस्थावथानर्थपरंपरा ॥२६३॥
जनकः पालको भूत्वा पङ्गोर्बालस्य भूपतेः । सामात्योपीडयल्लोकमुत्कोचग्रहणत्वरः ॥२६४॥
265 भूभुजो नामकायस्था इवान्योन्यविपाटनम् । दत्ताधिकाधिकोत्कोचा विदधुस्तन्त्रिसेवया ॥२६५॥
बह्राजैः कन्यकुब्जाद्या विलब्धास्तत्र मण्डले । तन्त्रिणां हुण्डिकादानाद्भूभुजां जीविकाभवत् ॥२६६॥
विष्णुः पुराणाधिष्ठाने[1] मेरुवर्धनमन्त्रिणा । श्रीमेरुवर्धनस्वामिनामा येन व्यधीयत ॥२६७॥
तदात्मजाः क्षणे तस्मिन्गहनद्रोहचाक्रिकाः । चक्रुर्निगूढराज्येच्छाः प्रजायासैर्धनार्जनम् ॥२६८॥ युग्मम् ॥
सार्धं सुगन्धादित्येन[1] गूढं शंकरवर्धनः । तेषां ज्येष्ठो बद्धसख्यो[2] मुमोष नृपमन्दिरम् ॥२६९॥
270 क्षीणप्रजे क्षणे तस्मिन्क्षारपात इव क्षते । उदीपः[1] प्लाविताशेषशरच्छालिरजृम्भत ॥२७०॥
खारी सहस्रक्रेयायां दुर्लभे भोजनेभवत् । वर्षे त्रिनवते[1] घोरे दुर्भिक्षेण जनक्षयः ॥२७१॥
शवैश्चिरप्रविष्टाम्बुसंसेकोच्छूनविग्रहैः । वितस्ता सर्वतश्छन्ना दुर्लक्ष्य[1]सलिलाभवत् ॥२७२॥
विश्वतोस्थिमये जाते[1] नैरन्ध्र्यात्क्षितिमण्डले । सर्वभूतभयादायि श्मशानैक्यमजायत ॥२७३॥
महार्ह[1]धान्यसंभारविक्रयप्राप्तसंपदः । मन्त्रिणः क्ष्मापतः प्रापुस्तन्त्रिणश्च धनाढ्यताम् ॥२७४॥
275 आधेयैः[1] क्ष्माभुजः सोभून्मन्त्री यत्तादृशीः प्रजाः । विक्रीय बाहयन्नासीत्तन्त्रिणां हुण्डिकाधनम् ॥२७५॥
अटव्यां वृष्टि[1]संपाते वातवर्षैरुपद्रुतम् । बहिः सर्वं जनं पश्यन्कश्चिदाप्तोष्णमन्दिरः ॥२७६॥
यथा तथा जनं दुःस्थं वीक्ष्य कापुरुषश्चिरम् । राजधानीस्थितः पङ्गुः स्वसुखं बहमन्यत ॥२७७॥युग्मम्॥
तुञ्जीनचन्द्रापीडादिप्रजापालप्रियाः प्रजाः । एवं तस्मिन्क्षणे नीताः संक्षयं राजराक्षसैः ॥२७८॥
प्रापुश्चिरमवस्थानं पार्थिवा न तदा क्वचित् । धारासंपातसंभूता बुद्बुदा इव दुर्दिने ॥२७९॥
280 पार्थः पितरमुत्पाद्य कदाचित्प्राभवत्स्वयम् । कदाचित्स तमुत्पाद्य तन्त्रिचक्रिकयाप्यभूत् ॥२८०॥
अप्रीणयत्पङ्गुवधूवद्ग्राममण्डलं युवा । सुगन्धादित्यबीजाभो व्यवायविधिसेवया ॥२८१॥
राज्यां वप्पटदेव्याः स निर्दयैः सुरतोत्सवैः । खण्डयामास कण्डूतिं साप्यस्यार्थैषणां धनैः ॥२८२॥
भगिनीभगसौभाग्यमद्रराज्याः स्वयं ददुः । यां पङ्गवे मनोज्ञाङ्गीं मेरुवर्धनसूनवः ॥२८३॥
सुगन्धादित्यमौत्सुक्यात्सापि देवी मृगावती । स्वयं संबुभुजेभ्यर्थ्य कान्ता कामितकामिनी ॥२८४॥
285 पर्यायेणाभवत्कृत्यः स तयोर्भोगवृद्धये । दरिद्रयोषितोरेकं भुक्तिपात्रमिवान्वहम् ॥२८५॥

---

२६४. [1]) $A_2$ gloss निर्जितवर्मा. २६६. [1]) Thus $A_1$; altered by later hand to बह्राजकैः. २६७. [1]) $A_2$ gloss पांद्रेठन् इति प्रसिद्धे ग्रामे.—[2]) $A_4$ gloss पङ्गुत्वभुवेन. २६८. [1]) $A_2$ gloss निर्जितवर्मणः तदात्मजाः चक्रवर्मा शूरवर्मा । शम्भुवर्धनः शंकरवर्धनः मेरुवर्धनपुत्राः २६९. [1]) $A_2$ gloss मन्त्रिणा.—[2]) $A_4$ सुगन्धादित्येन सह. २७०. [1]) Thus corr. by later hand from $A_1$ उद्वीपः; $A_4$ gloss द्वीपो (Kaśmīrī). २७१. [1]) $A_4$ gives the full date *Saptarshi* ३९९३. २७२. [1]) Thus $A_1$; altered by later hand to दुर्लक्ष°. २७३. [1]) जाते supplied by $A_3$ in space left by $A_1$. २७४. [1]) $A_3$ महार्घ°. २७५. [1]) Thus $A_1$, $A_3$ आदेयः. २७६. [1]) Thus corr. by $A_3$ from $A_1$ वृष्टि°. २८१. [1]) $A_3$ gloss मन्त्री.—[2]) $A_3$ gloss व्यवायः मैथुनम्. २८२. [1]) $A_4$ gloss चक्रवर्मणाद्युः. २८५. [1]) $A_4$ gloss तयोर्वप्पटदेवीमृगावत्योः पङ्गुपत्न्योः.

पुत्रयो राज्यलाभाय स्पर्धयाभ्यां स्वमन्त्रिणे । दत्ता त्रिभुवनभट्टा धनदानैः[1] सदक्षिणा ॥२८६॥

अथ पार्थं समुत्पाद्य तत्पिता पङ्गुराश्रितः । तन्त्रिभिः सप्तनवते वर्षे पौषेभिषेचितः ॥२८७॥

माघेष्टानवते वर्षे सोभिषिच्य शिशुं सुतम् । चक्रवर्माभिधं राज्ये क्षीणपुण्यो व्यपद्यत ॥२८८॥

पैतृके बाल्कनो राज्ये पार्थस्यानुचरा व्यधुः । एकाङ्गैः सह संग्रामं तत्र तन्त्रिपदातयः ॥२८९॥

मातुर्वप्पटदेव्याः स कंचित्कालं शिशुर्नृपः । मातामह्याः क्षिल्लिकायाः पाल्यस्त्वासीत्समा दश ॥२९०॥ 290

बाल्याद्व्यक्तदौःशील्ये तस्मिंस्तत्पालनं तयोः । निर्दोषमासीद्दण्डस्थफणिलालनसंनिभम् ॥२९१॥

जातः पङ्गोर्मृगावत्यां[1] नवमेब्देथ तन्त्रिभिः । चक्रवर्माणमुत्पाद्य शूरवर्मा नृपः कृतः ॥२९२॥

निःस्नेहा मातुलामात्याः प्रययुः स्वार्थतत्पराः । अदत्त्वा तन्त्रिणां देयं तस्योत्पाटनहेतुताम् ॥२९३॥

भर्तुर्वृत्तोपि स क्ष्माभृद्विना भूरिधनार्पणम् । गुणवानिव वेश्यानां तन्त्रिणां नाभवत्प्रियः ॥२९४॥

वर्षे गते समुत्पाद्य दुष्टोत्पाटितया नृपम् । बहर्थदं पुनः पार्थं व्यधुस्तन्त्रिपदातयः ॥२९५॥ 295

अभूत्साम्बवती वेश्या साम्बेश्वरविधायिनी । पार्थप्रिया तन्त्रिचक्रसंपदे ज्ञातचक्रिका ॥२९६॥

कालापेक्षी चक्रवर्मा ततोप्यैच्छद्दमं बहु । एकादशाब्दस्याषाढे कृतो भूयोपि तन्त्रिभिः ॥२९७॥

पार्थादीन्यैः[1] समुत्पाद्य भुक्तं चक्रिकया पुरा । तैस्तैः स्थानैश्च ये तेभ्यो जीवनान्युपलेभिरे ॥२९८॥

पिता[1] भ्राता[2] च यैरस्यै राज्यादुत्पाटितोभवत् । संबन्धिभ्योपि यैर्लुब्धैः कन्यां[3] दत्त्वेतरेतरम् ॥२९९॥

अकरोद्दृष्टदोषाणां तेषामेव स नष्टधीः । मेरुवर्धनपुत्राणामधिकारसमर्पणम् ॥३००॥ तिलकम् ॥ 300

कृतोक्षपटलाधीशस्तेन शंकरवर्धनः । गृहकृत्येप्यसत्कृत्यो दाम्भिकः शंभुवर्धनः ॥३०१॥

पौषे तस्यैव वर्षस्य धनाभावात्स तन्त्रिणाम् । अदत्तपिण्डकादेयः पलायिष्ट भयाकुलः ॥३०२॥

स्थिते मडवराज्यान्तस्तस्मिञ्शंकरवर्धनः । राज्यार्थी तन्त्रिणां दूतं प्राहिणोच्छंभुवर्धनम् ॥३०३॥

आवर्जितैः स निखिलैरधिकोत्कोचचर्चया । वञ्चयित्वाग्रजं राज्ये तैः स्वमेवाभ्यषेचयत् ॥३०४॥

तीर्थस्थितः स्वकुलजांस्तिमिरत्ति भुङ्क्ते मौनी बकास्तिमिमुपेत्य वनान्तवासी ।
व्याधो निहन्ति तु बकं प्रभवन्ति ते ते पात्राण्युपर्युपरि वञ्चनचञ्चुतायाः ॥३०५॥ 305

भ्रष्टश्रीश्चक्रवर्माथ निशि श्रीहक्कवासिनः । एकदा डामराग्र्यस्य संग्रामस्याविशद्गृहम् ॥३०६॥

ज्ञात्वा कान्तिविशेषेण राजानं स कृताञ्जलिः । प्रणम्य ग्राहयामास संभ्रमान्निजमासनम् ॥३०७॥

राज्यभ्रंशादिवृत्तान्तमुक्त्वा साहाय्यकार्थिनम् । तं विपत्पेशलं प्रह्वो विचिन्त्योवाच डामरः ॥३०८॥

तन्त्रिणां वा तृणानां वा राजन्का गणना रणे । त्वत्सेवनार्थं सामर्थ्यं कस्मिंश्च मम कर्मणि ॥३०९॥

प्राप्तोत्साहः पुनर्नूनमस्मानेव हनिष्यसि । विस्मरन्त्युपकारं हि कृतकार्या महीभुजः ॥३१०॥ 310

ऊर्ध्वारोहे च आलम्बहेतुर्भूभृच्छिनत्ति तम् । कुठारिकस्तरुस्कन्धमिवाधोगमनोन्मुखः ॥३११॥

श्रीधैर्यादिप्रकर्षेण येनोपक्रियते नृपः । प्राप्तोदयः स तेनैव शङ्क्यं वेत्त्युपकारिणम् ॥३१२॥

---

२८६. [1]) A, reads धनधान्यैः. २९०. [1]) Thus corr. by later hand from A₁ क्षि°. २९२. [1]) A₄ gloss मेरुवर्धनपुत्र्यां — [2]) Thus A₂; A₁ तन्त्रिभिः. २९६. [1]) A₂ gloss साम्बीरणपाली. २९८. [1]) A₄ gloss अत्र सर्वत्र बहुवचनेन मेरुवर्धनपुत्रपरामर्शः.— [2]) A₄ पार्थादिभ्यः. २९९. [1]) A₄ gloss पङ्गुः.—[2]) A₄ gloss पार्थः शूरवर्मा वा.—[3]) A₄ gloss चक्रवर्मणः.—[4]) A₄ gloss मृगावतीं.— [5]) A₄ gloss पङ्गुने. ३०५. [1]) Emended; A चुञ्चु°. ३१०. ) Thus corr. by A₂ from A₁ °स्मानेव.

अस्मिन्स्थिते विपद्भूदिति संचिन्त्य वर्ज्यते । मूढैः परिवृढैराप्तसेवको मङ्गलेच्छुभिः ॥३१३॥

संपद्यापत्सहायस्य विस्मृतोपक्रिया नृपाः । मध्ये प्रमादस्खलितमुत्पश्य हृदि कुर्वते ॥३१४॥

315 आमर्यार्तिरिपुत्रासक्षुदादौ दृष्टवैकृतान् । लब्धोदया ह्रीभयेन क्ष्मापा घ्नन्त्यनुयायिनः ॥३१५॥

राज्ञः सतोपि नाश्वासो यस्येभस्येव कर्णयोः । अविशुद्धप्रकृतयो ध्वनन्ति मधुपा इव ॥३१६॥

दिवसे संनिधानेन पिशुनप्रेरणा प्रभोः । ईर्ष्यालुना स्वैरिणीव रक्षितुं यदि पार्यते ॥३१७॥

राजयजन्युपाध्यायो देवी यच्छिक्षयेद्रहः । तत्र प्रजागरः कर्तुमसर्वज्ञैर्न शक्यते ॥३१८॥

कथंचिद्धि हृदये कुशलैर्विनिवेशिता । शिक्षा गौरखरेणेव राज्ञा विस्मार्यते निशि ॥३१९॥

320 न के लोभं समुत्पाद्य जिह्मया स्निग्धदीर्घया । पिपीलका इव ग्रस्ताः क्ष्मापालैः शल्यकैरिव ॥३२०॥

जानाति हन्तुं हन्तव्यमासन्नं न तु दूरगम् । एको बकः परं सत्यं द्रोहवृत्तिर्महीपतिः ॥३२१॥

न नाम कण्टकाकीर्णः कौटिल्यं लक्ष्यतां नयेत् । कालापेक्षी क्षितिपतिः शरीरमिव आर्द्रकः ॥३२२॥

नमन्नपि हरिर्हन्त्याश्लिष्यन्नपि पन्नगः । विहसन्नपि वेतालः स्तुवन्नपि महीपतिः ॥३२३॥

अद्रोहवृत्त्या तस्मात्त्वं द्रक्ष्यस्यस्मान्सदा यदि । ससैन्यस्ते तदेषोहं भ्रातरेव पुरःसरः ॥३२४॥

325 तदाकर्ण्याब्रवीद्राजा लज्जास्मितसिताधरः । स्थास्येव यूयं संरक्ष्या मम पूर्वोपकारिणः ॥३२५॥

ततो निक्षिप्य चरणं रक्ताक्ते मेषचर्मणि । कोशं चक्रतुरन्योन्यं सखड्गौ नृपडामरौ ॥३२६॥

अथ संघटितासंख्यचण्डडामरमण्डलः । चक्रवर्माकरोद्यात्रां प्रत्यूषे नगरोन्मुखः ॥३२७॥

तस्मिन्क्षणे पुरस्कृत्य योद्धुं शंकरवर्धनम् । विनिर्ययुः सिताष्टम्यां चैत्रे तन्त्रिपदातयः ॥३२८॥

कालानुवृत्तिमच्छन्नं तेषां संभावनोज्झितम् । स तत्वरे पुरस्कर्तुं चक्रवर्मा स्वविक्रमम् ॥३२९॥

330 अथ प्रवृत्ते संग्रामे घोरे पद्मपुराद्बहिः । जघान प्रेरितहयः पूर्वं शंकरवर्धनम् ॥३३०॥

हते सेनाधिपे तत्र शतधा तन्त्रिवाहिनी । प्रययौ पवनाघातप्रेरिता नौरिवार्णवे ॥३३१॥

पृष्ठानुसरणोद्युक्तो नृपस्तेषामपाहरत् । गतिं तुरगवेगेन शिरःश्रेणिं तथासिना ॥३३२॥

भ्रमतः समरे बभुर्वीरपट्टाञ्चलच्छटाः[2] । चक्रवर्ममृगेन्द्रस्य सटापटलविभ्रमम् ॥३३३॥

किमन्यत्पञ्चषाण्यासन्सहस्राणि रणाङ्गने । पतितानि क्षणादेव हतानां तत्र तन्त्रिणाम् ॥३३४॥

335 तन्त्रिणो रणसंरम्भपरिश्रान्ताः क्षमातले । गृध्रपक्षकृतच्छाये शायिताश्चक्रवर्मणा ॥३३५॥

विशुद्धवंश्यैर्गुणिभिर्निहतै[1]ः संश्रितैः समम् । अभूषयद्वीरशय्यां शूरः शंकरवर्धनः ॥३३६॥

उदयं संहता एव संहता एव च क्षयम् । प्रयान्तः स्पृहणीयत्वं तन्त्रिणः कस्य नागमन् ॥३३७॥

मानमीयानधृष्यांश्च महावंश्यान्महीपतीन् । अहीनिव खिलीकृत्य भिक्षयन्तः क्षणे क्षणे ॥३३८॥

---

३१६. [1]) $A_3$ note न विशुद्धा प्रकृतिर्येषां ते । अविशुद्धप्रकृतयः सूचकाः यस्य राज्ञः कर्णयोर्विषये ध्वनन्ति । तस्य सतोपि साधोरपि स्वयं नाश्वासः । इभस्येव । यथा हस्तिनः कर्णयोर्मलिनाः मधुपा ध्वनन्ति ॥.—[2]) $A_3$ gloss कुटिलाः. ३१९. [1]) $A_3$ गोपख°. ३२०. [1]) $A_3$ भोगं. ३२१. [1]) Thus corr. by later hand from $A_1$ वरं. ३२२. [1]) Thus $A_1$ and R, misread in G and Edd. आर्यकः; $A_3$ gloss आर्द्रको धूकमार्जारकाके ऽङ्कुराङ्गु भाति विश्वः. ३२६. [1]) $A_3$ gloss विश्वासिन्यर्थः । उभौ मैत्रीसम्बन्धार्थं रक्ताक्ते मेषचर्मणि (gloss भस्त्रायां) परस्परं पादप्रक्षेपं कुरुत इति शपथसंप्रदायः । किञ्च कोशः पुष्पादिकुड्मलासिपिधानयोरिति मङ्खः. ३३१. [1]) $A_3$ विशीर्णा. ३३२. [1]) Thus corr. by later hand from $A_1$ °सारणौ°. ३३३. [1]) $A_3$ gloss अधारयन्.—[2]) $A_3$ gloss शिरस्त्राणबन्धनार्थं यो वीरपट्टः डोपट इति प्रसिद्धः तस्य अञ्चलच्छटाः फिते इति प्रसिद्धाः. ३३६. [1]) Thus $A_1$; altered by later hand to °हतः.

अनयन्क्रीडया क्रीडां गायन्तो जीविकाकृते । ग्रामाहितुण्डिकाः क्रूरा इव ये गर्भवृत्तयः ॥३३९॥

ते तन्त्रिणः क्षणादन्धा गूढवैरविचारिणा । विमाननाविविधेन चक्रवर्ममहीभुजा ॥३४०॥ तिलकम् ॥ 340

अथ द्वितीये दिवसे भग्नानामपि तन्त्रिणाम् । वीरः संघटनां यावत्करोच्छंभुवर्धनः ॥३४१॥

तावन्मिलितसामन्तसचिवैकाकुलालितः । सैन्यैर्नानापथायातैर्वद्भिर्व्याप्तदिक्पथः ॥३४२॥

बलान्मध्येऽश्ववाराणां नृत्यतेवाश्ववाजिना । वल्गाकृष्टोऽद्दंलम्बं शिरस्त्रं वामपाणिना ॥३४३॥

सस्वेदेतरहस्ताग्रवेष्टनोत्कासमस्पृशः । अङ्गस्य बिम्बितार्कस्य भाभिर्द्योतितकुण्डलः ॥३४४॥

कवचोत्क्षेपसंरम्भकण्ठायासेन ताम्यता । बद्धभ्रुकुटिबन्धेन वदनेन भयावहः ॥३४५॥ 345

तर्जयन्कृतहुंकारांस्तुण्डकांस्तुण्डितापणान् । शिरोक्षिसंज्ञया चलवाक्षव्यकृतसान्त्वनः ॥३४६॥

भेरीरवैः श्रुतिं भिन्दन्पौराशीर्घोषरोधिभिः । संग्रामजयशोभाकृच्चक्रवर्माविशत्पुरम् ॥३४७॥ कुलकम् ॥

तस्मिन्सिंहासनं प्राज्यमाक्रामति जयोर्जिते । बद्ध्वा कृतधियानिन्ये भूभटः शंभुवर्धनम् ॥३४८॥

राज्ञः पुरस्तात्तं शस्त्रपातभीमीलितेक्षणम् । भक्तिं प्रदर्शयन्पापचण्डाल इव सोऽवधीत् ॥३४९॥

उज्झितां धर्ममर्यादां भृत्यानां जनकोपमान् । हन्तुं नरेन्द्रान्द्रोहेण प्रारंभः शंभुवर्धनः ॥३५०॥ 350

प्राप्य निष्कण्टकं राज्यं चक्रवर्मनृपः क्रमात् । अजायत धृतोत्सेको नृशंसविषमक्रियः ॥३५१॥

स्वविक्रमकथास्तोत्ररोमन्थप्रियतादृतः । सोऽभवद्विटवन्द्यादिचाटुकारविधेयधीः ॥३५२॥

आत्मानं दैवतमिव स्तुतिमोहितचेतसः । जानतः प्राभवंशस्य विवेकविगुणाः क्रियाः ॥३५३॥

तस्मिन्प्रसङ्गे रंगाख्यः प्रख्यातो डोम्बगायनः । वैदेशिकोऽभवद्राज्ञा वितीर्णावसरो बहिः ॥३५४॥

ग्रामान्सचिवसामन्तान्विन्यस्यन्तो यथाक्रमम् । प्रतीहारा नृपस्यापमनयन्त विविक्तताम् ॥३५५॥ 355

विबभौ धवलोष्णीषा सभा दीपप्रभोज्ज्वला । शेषशय्येव मणिभिः कृतालोका फणोद्भवैः ॥३५६॥

कृतावरोधधम्मिल्लमालान्दोलनकेलिभिः । प्रदोषपवनैश्चक्रे शिशिरैर्घ्राणतर्पणम् ॥३५७॥

जातगीतदिदृक्षाणां गवाक्षावलयो बभुः । आसवामोदिभिर्वक्त्रैरवरोधमृगीदृशाम् ॥३५८॥

हारकङ्कणकेयूरपारिहार्यादिशोभिना । स्ववृन्देनानुयातोऽथ प्राविशड्डोम्बगायनः ॥३५९॥

हंसी नागलता चास्य सुते ललितलोचने । चक्रतुः कौतुकोद्ग्रीवां सभां चित्रार्पितामिव ॥३६०॥ 360

तयोर्विलासवलितैर्वलितापाङ्गविभ्रमैः । द्वितीयपुष्पप्रकरो व्यकीर्यत सभान्तरे ॥३६१॥

गायनैर्जय जीवेति कृतकोलाहलैरभूत् । सदः सशब्दं कुर्वद्भिस्तत्तन्नृपगुणग्रहम् ॥३६२॥

भुक्तोत्तरोचितोद्भ्रान्तस्वस्वमस्थानचारिणः । वंशी रागविशेषस्य दत्ते स्थाने ततः शनैः ॥३६३॥

अविक्रियशिरःकम्पभ्रूनेत्रभ्रमशोभितः । भिन्न इव गायन्त्योर्गीतिध्वनिरजृम्भत ॥३६४॥

अथ ताम्बूलरोमन्थस्थगननिश्चलमूर्तिना । जातं राजकुरङ्गेण प्रमोदास्पन्ददृष्टिना ॥३६५॥ 365

गायन्त्यौ[1] भावमालम्ब्य तस्य क्षिप्रमगायताम् । अधिकोद्दीपिताभिख्यं विलासस्मितविभ्रमैः ॥३६६॥

---

३४४. 1) Thus $A_1$; $A_2$ स वामेतर°. ३४५. 1) $A_2$ संरब्ध°.—2) $A_2$ वक्त्र°. ३४६. 1) Thus corr. by $A_2$ from $A_1$ °कुण्डका°.
३४८. 1) Thus $A_2$; $A_1$ °काम्यति. ३५०. 1) $A_2$ °वर्धनाय. ३६२. 1) Thus G Edd.; A °स्तत्सनृप°. ३६३. 1) $A_2$ तानैः.
३६४. 1) Thus corr. by later hand from $A_1$ गायन्त्योर्गीति. ३६६. 1) Thus corr. by later hand from $A_1$ गायन्त्यौ.—
2) $A_2$ gloss आचर्य.

राज्ञस्तयोश्च संसक्तचित्तयोरितरेतरम् । दृग्व्यापारैः स्मरावेशैः संलाप इव पप्रथे ||३६७||

नृपं हारितचित्तं तं विज्ञायैकः प्रियो विटः । ततः प्रसङ्गे प्रोवाच प्रीतिवृद्धिकरं वचः ||३६८||

देव गीतमिदं याति संप्राप्तैते मनोरमे । कर्पूरपारीपतितं मैरेयमिव हारिताम् ||३६९||

370 गायन्त्योर्मार्जितामेतां रागाद्यन्तचतुष्किकाम् । अनयोः प्रतिमाव्याजाच्चुम्बतीव निशाकरः ||३७०||

करन्यस्तकपोलान्तमुद्रावत्याविमे ध्रुवम् । कटाक्षैः कुरुतो व्योम्नि वैमानिकविमोहनम् ||३७१||

जानत्या स्वाभयां यद्वाङ्मनसोरैकतानयोः । असूयास्मितगर्भोऽयं कटाक्षः पश्य पातितः ||३७२||

गायन्त्येकानतमुखी कर्णव्यालोलकुण्डला । विपरीतरतोद्रेकक्लान्तारम्भेव शोभते ||३७३||

सफलं तस्य तारुण्यमीदृश्यो निर्जने स्त्रियः । औत्सुक्याहितरहे यस्य गायन्त्येवंविधैः स्वरैः ||३७४||

375 उपपत्तिपरित्यक्तशास्त्रानुष्ठानमोहितैः । एकसार्थप्रयातेभ्यः कथमेको विवर्ज्यते ||३७५||

नेत्रस्य रूपं श्रोत्रस्य ध्वनिं संस्पृशतो न चेत् । तदङ्गस्यान्यकान्ताङ्गं स्पृशतो दुष्कृतं कुतः ||३७६||

अभिलाषाङ्कुरः सिक्त इव तैर्विटभाषितैः । राज्ञः स्वभावलोलस्य शतशाखत्वमाययौ ||३७७||

ये[1] विस्तारितवर्णसंकररुचः संदर्श्य गोत्रान्तकृद्द्राघस्थितिचापलक्रमभलं पार्श्वे ध्वनन्त्युद्धताः ।
नीयन्ते विपथावपातपरतां लब्धोदयैस्तैः क्षणात्सिंहा वारिधरैरमी च रभसाद्भूपालसिंहा विटैः ||३७८||

यस्तु क्षणादनुपपत्त्युपपत्तियुक्तं कृत्वा जडान्यदि विमोहयितुं समर्थाः ।
न स्युर्विटा अथ कुतर्कपथस्थिताश्च नित्योद्गसेषु निरयेषु मृगाश्चरेयुः ||३७९||

380 संतोष्य हारकेयूरकुण्डलैर्डोम्बमण्डलम् । अमार्गत्यागराधेयः शुद्धान्तमगमन्नृपः ||३८०||

कान्तोऽस्याः क्षितिवल्लभोऽयमभिधेत्युर्वीपतेरेकतो[2] भूतेसार्वतिभण्डताण्डववृतं डोम्बः स्वनामान्यतः ।
मध्ये यत्किमपीति गीतरचना काव्यं यदेतद्विदो[7] यल्लक्ष्मीं[8] क्षपयन्ति तान्बिधगवुधान्कीर्त्यर्थिनः पार्थिवान् ||३८१||

वेदयानुरागस्य महेन्द्रचापधाम्नो हरिद्रारसरञ्जनस्य । उपाङ्गगीतस्य च हारिणोऽपि सौन्दर्यमस्थैर्यहतप्रकर्षम् ||३८२||

दर्शनाभ्याससंवृद्धचक्षूरागः क्षमापतिः । विना श्वपाककन्ये ते न पुनः प्राप निर्वृतिम् ||३८३||

गायन्त्यौ शयनोपान्ते ताभिर्विहितचुम्बनम् । नृपं रतिसुखाभिज्ञं तं हठात्ते प्रचक्रतुः ||३८४||

385 समागमेन नव्येन ययोर्वैयात्यशोभिना । चक्रे क्षपितसामर्थ्यः स लज्जोद्गमाक्षमः ||३८५||

रत्यन्तरलभोग्रेर्नैर्निःसृतैः स्वेदबिन्दुभिः । भाग्योष्मसंक्षयजडं वपुस्तस्य व्यधीयत ||३८६||

रागान्धेन कृता हंसी महादेवी महीभुजा । भेजे राजवधूमध्ये चालव्यञ्जनवीजनम् ||३८७||

---

३६८. ¹) $A_1$ तज ३६९. ¹) $A_2$ gloss हरति मन इति हारी तस्य भावः तया तां प्राप्तमिति सम्बन्धः. ३७०. ¹) Thus corr. by $A_2$ from $A_1$ गायन्त्यौः.—²) Thus $A_2$; $A_1$ क्रमाद°.—³) $A_2$ gloss इन्त्यपाङ्गिचतुष्टयं. ३७६. ¹) $A_2$ gloss दुष्कृतं.—²) $A_2$ gloss स्पर्शनिन्द्रियस्य. ३७८. ¹) $A_2$ gloss वारिधराः विटाश्च.—²) $A_2$ gloss वर्णाः नीलपीताद्या ब्राह्मणाद्याश्च.—³) $A_2$ gloss गोत्रान्तकृदिति इन्द्रे यद्वा अवस्थितिर्येन स चासौ चापः धनुः इन्द्रचापः तस्य लक्ष्म। गोत्रान्तकृद्भिः कुलक्षयकारिभिः पापिभिः यद्वा स्थितिर्यस्य। तत् चापलं प्रदर्श्य ध्वनन्ति इति च पर्न निबिडं इति चापलविशेषणं.—⁴) Thus corr. by later hand from नीयन्ते.—⁵) $A_2$ कूपपात°.—⁶) $A_2$ तरसा भू°. ३७९. ¹) $A_2$ gloss नित्यभुग्नेषु. ३८०. ¹) $A_2$ gloss अपात्रत्यागे कर्णः. ३८१. ¹) $A_2$ gloss अयं क्षितिवल्लभः राजा अस्याः कस्याश्चित्कान्तः अस्यां विषये अयं राजा लग्नः इत्यभिधा कथितमेकतः.—²) $A_2$ gloss डोम्बैर्नोच्चारिता उर्वीपतेः अभिधा नामधेयं एकतः इत्यस्ति इति कथमिति कान्तोस्या इति.—³) $A_2$ gloss उर्वीपतिः.—⁴) $A_2$ डाम्बस्य नामा°.—⁵) $A_2$ मध्येऽन्यत्किम°.—⁶) $A_2$ gloss यत्किमपीति। यत्किञ्चिद्बालकालमात्रं लौकिकं गीतं। तस्य रचना एव काव्यं.—⁷) $A_2$ gloss एतत् गीतिरचनाकाव्यं विदन्ति एतद्विदः.—⁸) $A_2$ gloss येषां पार्थिवानां लक्ष्मीः यल्लक्ष्मीः तां.—⁹) $A_2$ gloss अपहरन्ति.

तस्या यैर्भुक्तमुच्छिष्टं ते यथा चक्रवर्मणः । नृपान्तराणामप्येवमभूवन्सभासदः ॥388॥

मन्त्रिणामक्षपटलप्रमुख्याधिकारदा । प्रकृतिहेतुना प्राप डोम्बसेवनकालिका ॥389॥

शौकर्याक्षसचिवतां केचिच्छ्वपाका न व्यधुः स्वयम् । केचित्तत्कुर्वतीतिद्वा राजकार्याणि मन्त्रिवत् ॥390॥ 390

मन्त्रिणस्तस्करा राज्ञी श्वपाकी श्वपचाः प्रियाः । किं न लोकोत्तरमभून्नृपतेश्चक्रवर्मणः ॥391॥

ऋतुवातार्तवाङ्गानि श्वपाकी स्वांशुकान्यदात् । तदाच्छादनतृष्णा मन्त्रिणः प्राविशन्सभाम् ॥392॥

केचित्क्षितिभुजा वैरमङ्गीकृत्यापि तत्क्षणम् । येर्गाहि श्वपचोच्छिष्टं तेभूवन्सोमपैः समाः ॥393॥

मण्डलेस्मिन्प्रमाथोमा न देव्य व्यवसन्ध्रुवम् । यद्देहमानि तदा नो चेच्छ्वपाकी प्राविशोत्कथम् ॥394॥

तां रणस्वामिनं द्रष्टुं तिलद्वादश्यहे गताम् । सामन्तेभ्यः साभिमाना नान्यद्डोमराः परम् ॥395॥ 395

राजकौटुम्ब्यवृत्तानां डोम्बानां निर्गता मुखात् । राजाभिधाज्ञा दुर्लङ्घ्या न केनाप्युदलङ्घ्यत ॥396॥

राजा भवते रङ्गाय हेलुग्राममदारयत् । लिलेख पट्टोपाध्यायो न यदा दानपट्टकम् ॥397॥

तदाक्षपटलं गत्वा रङ्गः कोपात्तमब्रवीत् । रङ्गस्य हेलु दिण्णेति दासीसुत न लिख्यते ॥398॥

लिलेख सोथ संत्रासाद्रङ्गभ्रूभङ्गतर्जितः । को न राजनि दुर्वृत्ते भवेद्भीतिव्यतिक्रमः ॥399॥

अन्त्यागमनपापस्य पापः प्रच्छन्न निष्कृतिम् । विटैर्होस्याप्यहान्येव प्रायश्चित्तानि कारितः ॥400॥ 400

हिमेनैव हिमं शाम्येदुष्णेनैव दुष्कृतम् । सोनुशिष्टो विटैरेवं दधत्यामरसारताम् ॥401॥

पवित्रास्पर्शतोस्पृश्यास्पर्शपापं जिहीर्षुणा । तेनाकृष्यत विप्रस्य योषिन्मासोपवासिनः ॥402॥

ततोपि पापिनोभूवन्केपि तस्मिन्क्षणे द्विजाः । तस्मादप्यग्रहाराण्ये जगृहुर्गृहमोजिनः ॥403॥

चक्रे चक्रमठं सोपि पापः पाशुपताश्रमम् । तस्मिन्हतेर्धनिष्पन्नं तद्धूर्यमेवोजयत् ॥404॥

पूर्वोपकारान्विस्मृत्य डामरान्स निराशसः । नृपतिः श्वपचाकामी विश्वस्तांश्छद्मनावधीत् ॥405॥ 405

हन्तुं व्याजेन विश्वस्ताः केचिद्डामरतस्कराः । तस्थुस्तस्यान्तिके द्रोहच्छिद्रानेहःप्रतीक्षिणः ॥406॥

श्वपाकीशयनावासात्सावस्करमन्दिरे । शौचस्थितं तं निःशस्त्रं ते रात्रौ प्रापुरेकदा ॥407॥

अथ तैः प्राप्तसमयैरकस्मात्तस्य सर्वतः । क्षिप्तं व्यपात्यताशेषशातशस्त्रपरंपरा ॥408॥

भ्रमस्तटाद्रूढे भ्रष्ट इव निद्रालसेक्षणः । प्रबुद्धः शस्त्रपातैः स व्यमुचद्भैरवान्रवान् ॥409॥

निःशस्त्रः शस्त्रभिन्नाङ्गः क्षरत्क्षतजनिर्झरः । अनुद्रुतोरिभिर्धावञ्छ्वपाकीवेश्म विवेश तत् ॥410॥ 410

अमात्यहेति क्रन्दन्त्या श्वपाक्यालिङ्गिताङ्गकम् । तत्कुचोत्सङ्गलग्नाङ्गं जघ्नुस्तेनुप्रविश्य तम् ॥411॥

स्वैरेव प्रेरिता दारैस्ते तस्य नृपतेः किल । मुमूर्षोर्जानुनी स्वैरं शिलया समचूर्णयन् ॥412॥

षडोदशाब्दे ज्यैष्ठस्य शुक्लाष्टम्यां क्षपाक्षणे । श्वपाकभोग्यः स क्षेपावस्करे तस्करैर्हतः ॥413॥

उन्मत्तावन्तिनामाथ पार्थसूनुर्दुराशयः । अभ्यषिच्यत वैधेयैः सचिवैः शर्वटादिभिः ॥414॥

श्वपाकीकामुके पापे निहते निशि तस्करैः । प्रजानां पाप्मना सोभूत्पापात्पापतरो नृपः ॥415॥ 415

389. [1]) $A_2$ gloss अक्षपटलं गणनाधिपतिस्थानस्य अक्षपटलस्य भट्टले इति भाषया नाम सिद्धेषा इति केचित्. 392. [1]) $A_2$ gloss रजः. 396. [1]) $A_2$ gloss केवलं. 397. [1]) Thus corr. by later hand here and in following verse from $A_1$ हलु°. [2]) $A_2$ gloss रङ्गस्य हेलुः दत्ता. 399. [1]) Thus corr. by $A_2$ from $A_1$ के.—[2]) Thus corr. by $A_2$ from $A_1$ भवत्री°. 403. [1]) $A_2$ स्वर्गादिग्रामात्प्रभृत्यन्यान्यावर्णी. 404. [1]) Thus corr. by $A_2$ from $A_1$ °वैदको°; $A_2$ gloss मठं. 412. [1]) Thus A; G R Edd. शिलायां. 413. [1]) Thus G Edd.; A कोष्ठस्य.

त्याजिता तत्कथापापस्पर्शभीत्या सरस्वती । कथंचित्प्रकृतत्वेन सैषा प्रस्ताव्यते मया ॥४१६॥
आसीत्पितृकुलं तस्य मखं दुर्नृपरक्षसः । श्रीवर्माभिधस्य हव्याशविप्रोपस्येव जीवनम् ॥४१७॥
तस्यासंख्यकराघातसटांकारकरोटिकाः । प्राणस्कन्दाविवायत्ताः सभायां मुख्यमन्त्रिणः ॥४१८॥
तेऽमात्याचारणत्वेन निर्लज्जास्तमरञ्जयन् । कालान्तरेण यैरेव भूमिपालैर्भविष्यते ॥४१९॥
420 पर्वगुप्तोऽभवत्तस्य सर्वेभ्योऽप्यधिकं प्रियः । आस्थाने नर्तनं कुर्वन्नपाकृतकटीपटः ॥४२०॥
आ तन्त्रिविग्रहात्पृष्ट्वा कीटमायान्महीपतीन् । पर्वगुप्तः सर्वदाभूद्राज्यावाप्तिकृतोद्यमः ॥४२१॥
तदा निगूढराज्येच्छः सख्यं मुख्यैः स मन्त्रिभिः । पीतकोशैः प्रविदधे पञ्चभिर्भूभटादिभिः ॥४२२॥
भूभटः शर्वटश्चोजः कुमुदः सोमृताकरः । पर्वगुप्तेन संबन्धं चक्रिरे कोशपीथिनः ॥४२३॥
गवाक्षासरसि ग्रामश्रीजलोत्थागलद्विजः । संग्रामडामरगृहे यो रक्षः ख्यातपौरुषः ॥४२४॥
425 पदातिमात्रो भूपेन दृष्टशौर्यः स संयुगे । महोदरो महाकायः प्रापितो मुख्यमन्त्रिताम् ॥४२५॥
यादृशी तेन दृष्टा देवी श्रीः सरसोऽन्तरे । तादृक्प्रकं[1] जयादेवीत्यभिधानेन निर्ममे ॥४२६॥
राज्यं निष्कण्टकं कृत्वा धूर्तेनापजिहीर्षुणा । प्रेरितः पर्वगुप्तेन भूभृच्चक्रे कुलक्षयम् ॥४२७॥
तेन लुण्ठितसर्वस्वः पार्थस्तस्थौ कलत्रवान् । श्रीजयेन्द्रविहारान्तः श्रमणैर्दत्तभोजनः ॥४२८॥
चिभुश्शंकरवर्मादीन्भ्रातॄन्हारानिरोध्य सः । तत्र स्थितानवस्थानैरुल्कान्तानकारयत् ॥४२९॥
430 उद्यतः पितरं हन्तुं मन्त्रिणोऽनुमतप्रदान् । बद्धपट्टान्व्यधाद्बद्धनिगडानितरान्पुनः ॥४३०॥
एकदा मन्त्रिसामन्ततन्त्रिकायस्थसैनिकाः । पार्थं तदाश्रमासाद्य निशायां पर्यवेष्टयन् ॥४३१॥
म्लानक्षीणाम्बरां पत्नीं रुद्धद्वारां निपात्य[1] ते । आलिङ्ग्यमानो क्रन्दद्भिस्तर्णकैरिव दारकैः ॥४३२॥
केशानालम्ब्य कर्षन्तः शर्करोत्पाटिताङ्गकम् । विपन्नं गोकुलाक्रान्तमिव निर्हृत्य तं गृहात् ॥४३३॥
क्षुत्क्षामकुक्षं क्रन्दन्तं निजपुर्नप्रविग्रहम् । चण्डाला इव निःशङ्कं कुमुदाद्या नृपप्रियाः ॥४३४॥
435 पितरं निहतं श्रुत्वा राजा संजातकौतुकः । प्रातः स्वसचिवैः सार्धं गत्वा हठोत्थ दृष्टवान् ॥४३५॥
अभ्यक्रस्य प्रहारोऽयं मदस्त इति वादिनः । तस्याग्रे राजपुरुषाः शशंसुर्निजविक्रमम् ॥४३६॥
न्यकृत्य स्त्रीकृतो राजा तदा तद्रक्षणोद्यतः । अचूचुदत्पर्वगुप्तो देवगुप्ताभिधं सुतम् ॥४३७॥
पार्थस्य निहतस्याङ्गे सोऽक्षिपत्क्षुरिकां ततः । रञ्जितो येन भूपालो जातहासोऽभवच्चिरम् ॥४३८॥
डामरैर्लुण्ठितो देशः प्रणाशे चक्रवर्मणः । उत्पाद्य पापान्कायस्थांस्तेन भूयोऽपि दण्डितः ॥४३९॥
440 संप्रेरितः कुसचिवैः शस्त्राभ्यासं चकार सः । पाटयन्क्षुरिकाघातैः कोटवीस्तनकोटरम्[1] ॥४४०॥
गर्भिणीनां च जठरं गर्भान्द्रष्टुमपाटयत् । काठिन्यस्य परीक्षार्थमङ्गं कर्मकृतामपि ॥४४१॥
प्रतिपद्यामहाद्वारस्थदा वधमवाद्विजाः । [1]ग्रस्यगृह्णमहारांस्तस्मादपि नृपाधमात् ॥४४२॥
क्रूरपापानुरूपेण क्षयरोगेण पार्थिवः । ततोऽनुबाध्यमानोऽभूत्पर्यन्तव्यथातुरः ॥४४३॥
व्यथया तस्य तादृश्या प्रजा एव न केवलम् । तुतुषुर्निजभृत्यास्तमहिष्योऽपि चतुर्दश ॥४४४॥

---

४२६. [1]) Thus corr. by $A_2$ from $A_1$ तादृश°. ४३२. [1]) Thus corr. by later hand from $A_1$ निपत्य. ४४०. [1]) Thus corr. by later hand from $A_1$ कोटवी°. ४४२. [1]) Thus corr. by later hand from $A_1$ द्विज·

अथान्तःपुरदासीभिर्यः कुतश्चिदुपाहृतः । क्षितिपालात्मजातोयमिति प्रख्यापितो मृषा ॥४४५॥ 445

तं शिशुं शूरवर्माख्यं विनिवेश्य नृपासने । हस्ते निक्षिप्य सामन्तसचिवैकाङ्गतन्त्रिणाम् ॥४४६॥

कम्पनाधिपतेर्बद्धद्वेषः कमलवर्धनात् । विध्वस्तमड्डवराज्यस्थाड्डामरोत्पाटनक्षमात् ॥४४७॥

आसन्ननिधनप्राप्तिः[1] पितृहा पार्थिवाधमः । भुक्त्वा पञ्चदशाब्दस्य प्रजापुण्यैः क्षयं ययौ ॥४४८॥ पञ्चकलकम् ॥

पितृघातिसुतो राजा जयस्वामिविरोचनम् । आषाढशुक्लसप्तम्यां शिशुर्द्रष्टुं विनिर्ययौ ॥४४९॥

तत्र जिरेजे राजश्रीर्बालस्य पृथिवीपतेः । कृपाणवेणिललिता छत्रचामरहासिनी ॥४५०॥ 450

अत्रान्तरे जवायातैर्धारैरावेष्टितभुजः । सामन्तैर्नगरोपान्तं प्राप्तः कमलवर्धनः ॥४५१॥

एकाङ्गतन्त्रिसामन्तस्याल्हारकसाहिभिः । नगरं प्रविशञ्भ्रान्तः समं सैन्यैरवध्यत ॥४५२॥

विरुद्धडामरानीकान्युक्त्वा मार्गेषु निर्गतः । भ्रान्तोप्यसौ वैरिसेनामजयाद्विक्रमोर्जितः ॥४५३॥

सहस्रमश्ववाराणां विद्राव्य तुरगैर्मितैः । राजधानीमसंरुद्धः प्रविवेश ततः क्षणात् ॥४५४॥

तं लब्धजयमाकर्ण्य सैन्यैस्त्यक्तं पलायितैः । एकाकिनं क्वाप्यनयज्जननी शिशुभूपतिम् ॥४५५॥ 455

प्राक्कर्मभिर्मोहितो वा प्रेरितो वा कुमन्त्रिभिः । नाभूत्सिंहासनारूढो मूढः कमलवर्धनः ॥४५६॥

तदानीं स्वगृहान्यातो राज्यकामोन्यवासरे । संघट्टयन्द्विजान्सर्वानब्रुवदनीतिवित् ॥४५७॥

प्रौढं शक्तं च कुरुत क्ष्मापं कंचित्स्वदेशजम् । मामेव कुर्युः सामर्थ्यादिति मूढः स चिन्तयन् ॥४५८॥

एकाकिनीं रहः क्षीबां लब्ध्वा दुर्लभयोषितम् । अप्रौढोनुपभुज्यान्यदिने दूत्यार्थयेत यः ॥४५९॥

विभूतिं रभसायातां यश्च संत्यज्य तत्क्षणम् । नीत्या कामयतेन्वेष्टुं शोच्यस्ताभ्यां परोस्ति कः ॥४६०॥ युग्मम् ॥ 460

अथोत्पलकुले छिन्ने स्थूलकम्बलवाहिनः । अशृङ्गोक्षनिभा विप्राः समगंसत गोकुले ॥४६१॥

धूमनिर्दग्धकूर्चानां राज्ञस्तांस्तांश्चिकीर्षताम् । राज्यप्रदस्योपन्यासस्तेषां चिरमवर्धत ॥४६२॥

द्वैमत्येन मिथस्तेषां नान्यः कोप्यभ्यषिच्यत । कूर्चा[1] भाषणनिष्ठ्यूतैः स्वकूर्चष्ठीवनैः परम् ॥४६३॥

राज्यार्हान्वेषिभिर्विप्रैः प्राप्तः स्वस्मृतिकृतये । अनार्यतेहकाघातैर्मुग्धः कमलवर्धनः ॥४६४॥

पञ्चाहानि दिनान्येव यावत्तस्थुर्द्विजातयः । काहलाकांस्यतालादिवाद्यकोलाहलाकुलम् ॥४६५॥ 465

उत्पताकध्वजच्छत्रशोभि युग्यार्पितासनम् । अशेषं पारिषद्यानां तावत्तत्रामिलद्दलम् ॥४६६॥ युग्मम् ॥

स्वपक्षां बन्धकीभूतामिवान्यवशवर्तिनीम् । वीक्ष्य राजश्रियं शोचन्नासीत्कमलवर्धनः ॥४६७॥

पितृघातिवधूपुत्रराज्यार्थिनी ततः । प्राहिणोद्राजपुरुषान्पार्श्वे प्रायोपवेशिनाम् ॥४६८॥

पिशाचकपुरग्रामे वीरदेवाभिधस्य यः । कुटुम्बिनः कामदेवनामा सूनुरजायत ॥४६९॥

स शिक्षिताक्षरो लब्ध्वा मेरुवर्धनमन्दिरे । बालाध्यापकतां ज्ञानशीलादिगुणभूषितः ॥४७०॥ 470

क्रमात्तद्गञ्जाधिकार्यासीदथ तस्यात्मजः शनैः । लेभे गञ्जाधिकारित्वं राज्ञः शंकरवर्मणः ॥४७१॥

---

४४८. [1]) Thus corr. by $A_2$ from $A_1$ °प्राप्ति. ४४९. [1]) Thus corr. by $A_2$ from $A_1$ अषाढे. ४५१. [1]) धारै supplied by $A_2$. ४५७. [1]) Thus $A_1$; $A_2$ संघट्टय. ४५९. [1]) G *sec. manu* अप्रौढो भोगमुक्तान्यस्मिन् दूत्यार्थयेत् यः. ४६१. [1]) $A_2$ अथो-त्पल°.—[2]) $A_2$ gloss उत्पलो नाम कल्यपालः तेन चिप्पटजयापीडं स्वीयं भिक्षुस्वामिना राज्ञा स्वकीयभ्रातुःपुत्रः अजितापीडः राज्ये स्थापितः । ततः प्रभृति कल्यपालकुलराज्यं । उत्पलशाखाभिवर्धमानं प्राप्य कल्यपालकुलस्य च्छेदः । अत एवोक्तं । उत्पलकुले छिन्ने इति ।
४६३. [1]) Thus $A_1$; $A_2$ कलमा°. ४६४. [1]) $A_2$ प्राप्तैः. ४६६. [1]) तासनम् supplied by $A_2$ in space left by $A_1$.

यः प्रभाकरदेवोपि सुगन्धाङ्ककामुकः । लक्ष्म्या सरस्वतीदेवादेशाद्विप्रवतोथ यां[1] ॥४७२॥
विद्वान्यशस्करो नाम तत्पुत्रोत्यन्तदुर्गतः । सख्या फल्गुणकाख्येन समं देशान्तरं गतः ॥४७३॥
सुस्वप्नदर्शनैः पीठदेव्याशीर्भिश्च हर्षुलः । तस्मिन्प्रसङ्गे सोत्साहः प्रत्यावृत्तो निजां भुवम् ॥४७४॥
475 पितृव्यानिव धूर्तैर्यातैर्बोधयितुं द्विजान् । मध्ये गृहीतो वाग्मित्वात्प्रविवेश तदन्तिकम् ॥४७५॥ कुलकम् ॥
दृष्ट्वैव तं दैववशादेकमत्यस्पृशो द्विजाः । ध्वनिं राजायमेवास्त्वित्युच्चकैरुदचारयन् ॥४७६॥
अथाभ्यषिच्यत क्षिप्रं विप्रैरेत्य यशस्करः । क्ष्माधृतिप्रौढसामर्थ्यैः[1] सानुमानिव तोयदैः ॥४७७॥
इत्थं वेणुवनं परस्परमहासंघर्षजेनाग्निना तन्मूलोद्धृतिरम्भसा क्षणधृतोद्रेकेण संपादिता ।
वात्यावेगविपाटितं विटपिनं ग्रामं कुतश्चिदूढां कर्हि[1] नेतुमहो महाद्रिकुहरे धात्रा न किं स्तम्भितम्[2] ॥४७८॥
भृत्यप्रेरणया वंश्यां पार्थजः स्वं न चेद्धरेत् । तत्पुत्रोत्पाटनं कुर्याच्च चेत्कमलवर्धनः ॥४७९॥
480 अनुच्चकुलजातस्य[1] दारिद्र्यस्याटतः क्षितिम् । तद्यशस्करदेवस्य राज्यप्राप्तिः कथं भवेत् ॥४८०॥
यस्यां प्रजाभिरनुगो ददृशे जनेन यस्तत्क्षणं निखिललोकसमानमूर्तिः[1] ।
साम्राज्यरम्यममुमीक्षितुमास्त नारीदृग्भीरजस्रचकितो नरनाथमार्गः ॥४८१॥
नृपतिवसतिं प्रस्थास्यन्यशस्करभूपतिः पुरमृगदृशामाशीर्मध्ये वचोपि विवक्षितम् ।
स्तिमितवलितापाङ्गं शृण्वन्निमीलदहंकृतिः कृतपरिकरस्तज्ज्ञैर्जज्ञे प्रजापरिपालने ॥४८२॥
प्रतिमितरविदीप्रोद्भासिशुभ्रातपत्रप्रचयरजतपात्राद्युत्थितारात्रिकाभीः ।
अथ मुखरितमाशीर्मङ्गलैरङ्गनानामवनिहरिणधामा राजधाम[1] प्रपेदे ॥४८३॥

इति श्रीकाश्मीरिकमहामात्यचण्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां पञ्चमस्तरङ्गः ।
अधिकायां समाशीतौ मासेषु च चतुर्ष्वगात् । कल्यपालाष्टकं रथ्याहृतस्त्रीसचिवा अपि ॥

---

४७२. [1] Thus A₂; A₁ °तो गतः. ४७७. [1]) A₂ gloss क्ष्माया भूमेः धृतिः धारणं तस्मिन् प्रौढं सामर्थ्यं यस्य सः. ४७८. [1]) हि supplied by A₂.—[2]) A₂ दैवेन किं सूचितमित्यादर्शान्तरे पाठः. ४८०. [1]) A₂ gloss नीचकुलोत्पन्नस्य. ४८१. [1]) Thus A₂; A₁ °कीर्तिः. ४८३ [1]) A₂ glosses अवनौ भूमौ हरिणधामा चन्द्रः and राजासनं.

## ॥ षष्ठस्तरङ्गः ॥

नेदं पर्णसमीरणाशनतपोमाहात्म्यमुग्रोरगौ पश्यैतावत एव संप्रति कृती तन्मात्रवृत्ती[1] बहिः[2] ।
प्रेष्ठैश्वार्धमिदं चराचरगुरोः प्रापेयमात्मस्तुतीरेवं देववधूमुखाच्छ्रुतिसुखाः[3] शृण्वन्नभ्रपर्णावतात् ॥१॥
इच्छन्नलङ्घनीयत्वमथ कक्ष्यां विलङ्घयन् । प्रतीहारान्निजा दूरं वार्यन्तामिति सोऽभ्यधात् ॥२॥
वेत्रिविश्रास्यमानांस्तु तान्कृताञ्जलिरब्रवीत् । राज्यप्रदाश्च पूज्याश्च यूयं नो दैवतैः समाः ॥३॥
राज्यदानाभिमानेन वर्तिष्यत मदोद्धताः । यत्कार्यकालादन्यत्र नागन्तव्यं मदन्तिकम् ॥४॥
तदाकर्ण्याखिलो लोकस्तमधृष्यममन्यत । व्यस्मरत्सहसंवाससंभूतमपि लाघवम् ॥५॥
खिलीभूताः पूर्वराजव्यवस्थाः प्रतिभाबलात् । उज्जीवितवान्स सुकविः प्राक्कविप्रक्रिया इव ॥६॥
अचौराभूत्तथा भूमिर्यथा रात्रौ वणिक्पथाः । अतिष्ठन्विवृतद्वारा मार्गाश्चाविघ्निताध्वगाः ॥७॥
प्रत्यवेक्षापरे तस्मिन्नासीत्सर्वापहारिणाम् । कृष्यध्यक्षत्वमुत्सृज्य कृत्यं नान्यन्नियोगिनाम् ॥८॥
ग्राम्याः कृषिपराधीना नापश्यन्राजमन्दिरम् । विप्राः स्वाध्यायसंसक्ता नाकुर्वञ्शस्त्रधारणम् ॥९॥
न विप्रगुरवः साम गायन्तो मदिरां पपुः । न तापसाः पुत्रदारप्रमुखान्यान्यढौकयन् ॥१०॥
न मूर्खगुरवो[1] मत्स्यापूपयागविधायिनः । चक्रिरे स्वकृतैर्ग्रन्थैस्तर्कागमपरीक्षणम् ॥११॥
नादृश्यन्त च गेहिन्यो गुरुदीक्षोत्थदेवताः । कुर्वाणा भर्तृशीलश्रीनिषेधं मूर्धधूननैः ॥१२॥
कार्तान्तिको भिषक्सभ्यो गुरुर्मन्त्री पुरोहितः । दूतः स्थेयो[1] लेखको वा न तदाभूदपण्डितः ॥१३॥
प्रायोपवेशाधिकृतैर्बोधितेन महीभुजा । प्रायोपविष्टो निकटं प्रापितः कश्चिदब्रवीत् ॥१४॥
अहमाढ्योऽभवं पूर्वं वास्तव्योऽत्र महीपते । निष्किंचनत्वं शनकैरगच्छं दैवयोगतः ॥१५॥
उत्तमर्णैः पीडितस्य प्रवृद्धर्णस्य तस्य मे । निश्चयोऽभूदृणं छित्त्वा परिभ्रान्तुं दिगन्तरे ॥१६॥
अथ विक्रीय सर्वस्वमृणं शोधयता मया । महाधनाय वणिजे विक्रीतं निजमन्दिरम् ॥१७॥
भार्यामुद्दिश्य भर्तव्यामेक एव तु वर्जितः । सोपानकूपो विक्रीतान्महतो वेश्मनस्ततः ॥१८॥
निदाघे पुष्पताम्बूलीपर्णाघ्रातिशीतले । न्यस्यन्निर्मोलिकैर्वत्सा जीवेद्भाटकादिति[2] ॥१९॥
ततो दिगन्तराण्भ्रान्त्वा विंशत्या वत्सरैरहम् । लब्धाल्पवित्तः संप्राप्तो जन्मभूमिमिमां पुनः ॥२०॥
अन्विष्यता मया साध्वी स्ववधूर्ददृशेऽथ सा । विवर्णदेहा जीवन्ती प्रेष्यात्वेनान्यवेश्मसु ॥२१॥
किं दत्तजीविकापि त्वमीदृशीं वृत्तिमाश्रिता । मयेति सा सदुःखेन पृष्टा स्वोदन्तमब्रवीत् ॥२२॥

---

१. [1]) $A_3$ gloss पर्णवातजीवनी.—[2]) $A_3$ gloss एती चराचरगुरुणा बहिः कृती इत्यन्वयः.—[3]) Thus $A_1$; $A_3$ °सुखाच्छ्रुव°.
११. [1]) Thus corr. by later hand from $A_1$ मूर्खा गु°. १३. [1]) $A_3$ gloss विवादपरिनिर्णेता स्थेयः. १५. [1]) $A_3$ gloss भूताधम सभे माधो बाहल्ये सदृशी भिदु इति कोशः. १९. [1]) $A_3$ gloss पौष्पिके.—[2]) $A_3$ gloss भाटी इति भाषया । प्रत्यहं वेतनं भाटी.

सोपानकूपं संप्राप्ता त्वयि याते दिगन्तरम् । लगुडैस्ताडयित्वाहं वणिजा तेन वारिता ॥२३॥
तदन्या कापि मे वृत्तिरित्युक्त्वा विरराम सा । तदाकर्ण्य निमग्नोहमन्तरे शोककोपयोः ॥२४॥
25 कृतप्रायोपवेशोथ स्थेयैस्तैस्तैः पदे पदे । प्रत्यर्थिनो हस्तजयैः किमप्यस्मि पराजितः ॥२५॥
जडस्त्वाहेति न न्यायं न विक्रीतो मया पुनः । सोपानकूप इत्यस्मिन्नर्थे प्राणा इमे पणः ॥२६॥
सोहं विपद्ये क्षीणार्थो द्वारि शास्तुस्तव ध्रुवम् । वृजिनादस्ति चेद्भीतिर्वस्तु निर्णीयतां स्वयम् ॥२७॥
राजेति तेन विज्ञप्तो दत्त्वा धर्मासनं स्वयम् । संघट्याखिलान्स्थेयानासीत्तत्त्वं विचारयन् ॥२८॥
स्थेयास्तमूचुर्बहुशो विचार्यायं पराजितः । शाठ्यादगणयन्न्यायं दण्ड्यो लिखितदूषकः ॥२९॥
30 सोपानकूपसहितं विक्रीतं गृहमित्यथ । राजा विक्रयपत्रस्थान्स्वयं वर्णानवाचयत् ॥३०॥
ततोधिगतमित्येव सभ्येषु निगदत्स्वपि । अन्तरात्मा जगादेव नृपतेरर्थिनो जयम् ॥३१॥
मुहूर्तमिव संचिन्त्य राजान्याभिरभूच्चिरम् । कथाभिरतिचित्राभिर्मोहयन्सभ्यमण्डलम् ॥३२॥
कथान्तराले सर्वेभ्यो गूढरत्नानि वीक्षितुम् । हसन्प्रत्यर्थिनो हस्तादुपादत्ताङ्गुलीयकम् ॥३३॥
क्षणादेवाखिलैः[1] स्थेयमित्थमेवेति सस्मितम् । वचो ब्रुवाणः प्रययौ पादक्षालनकैतवात् ॥३४॥
35 अभिज्ञानाय तत्रस्थः स वितीर्याङ्गुलीयकम् । भृत्यमेकं वणिग्वेश्म प्राहिणोद्दत्तवाचिकम् ॥३५॥
स वणिग्गणनाध्यक्षं ययाचे साङ्गुलीयकः । यत्राब्दे पत्रमुत्पन्नं गणनापत्रिकां ततः ॥३६॥
निर्णेयं मया कृत्यमस्ति भाण्डपतेरिति । श्रुत्वादाद्गणनाध्यक्षस्तां गृहीताङ्गुलीयकः ॥३७॥
दीनाराणां[1] दशशतीं तस्यां भूभृदवाचयत् । व्ययमध्येधिकरणलेखकाय[2] समर्पिताम् ॥३८॥
तस्मै मितधनार्हाय बहुमूल्यार्पणान्नृपः । रेफे[1] सकारं[2] वणिजा कारितं निश्चिकाय सः ॥३९॥
सभायां तत्प्रदर्श्याथ पृष्ट्वा दत्त्वाभयं च तम् । आनीय लेखकं सभ्यान्संजातप्रत्ययान्व्यधात् ॥४०॥
सभ्यैरभ्यर्च्यमानेन राज्ञा सार्धं वणिग्गृहम् । वितीर्णमर्थिने[1] देशात्प्रत्यर्थी च प्रवासितः ॥४१॥
कृताह्निकं भोक्तुकामं तं दिनान्ते च भूपतिम् । अकालाक्रन्दनाद्बिभ्यत्क्षत्ता[1] जातु व्यजिज्ञपत् ॥४२॥
देवः समाप्तकृत्योद्य विज्ञप्तौ क्षमतां क्षणं । इत्युक्तो दर्शने प्राणत्यागी विप्रो बहिः स्थितः ॥४३॥
दत्तप्रवेशादेशोथ रुद्धसूदेन भूभुजा । द्विजः प्रविष्टः पृष्टश्च[1] तीव्रार्तिरिदमब्रवीत् ॥४४॥
45 सुवर्णरूपकशतं भ्रान्त्वा देशान्तरेर्जितम् । गृहीत्वा श्रुतसौराज्यः स्वदेशमहमागतः ॥४५॥
त्वयि राजनि निश्चौरैरध्वभिर्विशतः सुखम् । ह्योभवत्सुवर्णोत्से मे दिनान्ते श्राम्यतः स्थितिः ॥४६॥
दीर्घाध्वलङ्घनक्लान्तस्तत्राहमकुतोभयः । मार्गारामतरोर्मूले त्रियामामत्यवाहयम् ॥४७॥
वेतनं ग्रन्थिबद्धं[1] तदुत्थायोरपतन्मम । अरघट्टे समीपस्थे कक्षयोगादलक्षिते ॥४८॥

---

२८ ¹) Thus A G has sec. manu the conjectural reading गत्वा. ३४. ¹) Thus A₂, A₁ 'खिला'. ३६. ¹) A₂ gloss गणनं वस्तु इति भाषया वही इति मध्यदेशीया. ३८. ¹) A₂ gloss दीनाराः थाद् इति कश्मीरभाषया.—²) A₂ gloss यत्सन्निधौ अर्थिप्रत्यर्थिनावुभौ भूमि क्रयविक्रयं कुरुतः । येन धावत्समानं क्रियते सोऽधिकरणलेखकः । भवस्तरपरिमाणलेखपत्रकारी सराफ इति भाषया. ३९. ¹) A₂ gloss अधिकरणलेखकाय दीनारदशशतीदानात्.—²) A₂ gloss गृहविक्रयिणा वणिजा विक्रयपत्रे लिखितं । सोपानकूपरहितं विक्रीतं गृहमिति । तदनन्तरं लुब्धेन वणिजा प्रत्यर्थिना रेफविषये सकारः कारितः अधिकरणलेखकहस्तेन । उत्कोच दीनारदशशत्यावाप्त्या दत्त्वा कूपसहितं गृहं विक्रीतमिति लेखितं । ततोऽनन्तरं राज्ञानुमितं लेखपत्रचित्रणार्थं किमर्थं दीनारदशशती । बहुमूल्यत्वादिति । रेफस्य सकार एव कृतोऽनेन इति ॥. ४१. ¹) A₂ gloss [illegible]. ४२. ¹) A₂ gloss द्वास्थः. ४४. ¹) Thus corr. by later hand from A₁ पृष्टेऽथ. ४८. ¹) Thus corr. by A₂ from A₁ °बद्धवि.

तस्मिन्पुरवरोद्देशे निर्वेदात्त्यक्तुमिच्छति | सोहं हारितसर्वस्वः शोचन्नुद्धरितं जनैः ॥४९॥
एकोध्यवसितः कोपि साहसे[1] पुरुषोब्रवीत् | मठं शापितनिःस्वार्थं[2] किं ददासीति मां ततः ॥५०॥ 50
तमस्म्यवोचं विवशस्तस्यार्थस्यास्मि कः प्रभुः | तुभ्यं यत्रोच्यते मठं तत्ततो दीयतां त्वया ॥५१॥
अवरुद्धाधिरूढोथ रूपकेभ्यो द्वयं मम | स प्रादात्स्वष्टमेवाट्टानवर्ति स्वीचकार तु ॥५२॥
व्यवहारा वचोनिष्ठा एव राज्ञि यशस्करे | निन्दन्व्यवस्थां तां लोकैर्न्यक्कृतोस्मीति वादिभिः ॥५३॥
उपचारोक्तिसारल्यच्छलहारितवेतनः | सोहं जहाम्यसून्द्वारे दुर्व्यवस्थापकस्य ते ॥५४॥
पुंसस्तस्य स राज्ञाथ पृष्टः प्रकृतिनामनी | वदनप्रत्यभिज्ञैव ममास्तीत्यभ्यभाषत ॥५५॥ 55
प्रातस्त्वेप्सितावाप्तिं करिष्यामीति भूभुजा | प्रतिज्ञाय कथंचित्स स्वपार्श्वे कारितोशनम् ॥५६॥
लब्धवर्णोत्सौकसां दुलाहूतानां स विशां ततः | स्थितमन्तर्हितोन्येद्युस्तं राज्ञेदर्शयत्परम् ॥५७॥
पृष्टः स राज्ञा विप्रेण यथेवोक्तं तथैव तत् | सर्वमूचे वाक्प्रतिष्ठं व्यवहारमुदीरयन् ॥५८॥
सत्यवाक्पारतन्त्र्यस्य वस्तुवृत्तस्य चान्तरम् | अलक्षयन्तः प्रैक्षन्त दोलाकुलधियो धराम् ॥५९॥
धर्मासनस्थो राजाथ रूपकाणामभाषत | प्रमष्टानवतेः पार्श्वं विप्रमन्यं द्वयस्य तु ॥६०॥ 60
अनुयोक्तॄञ्जगादापि दुःसंचिन्त्या महात्मनः | धर्मस्याधर्ममुद्भूतं निहन्तुं धावतो गतिः ॥६१॥
सायं हुताशं प्रविशन्नम्मयं[1] चेन्दुमण्डलम् | स्वतेजसा संविभजन्प्रदीपैर्ज्योतिषामप्यसौ ॥६२॥
तदुत्थाय यथा भानुर्निहन्ति ध्वान्तमुद्धतम् | अनन्यकर्मा धर्मोपि तथाधर्मं व्यपोहति ॥६३॥ युग्मम् ॥
दुःसंलक्ष्यस्तु धर्मोसावधर्मं बाधतेञ्जसा | तिष्ठन्नित्यमभिव्याप्य दार्व्यं काष्ठमिवानलः ॥६४॥
ददाति यद्भवान्दत्तां तदित्याद्युक्तमुज्झतः | तुभ्यं रोचत इत्यादि वचोस्य निःसृतं तदा ॥६५॥ 65
रुचितास्य प्रभूताट्टानत्रितौलीभिनोस्य ताम् | नादादस्मायरुचितं रूपकाणां द्वयं ददत् ॥६६॥
इत्यादिसूक्ष्मेक्षिकया धर्माधर्मान्तरं विदन् | प्रत्यवेक्षापरः क्ष्माभृद्व्यधात्कृतयुगोदयम् ॥६७॥
इत्थं जनं स विनयन्दास्योभूद्विजदुर्नयैः | परस्योपदिशन्पथ्यमपथ्याशीव रोगवत् ॥६८॥
श्रोत्रियेणैव तेनापि मृदम्भःशौचशालिना | डोम्बोच्छिष्टभुजो भृत्याः[2] पार्श्वाच्च परिजह्रिरे ॥६९॥
यथोत्तरं संभितार्थैरन्योन्यं पृष्ठपातिभिः | नगराधिकृतैश्चक्रे चतुर्भिः सोर्थसंग्रहम् ॥७०॥ 70
लेभिरे निधनं तस्मात्सत्यंकारात्पदातयः | श्रीरणेश्वरपीडामन्यस्तत्खङ्गादपि प्रभोः ॥७१॥
स ज्येष्ठे भ्रातरि मृते तथाभून्मुदितश्चिरम् | तदुपघ्नं यथा प्राशीत्तत्रोत्प्रैक्षि रसार्पणम् ॥७२॥
नीतस्य मण्डलेशत्वं वेलाविलसितं भूभुजा | देवीः कामयमानस्य चक्रे गजनिमीलिका ॥७३॥
रागाच्छुद्धान्तकान्तानां मूर्धानमधिरोपिता | लज्जा नामाभवत्तस्य वेश्या वैवश्यकारिणी ॥७४॥

---

५०. [1]) Thus $A_1$; $A_2$ °सी.—[2]) $A_2$ शापितलब्धार्थ. ५३. [1]) $A_2$ gloss वचांसि वाक्य एव निष्ठा येषां । न तु न्यायविचारणे इति व्यवस्थां निन्दन्. ५४. [1]) Thus corr. by later hand from $A_1$ °सारल्येच्छ°. ५५. [1]) $A_2$ gloss वदनमेव केवलं सदीयं चिह्नं मम न तु नामप्रकृती इत्यर्थः. ६२. [1]) $A_2$ gloss आप्यं. ६४. [1]) Thus corr. by $A_2$ from $A_1$ तिष्ठन्निदम°. ६९. [1]) Thus $A_1$; $A_2$ °वैव.—[2]) Thus corr. by $A_2$ from $A_1$ °भृत्यान्या°. ७०. [1]) $A_2$ gloss हट्टाधिकारिभिः.—[2]) Thus corr. by $A_2$ from $A_1$ सोपर्स°. ७२. [1]) Thus $A_2$; $A_1$ °भूमुदित°.—[2]) Thus corr. by $A_2$ from $A_1$ तदुपघ्ने; Edd. °श्रैक्षा.—[3]) Emended; A R G °त्प्रेक्षि.—[4]) $A_2$ gloss गुप्तः. ७३. [1]) $A_2$ gloss एतन्नामकस्याधिपस्य; एतन्नामक struck out again.—[2]) $A_2$ gloss उपेक्षा कृता इत्यर्थः.

75 अवकाशः सुवृत्तानां हृदयान्तर्न योषिताम् । इतीव विहितौ धात्रा सुवृत्तौ तद्बहिः कुचौ ॥७५॥
उत्तमाधमसंसक्तौ आनन्तर्यप्रवृत्तिताम् । नारीणां शुचिबालानामङ्गनात्वं व्यधाद्विधिः ॥७६॥
सा लालितापि राज्ञा यल्लल्ला ललितलोचना । चण्डालयामिकेनागाद्यामिनीषु समागमम् ॥७७॥ युग्मम् ॥
सुभगंकरणं किंचिच्चण्डालतरुणेऽभवत् । तं यत्प्रभावविवशा भेजे राजवधूरपि ॥७८॥
सा वा चण्डालकुलजा स वा कार्मणकर्मवित् । अन्यथा संगमः किं स्यादसंभाव्यस्तथाविधः ॥७९॥
80 सोभूत्केन प्रकारेण तया सह समागतः । इत्येव लेभे वृत्तान्तः प्रतिभेदं न कुत्रचित् ॥८०॥
केवलं प्रत्यभात्तादृक्पापिनोः प्रेम तत्तयोः । दृग्व्यापारेक्षणात्क्षिप्रं हाडिनाम्नोधिकारिणः ॥८१॥
तमर्थमथ तथ्येन वीक्ष्य प्रणिधिभिर्नृपः । प्रायश्चित्तानुचरणक्षमः कृष्णाजिनं दधौ ॥८२॥
कुपितोपि स यच्चैनां न्यवधीद्रागमोहितः । तेनैवागात्पुरोभागिवितर्कातङ्कपात्रताम् ॥८३॥
डोम्बोच्छिष्टानुषङ्गाद्भुक्तिरस्य यशस्करे । संक्रान्तं कुष्ठिसंस्पर्शात्कुष्ठं दुःखमिवाभवत् ॥८४॥
85 सामान्येन सता कैश्चित्सदृशैः शुभकर्मभिः । जन्मान्तरीयैः साम्राज्यं मया प्रापीति चिन्तयन् ॥८५॥
साम्राज्यकामो नृपतिर्भाविष्वपि स जन्मसु । युक्त्या प्रादान्निरातङ्कां राज्यलक्ष्मीं द्विजन्मने ॥८६॥
भूभुजा दानशौण्डेन पैतृके स्थण्डिले कृतः । छात्राणामार्यदेश्यानां तेन विद्यार्थिनां मठः ॥८७॥
मठाधिपतये तत्र छत्रचामरहासिनीम् । स नरेन्द्रश्रियं प्रादादन्तःपुरवर्जिताम् ॥८८॥
वितस्तापुलिने राजा नानोपकरणान्वितान् । ब्राह्मणेभ्यः सोग्रहारान्पञ्चपञ्चाशतं ददौ ॥८९॥
90 अथ जातोदरव्याधिरज्ञातो नायमित्यसौ । जानन्संग्रामदेवाख्यं परिवर्ज्य निजात्मजम् ॥९०॥
समर्प्य सचिवैकाङ्गसामन्तानभ्यषेचयत् । रामदेवात्मजं राज्ये वर्णटं प्रपितृव्यजम् ॥९१॥
शक्ये राज्यापवाकर्तुं शिशावनभिषेचिते । निराशाः समपद्यन्त तदा राज्यजिहीर्षवः ॥९२॥
स पर्वगुप्तकौटिल्यप्रयुक्तो हृदयोन्मुखः । विपाककालस्तत्राह्नि भङ्गोन्मुख इवाभवत् ॥९३॥
राजधानीस्थितस्यापि वर्णटो राज्यदायिनः । आरोग्यवार्तयाप्यासीन्मुमूर्षोरनिरीक्षकः ॥९४॥
95 ततः सानुशयो राजा साभ्यर्थ्यैत मन्त्रिभिः । राज्यं संग्रामदेवाय दातुमाश्वासकारिभिः ॥९५॥
राजाज्ञया निशामेकां बद्धोष्ट्रस्तम्भमण्डपात् । बहिःसार्गलात्प्रातर्वर्णटो निरवस्त्यत ॥९६॥
भयाद्व्रजागराद्यापि तद्भृत्यानां विवेकिनाम् । आस्थानमण्डपे प्राप पादुक्षालनभूमिताम् ॥९७॥
एकाहराजपुरुषस्तदासि विजयेश्वरे । श्रीडाह्वेवप्रसादाख्यो राजबीजी समर्पयत् ॥९८॥
अथाभिषिच्य संग्रामदेवं तीव्रीभवद्व्यथः । स राजधान्या निर्गत्य मर्तुं निजमठं ययौ ॥९९॥
100 धीः केशश्मश्रुवपने शिरःशाटकवर्जनम् । काषायग्रहणोद्वेगः शस्त्रत्यागपदश्च यः ॥१००॥
राजभृत्यैः प्रतिज्ञातः स तस्मिन्निश्चितक्षये । जीवत्येव कृतश्राद्धव्यञ्जकैः परिवर्जितः ॥१०१॥ युग्मम् ॥

७६. ¹) Thus corr. by A₂; reading of A₁ illegible; A₂ in margin °ङ्गनात्वं. ७७. ¹) A₂ gloss प्रहरजागरकेण. ७९. ¹) A₂ gloss वशीकरण.—²) Thus corr. by A₂ from A₁ सम्भव:. ८१. ¹) Thus corr. by A₂ from A₁ °भात्तादृ°. ८३. ¹) A₂ न्यवधीद्र°. ८६. ¹) Thus A₂; A₁ °कामोपि नृपो भा°. ८७. ¹) Thus A₂; A₁ स्थित:.—²) Thus corr. by A₂ from A₁ °देशानां. ८८. ¹) Thus A₂; A₁ नरेन्द्रश्रितां. ८९. ¹) A₂ gloss कांछलतीर्थविषये बलात्कारस्याग्रहारा अभवन्निस्याहु: लोका:. ९०. ¹) Thus corr. by A₂ from A₁ नृपा°. ९३. ¹) Thus corr. by A₂ from A₁ विपाकपाकस्त°. ९५. ¹) Thus corr. by A₂ from A₁ °देवस्य. ९६. ¹) Thus A₁; A₂ निरवास्यत; perhaps to be emended निरवस्त्यत. ९८. ¹) A₂ gloss एकाहं राजभूतस्य वर्णटस्य पुरुषो भृत्य:.

द्वे सहस्रे सुवर्णस्य सार्धे बद्ध्वा[1] पटाञ्चले । यो निर्जगाम राजासौ मुमूर्षुर्निजमन्दिरात् ॥१०२॥
पञ्चभिः पर्वगुप्ताद्यैर्यैरेकं तस्य मन्त्रिभिः । हृतं सजीवितस्यैव विभक्तान्योन्यमग्रतः ॥१०३॥ युग्मम् ॥
विवेष्टमानः शय्यायां व्याधिदग्धान्तरो नृपः । तिष्ठन्मठाङ्गनकुटीगर्भे ध्वान्तान्धकारिते ॥१०४॥
अजातसंविद्ध्वंशोऽपि पश्यन्द्रोहपराश्रितान् । प्राणैरहानि द्वित्राणि न यदा निरमुच्यत ॥१०५॥ 105
तदा सुहृद्बन्धुभृत्यवेलावित्तैः कृतत्वरैः । जिहीर्षुभिश्च साम्राज्यं विषं दत्त्वा विपादितः ॥१०६॥
अवरोधवधूमध्यात्सती तं पतिमन्वगात् । एका त्रैलोक्यदेव्येव स्वप्रभेव विरोचनम् ॥१०७॥
वर्णाश्रमपरिरक्षाबद्धकक्ष्यः क्षितीश्वरः । चक्रभान्वभिधं चक्रमेलके[1] द्विजतापसम् ॥१०८॥
कृतात्याचारमालोक्य राजा धर्मवशंवदः । निजमाह श्वपादेन ललाटतटमङ्कयन् ॥१०९॥
तन्मातुलेन[1] तद्रोषाद्वीरनाथेन योगिना । सांधिविग्रहिकेणार्थे[2] स स्वेनैव न्यगृह्यत ॥११०॥ 110
पूर्वाचार्यप्रभावेण स्वमाहात्म्याधिरोपणम् । प्रख्यापयद्भिर्गुरुभिः भद्वयेति यदुच्यते ॥१११॥
तत्कृत्ययापितैव सप्ताहात्स विपन्न इति श्रुतिः । दीर्घव्याधिहते तस्मिन्नुपपत्तिः कथं भवेत् ॥११२॥
अथामयान्तरेणाभूत्सा वार्तेत्युच्यते यदि । वर्णटाद्यभिशापोऽपि तदायात्वत्र हेतुताम् ॥११३॥
भुक्तैश्वर्यो नव[1] समाश्चतुर्विंशे स हायने । मासि भाद्रपदे कृष्णतृतीयस्यां व्यपद्यत ॥११४॥
पितामहीं शिशोर्गोप्त्रीं[1] विनिवेश्य नृपासने । भूभटाद्यैः समं प्राभू[2]त्पर्वगुप्तोऽथ पञ्चभिः ॥११५॥ 115
क्रमात्समं पितामह्या तान्व्यापाद्येतरान्बली । एकः स एवमाक्रान्तः[1] प्रबभूव नृपास्पदे ॥११६॥
स पार्थिवत्वमन्त्रित्वमिश्रया चेष्टया स्फुरन्[1] । राजा राजानकश्चे[2]ति मिश्रामेवं धियं व्यधात् ॥११७॥
सेवमानः स्वयं बालभूपं भोज्यार्पणादिभिः । ऋजूनां प्रत्यभात्पर्वगुप्तो द्रोहबहिष्कृतः ॥११८॥
यान्द्रोहभीरून्संभाव्य संविभेजे यशस्करः । तस्य तत्तनयोच्छेदे त एवासन्प्रयोजकाः ॥११९॥
करभाङ्गरुहापिङ्गे श्मश्रुणि क्षितिपालवत् । स ददौ कुङ्कुमालेपं वर्चः शाद्वलविस्तृते ॥१२०॥ 120
बिभ्यदेकाङ्गसंघातात्सकटोत्पाटनाक्षमः । प्रमापणाय प्रायुङ्क्त शिशोः कर्माभिचारिकम् ॥१२१॥
न्याय्यं ते सान्वयस्यास्ति राज्यं चैत्रादिवासरे । अन्यथाचरतो नाशः क्षिप्रं वंशायुषोर्भवेत् ॥१२२॥
इतीमामपि यामिन्यां शुश्रुवान्भूतभारतीम् । अभिचारस्य वन्ध्यत्वं निर्ध्यायाधिकशङ्कितः ॥१२३॥
एकाङ्गेभ्यो विभिन्नेभ्यो बिभ्यदुद्भिन्नसंभ्रमः । उदताम्यत्तथा चिन्तालुप्तसंविद्दिवानिशम् ॥१२४॥
यथा महाहिमापातनिःसंचारजने दिने । अकस्मात्संभृतबलो राजधानीं निरुद्धवान् ॥१२५॥ 125
विरोधकारिणं बुद्धाभिधेन सह सूनुना । निर्द्रोहमाहवे हत्वा मन्त्रिणं रामवर्धनम् ॥१२६॥

---

१०२. [1]) Thus corr. by later hand from $A_1$ बद्धा. १०८. [1]) $A_2$ gloss, partly effaced: चक्र...अने...करता ..चक्रमेल ...के... . १०९. [1]) $A_2$ gloss अतिक्रान्ताचारम्. ११०. [1]) $A_2$ gloss चक्रभानुद्विजमातुलेन.—[2]) $A_2$ gloss सान्धिविग्रहमुद्राप्रमुखकार्याधिकारी सान्धिविग्रहिकः कटकपालः. ११४. [1]) नव supplied by $A_2$ in space left by $A_1$. ११५. [1]) $A_2$ gloss सद्भावेनवस्य.—[2]) $A_2$ gloss प्रभुरभूत्. ११६. [1]) Emended with G Edd.; $A_1$ एव साक्रान्तिः which $A_2$ alters to एवमाक्रान्तिः. ११७. [1]) Thus $A_2$; $A_1$ स्फुरन्.—[2]) $A_2$ gloss राजा पार्थिवः राजानकः मन्त्री । राज्ञः अनः प्राणनं । जीवनं परिपालनलक्षणं । यस्मात्तः राजानः अनन्यप्राणनैः । राजान एव राजानकः । स्वार्थे कः यद्वा अत्र लिङ्गात् । कः सादृश्ये देवदत्त इव देवदत्तक इतिवत् । यथा प्राणनं विना देहस्थितिर्नास्ति । तथा धीसचिवं मन्त्रिणं विना पार्थिवानां स्वयं कार्याकार्यविवेककौशलातिशयो न सम्भवेदिति । राजानेकमपेक्षते राजा ॥ यद्वा राज्ञः अनः प्राण इव राजानक इत्यर्थः॥.

पिश्वेण वेलावित्तेन प्राभृतार्थमुपाहृताम्[1] । गले पुष्पस्रजं बद्धा पातितं पार्थिवासनात् ॥१२७॥

स तं वक्राङ्कसंग्रामं हतमन्यत्र मन्दिरे । पातयित्वा वितस्तान्तः कण्ठबद्धशिलं निशि ॥१२८॥

चतुर्विंशस्य वर्षस्य दशम्यां कृष्णफाल्गुने । पापः सखड्गकवचो न्यविक्षत नृपासने ॥१२९॥ चक्कलकम्[1] ॥

130 पारेविशोकं[1] दिविराज्जातस्याभिनवाभिधात् । सूनुः संग्रामगुप्तस्य स तदां[2] पार्थिवोभवत् ॥१३०॥

केचित्तं[1] प्रत्यवस्थानं ये पुरा प्रतिजज्ञिरे । ते सर्व एव तद्भीताः प्रातरेव प्रणेमिरे ॥१३१॥

पार्थिवैकाङ्गसामन्तमन्त्रिकायस्थतन्त्रिणाम् । तद्भीत्या द्रोहवृत्तीनां द्रोहाद्वैतमदृश्यत[1] ॥१३२॥

एकाङ्गस्य तदास्थाने सुय्याभिजनजन्मनः । प्रमादान्मदनादित्यनाम्नो ढक्का व्यदीर्यत ॥१३३॥

हतांशुकेन भूभर्त्रा कुपितेन खलीकृतः । स निकृत्तकचश्मश्रुस्तपस्वी समपद्यत ॥१३४॥

135 तादृशस्य पुनस्तस्य सखीपुत्रत्वमीयुषः । अद्याप्यभिजने जाता वसन्ति त्रिपुरेश्वरे ॥१३५॥

कुर्वता पर्वगुप्तेन भूभृता द्रविणार्जनम् । प्रापिताः पुनरुत्साहं प्रजारोगा नियोगिनः ॥१३६॥

व्यधत्त स्कन्दभवनविहारवसुधान्तिके । पर्वगुप्तेश्वरं सोपि वृजिनार्जितया श्रिया ॥१३७॥

श्रीयशस्करभूभर्तृशुद्धान्तस्य[2] विशुद्धधीः । कौलीनमलुनादेका[1] गौरीव नृपसुन्दरी ॥१३८॥

अचिराङ्कुरितप्रीतेः पर्वगुप्तस्य याकरोत् । समागमार्थिनो युक्त्या वञ्चनामुचितां सती ॥१३९॥

140 इदं यशस्करस्वामिसुरवेश्मार्धनिर्मितम् । त्यक्त्वा पत्युर्विपन्नस्य कृत्वा निर्माणपूरणम्[1] ॥१४०॥

अमोघमस्मिं[1] नियमाद्विधास्यामि त्वदीप्सितम् । स सुपच्छन्दयन्नेवं सुभ्रुवाभिहितस्तया ॥१४१॥

अथ प्रवृद्धगर्वेण तत्स्वल्पैरेव वासरैः । संपूर्णतां सुरगृहं गमितं तेन भूभुजा ॥१४२॥

सा यागज्वलने राजललना पीतसर्पिषि । पूर्णाहुत्या समं साध्वी जुहाव सहसा तनुम् ॥१४३॥

सपर्यस्या निरस्तासोः पुष्टाः कुसुमवृष्टयः । तत्काङ्क्षिणस्तु न्यपतन्नवर्णमुखरा गिरः ॥१४४॥

145 सुदीर्घसाहसारम्भविन्नासंरम्भशोषितः । पर्वगुप्तो बभूवाथ तृष्णामयपथानिधिः ॥१४५॥

व्याध्याधिप्रशमायातैर्ज्ञात्वाप्यस्थायिनीं स्थितिम् । मूढाः प्रकृतिं नोज्झन्ति द्रोहभीलोभमोहिताः ॥१४६॥

आशङ्क्य तादृक्षोपि सोकुण्ठैः प्राक्तनैः शुभैः । कैश्चित्सुरेश्वरीक्षेत्रे परासुः समपद्यत ॥१४७॥

षड्विंशवत्सराषाढबहुलेह्नि त्रयोदशे । द्रोहार्जितेन नृपतिः स राज्येन व्ययुज्यत ॥१४८॥

अतीन्द्रियायां परलोकवृत्ताविहैव तीव्राशुभपाकशंसी ।
दृश्येत नाशो यदि नाम नाशु न कः कुकृत्येन यतेत भूत्यै ॥१४९॥

150 क्षेमगुप्ताभिधानोभूदथ राजा तदात्मजः । आसवासेवनोत्सिक्तोविस्ततारुण्यसंज्वरः ॥१५०॥

सोभूत्स्वभावदुर्वृत्तो नितरां दुर्जनाश्रयात् । कृष्णक्षपाक्षणो घोरमेघान्ध इव भीतिकृत् ॥१५१॥

स्वतुल्यवेषालंकाराः[1] शतं लालितकां[2] नृपम् । तं फल्गुणप्रभृतयो दुराचाराः सिषेविरे ॥१५२॥

द्यूतासवाङ्गनासेवाव्यसनेपि स पार्थिवः । विटनिर्लुण्ठ्यमानोपि नाभूल्लक्ष्मीबहिष्कृतः ॥१५३॥

---

१२७. ¹) Thus corr. by $A_2$ from $A_1$ °हृतम्. १२९. ¹) चक्कलकम् added by $A_2$. १३०. ¹) Thus corr. by $A_2$ from $A_1$ विशोके.—²) Thus $A_2$; $A_1$ तथा. १३१. ¹) Thus $A_1$; $A_2$ केचित्तत्प्रत्य°. १३२. ¹) Thus $A_2$; $A_1$ द्रोहाद्वै°. १३८. ¹) $A_2$ gloss कौलीनं लोकनिन्दां.—²) Thus corr. by $A_2$ from $A_1$ °मधुद्धार°. १४०. ¹) Thus corr. by $A_2$ from $A_1$ निर्वाण°. १४१. ¹) $A_2$ gloss अस्मीति निपातः अहमित्यर्थे. १५२. ¹) Thus $A_1$; $A_2$ °वेशा°.—²) $A_2$ gloss पत्तलकः.

रागी मधुप्रणयवान्विदिताक्षसक्तिर्यः सख्यमेति मधुपैर्दलकोशसारैः ।
पद्मे प्रयाति दिनमात्रमपि प्रसक्तिं श्रीस्तत्र चेत्स्थितिमिव तत्र कुतूहलाय ॥१५४।

विटाः प्रविष्टा हृदयं जिष्णुआ वामनादयः । पिशाचस्येव चञ्चितामशुचिं तस्य चक्रिरे ॥१५५॥ 155

परोपहासकुशलः परनारीरतिप्रियः । परायत्ताशयस्तस्थौ पार्थिवोनर्थतत्परः ॥१५६॥

ष्ठीवनं श्मश्रुमालासु गालयः श्रोत्रपालिषु[1] । तेन क्षिप्ताः प्रतीक्ष्याणां कटोटीषु च टक्कराः ॥१५७॥

कटिसंघट्टनैर्[1]नार्यो मृगव्यज्ञाः[2] वनाटनैः । विटाश्चाश्लीलरटनैर्वाल्लभ्यं तस्य लेभिरे ॥१५८॥

पुंश्चलीजाल्मवैधेयबालकक्रोशभूनिर्भरा । समभूदप्रवेशार्हा राजपर्षन्मनस्विनाम् ॥१५९॥

जिष्णुपुत्रैः क्षेमगुप्तक्ष्माभृदन्त्यपुत्रकः[1] । चारणत्वगुणाकृष्टः किं न धूर्तैरनर्त्यत ॥१६०॥ 160

तस्य कङ्कणवर्षोसीत्यभिधानं विधाय ते । तोषिताश्चासकृच्चक्रुर्दोष्णोः कङ्कणवर्षिताम् ॥१६१॥

निर्दोषदोषाविष्कारे नववस्तुप्रदर्शने । अधृष्यटक्कराधाने प्रसादः प्रापि तैर्नृपात् ॥१६२॥

संलक्ष्यकुत्रकक्ष्यान्ताः कृत्वा निजवधूः पुरः । रागी राजा गृहानीतो द्यूते तैर्निर्धनः कृतः ॥१६३॥

संभोगाभ्रमसौभाग्यकृतस्पर्धैः परस्परम् । संभुज्यैता भवान्वक्तु विशेषमिति चोदितः ॥१६४॥

उपभोगं स्वभार्याणां निर्लज्जैस्तैः स कारितः । का हृद्येति च रत्यन्ते पृष्टोभीष्टधनप्रदः ॥१६५॥ युग्मम्[1] ॥ 165

तस्य लालितकेष्वासतां मूढौ संभोगढौकने । मात्रोधारित्ररक्षित्वाद्भिक्षाकौ[1] हरिधूर्जटी ॥१६६॥

नीत्वा नर्मकथाङ्गतां निजवपुर्भुञ्जन्ति मानोन्नतिं संदूष्य स्वयमङ्गनाः शुचितया त्यक्तं कुलं कुर्वते ।
सौख्यं घ्नन्ति सुदीर्घसेवनसमासक्त्या यदर्थं श्रमः प्रत्याख्याय तदेव वेद्मि न विटैः किं प्रार्थ्यते सेवया॥१६७॥

यशस्करस्य भूत्वापि सचिवो भट्टफल्गुणः । तस्याभूदनुजीव्यन्ते धिग्भोगाभ्यासवासनाम् ॥१६८॥

फल्गुणस्वामिमुख्यानां प्रतिष्ठानां विधायिनः । तस्योपदेशो भूभर्त्रा पर्यहास्यसकृद्ग्रहः ॥१६९॥

गृहान्विद्वेषितां[1] हन्तुं टक्करादि बलात्ततः । वृद्धो रक्कः कम्पनेशो दुर्गोष्ठीमध्यगोभवत् ॥१७०॥ 170

तीक्ष्णाक्षेपे संप्रविष्टं हन्तुं संग्रामडामरम् । श्रीजयेन्द्रविहारं स निर्घृणो निरदाहयत् ॥१७१॥

सुगतप्रतिमारीतिं हत्वा दग्धात्ततोऽखिलात्[1] । जरद्देवगृहेभ्यश्च संगृह्य[2] पात्रसंचयम् ॥१७२॥

सुरप्रतिष्ठया वृद्धिं मूढः स्वयशसो विदन् । नगरापणवीथ्यन्तः क्षेमगौरीश्वरं व्यधात् ॥१७३॥

एकः प्रयात्युपरमं द्रविणं तदीयं हृत्वापरः प्रसभमुद्वहति प्रमोदम् ।
नो वेत्ति तत्स्वनिधने परकोशगामि धिग्वासनामसममोहकृतान्धकाराम् ॥१७४॥

त्यागिना क्षेमगुप्तेन भुक्त्यर्थं खशभूभुजे[1] । हृत्वा विहारान्निर्दग्धान्ग्रामाः षट्त्रिंशदर्पिताः ॥१७५॥ 175

दुर्गाणां लोहरादीनां शास्ता शतमखोपमः[1] । नृपतिः सिंहराजाख्यस्तस्मै स्वां तनयां ददौ ॥१७६॥

स तस्यां शाहिदौहित्र्यां दिद्दायां सक्तमानसः । दिद्दाक्षेम इति ख्यातिं ययौ लज्जावहां नृपः ॥१७७॥

मातामहेन भूभर्तुर्भ्रात्रास्तस्या व्यधीयत । श्रीभीमशाहि[1]नोदात्तप्रासादो भीमकेशवः ॥१७८॥

१५७. [1]) Corr. by A2 from A1 °पालयः. १५८. [1]) Corr. by A2 from A1 °घट्टनाग°.—[2]) मृगव्यज्ञा supplied by A2 in space left by A1. १६०. [1]) Corr. by A2 from A1 °नन्त्यज. १६५. [1]) युग्मम supplied by A2. १६६ [1]) Thus corr. by A2; A1 °रक्षित्वा भिक्षा°. १७०. [1]) Thus A2; A1 °न्निवेषितां. १७२. [1]) Thus A2; A1 दग्ध्वा ततो.—[2]) Thus A2; A1 संहृत्य. १७४. [1]) Thus corr. by A2 from A1 कृत्वा. १७५. [1]) A2 gloss सिंहराजाय. १७६. [1]) Thus corr. by A2 from A1 शतमुखो° १७८. [1]) Thus A2; A1 श्रीभुमिस्वामिनो°. Cf. *Albêrûnî's Indica* (trans. by Sachau), ii. 13.

चन्द्रलेखाभिधां कन्यां राज्ञे' दत्तवताभवत् । फल्गुणद्वारपतिना समं दिद्दा समत्सरा ॥१७९॥

180 गुल्मदेशः क्रमशान्कुन्तविद्याभ्यसता तथा । तस्य निर्वहणाद्वर्षाद्भूभुजो हास्यतां ययौ ॥१८०॥

अमोघपातमांसान्योन्यास्त्रपातकर्मसु । शृगालमृगयासक्त्या स हि श्लाघ्यानमंन्यत ॥१८१॥

तं भृतं वागुरावाहिडोम्बचाटविकर्पेटकैः । पर्यटन्तं श्वभिः सार्धमपश्यन्सततं जनाः ॥१८२॥

तस्य क्षमोदरारण्यलल्यानशिमिकादिषु । स्थानेषु क्रोष्टुमृगयारसिकस्य वयोगमत् ॥१८३॥

अथ कृष्णचतुर्दश्यां स कुर्वन्मृगयां नृपः । ज्वालामपश्यत्क्रोशन्त्याः शृगाल्या निर्गतां मुखात् ॥१८४॥

185 तदालोकनसंजातत्रासाकम्पितस्ततः' । लूतामयज्वरेणाभूत्परीतो मृत्युहेतुना ॥१८५॥

भर्तुं ययौ च वाराहक्षेत्रं यत्र विधायकः । श्रीकण्ठक्षेममठयोरासीद्धुष्कपुरान्तिके ॥१८६॥

मधुरबिल्वलाकारलूताक्लिन्नकलेवरः । पौषे चाब्दे चतुस्त्रिंशे नवमेऽह्नि' सिते मृतः ॥१८७॥

क्षेमगुप्तात्मजः क्ष्माभृदभिमन्युरभूत्ततः । शिशुर्निस्त्रिंशधर्मिण्या दिद्दादेव्यानुपालितः ॥१८८॥

संधिविग्रहपुस्तान्तमुख्यकर्माधिकारिणः । निःसाध्वसं राजवधूमवन्ध्यशासनां व्यधुः ॥१८९॥

190 अभिमन्यौ क्षितिं रक्षत्यकस्मादेव दारुणः । तुङ्गेश्वरापणोपान्तादुज्जगाम हुताशनः ॥१९०॥

वर्धनस्वामिपार्श्वस्थभिक्षुकीपारकावधिः । वेतालसूत्रपातस्थान्स ददाह महागृहान् ॥१९१॥

डोम्बचण्डालसंस्पृष्टभूपसंपर्कदूषिताम् । दग्ध्वा महागृहान्वह्निर्भुवः शुद्धिमिवाकरोत् ॥१९२॥

रक्षिणी क्ष्मापतेर्माता स्त्रीस्वभावाद्विमूढधीः । सारासारविचारेण लोलकर्णी न पस्पृशे ॥१९३॥

राज्ञः सुतार्पणाद्बद्धवैरा तस्थौ पुरा यतः । पतिवत्न्येव सा सार्धं फल्गुणेनाग्र्यमन्त्रिणा ॥१९४॥

195 पत्यौ' मृते सपत्नीनां दृष्ट्वानुमरणं' ततः । दम्भेनानुमुमूर्षन्तीमनुमेने स तां द्रुतम् ॥१९५॥

निषिषेधानुबन्धात्तु सानुतापां चितान्तिके । कृपालुर्मरणादेताममात्यो नरवाहनः ॥१९६॥

अतो निसर्गपिशुनो रक्षस्तां मन्युदूषिताम् । फल्गुणाद्राज्यहरणाशङ्कां राज्ञीमजिग्रहत् ॥१९७॥

चिराणशंसिभिर्लिङ्गैस्तां ज्ञात्वा विषमाशयाम् । समन्तुं साखिलामात्यां फल्गुणोऽप्यास्त शङ्कितः ॥१९८॥

स हि सर्वाधिकारस्थः सर्वस्याक्षिगतोऽभवत् । दीप्यमानोऽधिकं मन्त्रशौर्योत्साहादिभिर्गुणैः ॥१९९॥

200 अस्थीनि क्षेमगुप्तस्य गृहीत्वा जाह्नवीं गते । पुत्रे कर्दमराजाख्ये प्रबलैरन्वितो बलैः ॥२००॥

तत्प्रत्यागमपर्यन्तं पर्णोत्से स्थातुमुद्यतः । अविश्वसन्नृपगृहे फल्गुणो वैरिशङ्कितः ॥२०१॥

निर्गत्य नगराद्यावत्सभाण्डागारसैनिकः । काष्ठवाटान्तिकं प्राप' तावद्रक्षादिचोदिता ॥२०२॥

आकलय्य द्रुतं दिद्दा संत्यज्य प्रार्थनादिकम् । पृष्ठे प्रत्युत याष्टीकांस्तस्य हन्तुं व्यसर्जयत् ॥२०३॥

नयावमानखिन्नः स मिलितानन्तसैनिकः । प्रत्यावृत्य ततो मानी वाराहं क्षेत्रमाययौ ॥२०४॥

205 श्रुत्वा समेतसैन्यं तं प्रत्यायातं प्रतापिनम् । आस्कन्दशङ्किनी दिद्दा सामात्या समकम्पत ॥२०५॥

---

१७९. [1]) Thus corr. by later hand from $A_1$ राज्ञी. १८०. [1]) Thus corr. by $A_3$ from $A_1$ °ग्रर्यां°. १८१. [1]) Thus corr. by $A_3$ from $A_1$ °भ्रतिमांस्या°.—[2]) $A_3$ कुन्ताग्.—[3]) Thus corr. by $A_3$ from $A_1$ श्लाघ्यामम°. १८२. [1]) Thus corr. by $A_3$ from $A_1$ °र्पविटके°. १८५. [1]) Thus corr. by $A_3$ from $A_1$ °सस्थिति:. १८७. [1]) Thus corr. by $A_3$ from $A_1$ नवमेऽके. १८९. [1]) Thus corr. by $A_3$ from $A_1$ सन्धिवि°. १९४. [1]) $A_4$ gloss समर्थेव सती. १९५. [1]) Thus corr. by $A_3$ from $A_1$ पत्न्यौ.—[2]) $A_1$ °नुसरणं. १९९. [1]) Thus $A_3$; $A_1$ सम्म°. २०२. [1]) Thus corr. by later hand from $A_1$ प्राप्य; $A_3$ gloss प्राप इत्यर्थः.

तस्मिन्क्षेत्रे गतं शान्तं विलप्य स्वामिनं चिरम्¹ । वराहपार्श्वसविधे तेन शस्त्रं समर्पितम् ॥२०६॥

द्रोहसंभावनापापं शस्त्रत्यागेन मन्त्रिणा । स्वस्य संमार्जितं तेन राजमातुश्च साध्वसम् ॥२०७॥

युक्तायुक्तविचारबाह्यमनसः सेवा महद्वैशसं क्रुद्धेऽस्मिन्प्रतिकारकर्म महतद्रोहापवादावहम् ।
येन न्यूनगुणेदृशोपकरणीभावोपि तस्मै परं कोपः कोपि विवेकिनः समुचितः शस्त्राय शस्त्राय वा ॥२०८॥

पर्णोत्सस्थेव शनकैः ससैन्ये फल्गुणे गते । विगताध्यापका बाला इवामोदन्त मन्त्रिणः ॥२०९॥

योगक्षेमौ चिन्तयन्ती क्षेमगुप्तवधूरपि । अनिशं प्रजजागार स्वयं कण्टकपाटने ॥२१०॥ 210

राज्यभार्यौ पर्वगुप्तो मन्त्रिणौ कोशपीथिनौ । आजिमहत्करौ पूर्वं पुम्योर्यौ¹ कोजभूभटौ ॥२११॥

तयोः प्रजातौ तनयौ ख्यातौ महिमपाटलौ । अवर्धिषातां यौ राजमन्दिरे राजपुत्रवत् ॥२१२॥

तौ तथावस्थितावेव तत्कालं राज्यलालसौ । संमन्त्र्य समगंसातामुग्रामैर्हिम्मकादिभिः¹ ॥२१३॥

बलिनौ तावबलया, राज्यापास्तौ नृपास्पदात् । समन्यू स्वगृहादास्तां यावत्कृतगतागतौ ॥२१४॥

एकतः पृष्ठतः प्रासादान्महिम्नो निर्गतस्य सा । निर्वासनाय चाटीकांस्तावत्प्रकटवैकृता ॥२१५॥ 215

शक्तिसेना¹भिधानस्य श्वशुरस्य निवेशनम् । प्रविवेश स तज्ज्ञात्वा तं ते तथापि रुरुधुः ॥२१६॥

शक्तिसेनेन चाटीकाः सान्त्विता नाचलन्यदा । तदा भीतस्य जामातुर्व्यधत्त प्रासादात्स संश्रयम् ॥२१७॥

तं¹ लब्धसंश्रयं प्राप हिम्मको मुकुलस्तथा । एरमन्तकनामा च परिहासपुराश्रयः ॥२१८॥

श्रीमानुदयगुप्ताख्योप्यमृताकरनन्दनः । ललितादित्यपुरजा यशोधरमुखा अपि ॥२१९॥

एकैके ते¹ मिथः सैन्यैर्भुवनक्षोभकारिणः । संभूय चक्रुर्वैराज्यं महिम्नः पक्षमाश्रिताः ॥२२०॥ 220

तस्मिन्महाभये दिद्दापक्षं मन्त्री सबान्धवः । एक एव तु तत्याज नाद्रोहो नरवाहनः ॥२२१॥

प्रवर्धमानपृतना योद्धुं बद्धोद्यमास्ततः । पद्मस्वाम्यन्तिकं प्रापुर्दीप्यमानायुधा द्विषः ॥२२२॥

अथ भूरमठे दिद्दा विसृज्यात्मजमाकुला । आपच्छान्तिक्षमांस्तांस्तानुपायान्समचिन्तयत् ॥२२३॥

ललितादित्यपुरजान्द्विजान्स्वर्णेन भूरिणा । तूर्णं स्वीकृत्य विदधे रिपूणां संघभेदनम् ॥२२४॥

एकाक्षेपेखिलैः कोपो विधेय इति वादिभिः । महिम्नः पीतकोशैस्तैः संधिर्दिद्द्या समं कृतः ॥२२५॥ 225

गोष्पदोल्लङ्घने यस्याः शक्तिर्नाज्ञायि केनचित् । वायुपुत्रायितं पङ्ग्वा तया संघाब्धिलङ्घने ॥२२६॥

यत्संग्रहो रत्नमहौषधीनां करोति सर्वव्यसनावसानम् ।
त्यागेन तद्यस्य भवेन्नमोस्तु चित्रप्रभावाय धनाय तस्मै ॥२२७॥

उत्कोचकाञ्चनादानेप्सुतां ध्यायन्त्युपक्रियाम् । दिद्दा यशोधरादिभ्यः कम्पनादि समार्पयत्¹ ॥२२८॥

अभिचारं महिम्नश्च कृतवत्या मितैर्दिनैः । मण्डलेखण्डिताज्ञस्य रण्डायाः¹ समजृम्भत ॥२२९॥

कदाचित्थक्कनाख्यस्य शा¹हीशस्योपरि क्रुधा । सदा स्वयंग्राहैर्यात्रां कम्पनाधिपतिर्ददौ ॥२३०॥ 230

तद्देशं निम्नगाशैलदुर्गं प्रविशता जवात् । प्रचण्डशक्तिना तेन बलाद्ग्राहि थक्कनः ॥२३१॥

---

२०६. ¹) Corr. by later hand from $A_1$ चर. २११. ¹) Thus corr. by later hand from $A_1$ यौ. २१३. ¹) Emended; A R G °हिमकर°. २१६. ¹) Thus corr. by $A_2$ from $A_1$ शक्तिसेनाभि°. २१८. ¹) Thus corr. by $A_2$ from $A_1$ तैलंक्य°; $A_2$ gloss सं महिमानं. २२०. ¹) Thus $A_2$; $A_1$ एकैकं सं. २२७. ¹) Thus corr. by $A_2$ from $A_1$ नमोस्तु. २२८. ¹) Emended; A R G समर्पयत. २२९. ¹) Thus $A_2$; $A_1$ दिशायाः. Cf. vi. 260. २३०. ¹) Thus corr. by $A_1$ from °थिकुकना°.

स कृतप्रणतेस्तस्य करमादाय भूपतेः । अभिषेकाम्बुभिश्चक्रे श्रीलताप्यायनं पुनः ॥२३२॥

लब्धप्रवेशै[1]ः समये तस्मिन्नङ्गादिभिः खलैः । कम्पनाधिपती राज्ञ्या विद्वेषोग्राहि मूढया ॥२३३॥

सर्वीपतेश्च स्फटिकाश्मनश्च शीलोज्झितस्त्रीहृदयस्य चान्तः ।
असंनिधानात्सततस्थितीनामन्योपरागः कुरुते प्रवेशम् ॥२३४॥

स्वचित्तसंवादि वचो वदन्तो धूर्ता वितन्वन्ति मनःप्रवेशम् ।
235 पृथग्जनानां गणिकावधूनां विटाः प्रभूणामपि गर्भचेटाः ॥२३५॥

द्रोग्धायं धक्कनं रक्षन्धमादायीति पैशुनम् । तथ्यमेव तदीयं सा स्वयंवादादमन्यत ॥२३६॥

अथ स्ववसतिं प्राप्ते कम्पनेशे जयोर्जिते । याष्टीकान्व्यसृजद्दिद्दा स्फुटं निर्वासनोद्यता ॥२३७॥

तदाक्षेपं समाकर्ण्य स्मरन्तः कोशसंविदम् । ते हिम्मकैरमन्ताद्याः पूर्ववद्विक्रियां ययुः ॥२३८॥

नरवाहनमुख्यास्तु राज्ञीपक्षं न तत्यजुः । विभेदं पूर्ववत्स्वापदेशं निजबलं पुनः ॥२३९॥

240 प्रविष्टेषु ततः कोपात्पुरं शुभधरादिषु । भट्टारकामठे दिद्दा भूयः पुत्रं व्यसर्जयत् ॥२४०॥

दत्तार्गले नृपगृहे स्थितां तां दैवमोहिताः । ते तदैव विना पुत्रं विमूढा नोदपाटयन् ॥२४१॥

राज्ञ्याः संजघटे लोकः परस्मिन्नेव वासरे । यद्बलेन तदा स्थैर्यं सा किंचित्समदर्शयत् ॥२४२॥

जयाभट्टारिकापार्श्वाद्यावच्छूरमठान्तिकम् । व्याप्य स्थितैर्द्विषत्सैन्यैरथ प्रववृते रणः ॥२४३॥

राजधानीं राजसैन्ये प्रविष्टे त्रासविद्रुते । सिंहद्वारे घटाबन्धमेकाङ्गाः समदर्शयन् ॥२४४॥

245 शरीरनिरपेक्षास्ते भीमं संस्तभ्य तद्बल । अधावन्[1]विद्विषां सैन्यं चेलुः[2] केचिच्च शत्रवः ॥२४५॥

तस्मिन्नवसरे राजकुलभट्टः समाययौ । तूर्यघोषैर्द्विषां सैन्यं भिन्दन्नानन्दयन्निजम्[1] ॥२४६॥

तस्मिन्प्राप्ते द्विषां सैन्यं विननाश विनश्वरम्[1] । न द्रोहाविनयं जातु सहन्ते शस्त्रदेवताः ॥२४७॥

त्रोट[1]यत्यायसान्बन्धान्स्फोटयत्युपलानिति । यः ख्यातिमवहत्[2]संख्यां हिम्मको भीमविक्रमः ॥२४८॥

तस्यासिना राजकुलभट्टदेहार्धपातिना । चर्ममात्रं न तुत्रोट कङ्कटस्यातिसंकटे ॥२४९॥

250 विलोक्य तदसंभाव्यं सैन्ये दैन्यं समाश्रिते । अघानि हिम्मको योधैरवष्टम्भि[1] यशोधरः ॥२५०॥

तथाप्यासीत्स्फुरन्संख्ये य एर[1]मन्तकः क्षणम् । स भग्नासिश्च्युतो वाहाज्जीवग्राहमगृह्यत ॥२५१॥

नाज्जी तैरेष्यता धातुं यः श्रीमान्राजबान्धवः । जगामोदयगुप्तः स क्वापि त्यक्त्वा महाहवम् ॥२५२॥

इत्थं लब्धजया राज्ञी तत्क्षणाक्ष्यमहीद्रुहा । यशोधरं शुभधरं मुकुलं च सबान्धवम् ॥२५३॥

काश्मीरिकाणां[1] यः श्राद्धशुल्कोच्छे[2]त्ता गयान्[3]तरे । सोप्येरमन्तकः शूरः परिहासपुरा[4]श्रयः ॥२५४॥

255 बद्ध्वा महाशिलां कण्ठे वितस्ताम्भसि पातितः । स्वदुर्नयफलं देव्याः प्रकोपेनानुभावितः ॥२५५॥

---

२३२.[1]) $A_2$ gloss श्रीः एव लता. २३३. [1]) Thus corr. by later hand from $A_1$ °वेश:; R G as above. २३४. [1]) Thus corr. by $A_2$ from $A_1$ °न्योन्यराग:. २३६. [1]) Thus $A_1$; $A_2$ स्वसंवादा°. २३८ [1]) $A_2$ gloss एकाक्षेपेणिलैः कोपी विधेय इत्येवंरूपां. २३९. [1]) मुख्या supplied by $A_2$ in space left by $A_1$. २४१. [1]) Thus corr. by $A_2$ from $A_1$ नोदपाट°. २४५. [1]) Thus corr. by $A_2$ from $A_1$ अधावद्वि°.—[2]) The words from चेलुः to सैन्यं in the following verse are omitted by $A_1$ and supplied in margin by $A_2$. २४६. [1]) $A_2$ °न्निजान्. २४७. [1]) Thus $A_1$: $A_2$ G R विनिश्वरम्. २४८. [1]) Thus corr. by later hand from $A_1$ त्रोट°.—[2]) तिमवहत supplied by $A_2$ in space left by $A_1$. २५०. [1]) Emended with C; A R G °रवहम्भि. २५१. [1]) Thus A; R G ऐर°. २५४. [1]) Thus corr. by $A_2$ from $A_1$ काश्मीरिका°.—[2]) Thus corr. by $A_2$ from $A_1$ °शुल्कोच्छेत्ता.—[3]) Thus corr. by $A_2$ from $A_1$ गयान्तरे.—[4]) Thus corr. by $A_2$ from $A_1$ °शार°.

ये समसमताहर्षीया गोपालनृपात्पुरा । अभिमन्युं यावदासन्योजकानां महीभुजाम् ॥२५६॥
वर्षवर्षि गतापायुःश्रीहरा द्रोहवृत्तयः । ते क्षिप्रं मन्त्रिणः सर्वे सान्वयाया महानुगाः ॥२५७॥
भीमभूभङ्गमात्रेण दिद्दादेव्या सकोपया । आसन्निःशेषतां नीता दुर्गयेव महासुराः ॥२५८॥ तिलकम् ॥
अभवन्विहिता राज्ञ्या तानुत्पाद्य महोद्धतान् । रक्कादयः कम्पनादिकर्मस्थानाधिकारिणः ॥२५९॥
इत्थं मन्त्रिप्रकाण्डः स रण्डामाखण्डलोपमाम् । अखण्डमण्डलां चक्रे निर्द्रोहो नरवाहनः ॥२६०॥ 260
राज्ञी कृतज्ञभावेन सापि मन्त्रिसभान्तरे । तमाजुहाव निर्द्रोहं स्वयं राजानकाख्यया ॥२६१॥
सुप्ते सुष्वाप निष्पन्नभोजनेऽस्मिन्नभुङ्क्त सा । हृष्टे जहर्ष निर्विण्णे निर्विवेदानुकूल्यतः ॥२६२॥
आरोग्यान्वेषणं शिक्षाप्रार्थनां गृहवर्तिनः । साल्पवस्तुविसर्गं च नाकृत्वा तस्य पिप्रिये ॥२६३॥
अभूतां मुग्धवाहस्य कुट्यनाम्नः सुतौ पुरा । यौ सिन्धुभुय्यौ तज्ज्यायान्सिन्धुर्लोलितकः किल ॥२६४॥
पर्वगुप्तगृहे भूत्वा गञ्जाध्यक्षे स्थिते[1] क्रमात् । लब्ध्वा गञ्जाधिकारित्वं तस्या राज्ञ्याः धामैरभूत् ॥२६५॥ 265
भ्राता तथैव गञ्जेशो भवायासविधायकः[1] । कर्मस्थानस्य निर्माता सिन्धुगञ्जाभिधस्य यः ॥२६६॥
प्रायशो हतराज्यस्ते वर्तते नरवाहनः । इति नेयधियं राज्ञीं सोऽभ्यधत्त दुराशयः ॥२६७॥
सा तथेत्यब्रवीद्यावत्तावत्प्रेम्णा स जातुचित् । मन्त्री तां प्रार्थयामास भोक्तुं निजगृहागमम् ॥२६८॥
सा सानुगा तत्र यातां ध्रुवं त्वामेव भन्त्स्यति[1] । इत्युक्ता सिन्धुनापृच्छत्सत्कर्तव्यं भयाकुला ॥२६९॥
अनुक्त्वैव प्रचलिता राजधानीमलक्षिता । स्त्रीधर्मिण्यस्मि जातेति पश्चाद्वार्तां व्यसर्जयत् ॥२७०॥ 270
संप्रवृत्तोपचारायां गतायां तत्पथास्तथा । राज्ञ्यां नाशममात्यस्य प्रीतिः संविद्य सा ययौ ॥२७१॥
तयोस्ततः प्रभृत्येव निष्कृष्टस्नेहयोः कृतम् । चाक्रिकैरतिरूक्षत्वं तिलपिण्याकयोरिव ॥२७२॥
कुलिशं सर्वलोहानामम्भसां शैलसेतवः । अभेद्याः प्रतिभाव्यन्ते न किंचिदसतां पुनः ॥२७३॥
ये बालादपि संमूढाः प्राज्ञाः सुरगुरोरपि । तेषां न विद्मः के तावन्निर्माणपरमाणवः ॥२७४॥
विश्वासोज्झितधीः शिशून्कलयते काकोऽन्यदीयान्निजान्हंसः क्षीरपयोविभागकुशलस्त्वस्यत्यसाराद्गुणात् ।
लोकावेक्षणतीक्ष्णधीः खलगिरं जानाति सत्यां नृपो धिग्वैदग्ध्यविमुग्धताव्यतिकरस्पृष्टं विधानं विधेः ॥२७५॥ 275
मूढा चरणहीना सा श्रुतिबाह्यतया तया । वैधेयविप्रप्रकृतिरिव प्रायाद्विगर्ह्यताम् ॥२७६॥
उद्वेजितस्तया शश्वत्तया स नरवाहनः । यथा विमाननोत्तप्तः स्वयं तत्याज जीवितम् ॥२७७॥
प्रकुप्यत्यप्रतीकार्ये स्वतेजस्तप्तचेतसाम् । शरणं मरणं त्यक्त्वा किमिवान्यद्यशोऽर्थिनाम् ॥२७८॥
शशिहीनेव रजनी सत्यत्यक्तेव भारती । विरराज न राजश्रीर्नरवाहनवर्जिता ॥२७९॥
सा क्रौर्याभ्यासविषमा हन्तुं विततविक्रमान् । संग्रामडामरमुखान्समीपस्थानचिन्तयत् ॥२८०॥ 280
निजमुत्तरघोषं ते तद्भयेन विनिर्गताः । कल्यकद्वारपत्यादीन्कृतारम्भीन्व्यपादयन् ॥२८१॥
अस्पिञ्जभीतया राज्ञ्या त्यक्त्वा परिभवत्रपाम् । ते यत्नात्संमधायन्त मानः स्वार्थार्थिनां कुतः ॥२८२॥

---

२६५. [1]) A₂ gloss यस्मिन् सुरागृहे राज्ञा भण्डागारे गुप्तायैति कोशः.—[2]) Thus A R G; perhaps, to be emended with G *sec. manu* गञ्जाध्यक्षस्थितः क्रमात्. २६६. [1]) Thus emended according to conjectural reading (*sec. manu*) in G; A R G (*prima manu*) नवायासवि°. २६९. [1]) Emended; A₁ बंस्यति; G P वत्स्यति; R भस्स्यति; C वत्स्यति. २७०. [1]) A₂ °प्रचाय°.—[2]) A₂ तम्भतासधा. २७४. [1]) Thus A₂; A₁ किन्ताव°.

स्थानेश्वरादिभिर्मुख्यैर्डामरैरितरैः समम् । ते भीताः पुरतस्तस्याः पुनरेत्य जजृम्भिरे ॥२८३॥
अथ तद्भीतया राज्ञ्या रङ्के प्रभवमागते । आनीतः फल्गुणो भूयो धीरार्थिन्या निजान्तिकम् ॥२८४॥
285 राजकार्याणि कुर्वाणः स भूयः शल्यमग्रहीत् । व्यसनग्रस्तोपि यस्तस्य दुस्त्यजा भोगवासना ॥२८५॥
महिमा राजपुर्यादिजयिनस्तस्य पश्चिमः । अद्भुतो वृद्धबन्धक्या अबद्ध इवाभवत् ॥२८६॥
अभूदुदयराजस्य देवीभ्रातुरतिप्रियः । यः सहायोक्षपटले जयगुप्ताभिधः कुधीः ॥२८७॥
अन्येधिकारिणस्तेन सहिताः क्रूरवृत्तयः । कश्मीरेषु व्यधुर्लुण्ठिं दुष्कृतैस्तदुपार्जितैः ॥२८८॥
दौःशील्यभाजो मातुश्च पाप्मभिर्विधुरीकृतः । अभिमन्युः क्षणे तस्मिन्क्षयरोगेण पस्पृशे ॥२८९॥
290 पण्डितः पुण्डरीकाक्षो विद्वत्पुम्भिरुपस्कृतः । कृतश्रुतः स वैदुष्यतारुण्याभ्यां विदिद्युते ॥२९०॥
तथा विशुद्धप्रकृतेस्तस्य दुष्कृतसंगमः । शोषाधायी शिरीषस्य रविताप इवाभवत् ॥२९१॥
अर्धमानः[1] प्रजाचन्द्रस्तृतीयस्यां स कार्तिके । शुक्लेऽष्टचत्वारिंशाब्दे ग्रस्तो नियतिराहुणा ॥२९२॥
तत्पुत्रो नन्दिगुप्तस्तु बालश्चक्रे निजासने । वृद्धस्तनयशोकस्तु दिद्दाया दधे पदम् ॥२९३॥
सा शोकपिहितक्रौर्या तस्थौ प्रशमशीतला । रविरश्मिशलाकेव ध्वान्तच्छन्नोष्मवैकृता ॥२९४॥
295 ततः प्रभृत्यद्भुताभिस्तस्या धर्मप्रवृत्तिभिः । कुकर्मभिरुपोढापि लक्ष्मीः प्राप्ता पवित्रताम् ॥२९५॥
नगराधिपतिर्भुय्यः सिन्धुभ्राता शुभाशयः । तदीयधर्मचर्यायां बभूव परिपोषकः ॥२९६॥
सा तेनोत्पादितानर्घजनरागा गतैनसा । ततः प्रभृत्यभूद्देवी सर्वलोकस्य संमता ॥२९७॥
राज्ञः स सचिवः सत्यं दुष्प्रापो लुप्तपण्डिमा । कुर्याद्यः सुखसेव्यत्वं हेमन्त इव भास्वतः ॥२९८॥
सा निर्ममौ विपन्नस्य सूनोः सुकृतवृद्धये । अभिमन्युस्वामिनोभूदभिमन्युपुरस्य च ॥२९९॥
300 अथ दिद्दापुरोपेतो दिद्दास्वामी तया कृतः । मठश्च मध्यदेशीयलाटशौडोत्रसंभवः ॥३००॥
भर्तुः कङ्कणवर्षस्य पुण्योत्कर्षाभिवृद्धये । चकार कङ्कणपुरं रमणी स्वर्णवर्षिणी ॥३०१॥
श्वेतशैलमयं चान्यं सा दिद्दास्वामिनं व्यधात् । धवलं चरणीभूतगङ्गाम्भःप्लवनैरिव ॥३०२॥
चक्रे काश्मीरिकाणां च दैशिकानां समाश्रयः । तयाप्युच्चचतुःशालो विहारश्चारुसंपदा ॥३०३॥
श्रीसिंहस्वामिनं नाम्ना सिंहराजस्य सा पितुः । मठं च विदधे स्थित्यै[1] दैशिकानां द्विजन्मनाम् ॥३०४॥
305 मठप्रतिष्ठावैकुण्ठनिर्माणाद्यैः स्वकर्मभिः । तयातिपावनश्चक्रे वितस्तासिन्धुसंगमः ॥३०५॥
तेषु तेषु प्रदेशेषु किमुच्चैर्भूरिभिः श्रुतैः[1] । सा प्रतिष्ठा व्यरचयच्चतुःषष्टिमिति श्रुतिः ॥३०६॥
जीर्णोद्धारकृता देव्या भ्रष्टप्राकारमण्डलाः । प्रायः सुरगृहाः सर्वे शिलाश्मप्रावृताः कृताः ॥३०७॥
क्रीडाचङ्क्रमणे राज्ञ्याः पङ्गुं विमदवाहिनी । वल्गाभिधा वैवधिकी वल्गामठमकारयत् ॥३०८॥
तीर्थासेवनमौनभागपि तिमिः सक्तः स्वकुल्याशने बालाशान्ग्रसते शिखी घनपयोमात्राशनोप्यन्वहम् ।
विश्वस्ताञ्जलचारिणः प्रकटितध्यानोपि भुङ्क्ते बकः सत्कर्माचरणेपि दोषविकृतौ[1] न प्रत्ययः पापिनाम् ॥३०९॥
310 वर्षणी[1] वर्षमात्रेण शान्तशोका बभूव सा । भोगोत्सुकार्भके तस्मिन्नमरि व्यभिचारकृत् ॥३१०॥

२९२. [1]) Thus A R G; Edd. वर्धमानः, found also *sec. manu* in R G. $A_2$ gloss अर्धपक्वाः खण्डबिम्बश्च. ३००. [1]) Thus A R G. ३०३. [1]) Thus corr. by $A_2$ from $A_1$ समाश्र°. ३०४. [1]) स्थित्यै omitted by $A_1$ and supplied in margin by $A_2$. ३०६. [1]) Thus $A_2$; $A_1$ श्रुताः. ३०९. [1]) Thus $A_1$; $A_2$ °विरतौ. ३१०. [1]) $A_2$ gloss वर्षणी असती इत्यर्थः.

वर्षे एकान्नपञ्चाशे नीतः पक्षे सिते क्षयम् । स मार्गशीर्षद्वादश्याममार्गस्थमया तया ॥३११॥
पौत्रस्त्रिभुवनो नाम मार्गशीर्षे[1] सितेऽहनि । पञ्चमेप्येकपञ्चाशे वर्षे तद्वत्तया हतः ॥३१२॥
अथ मृत्युपथे राज्यनाम्नि स्वैरं निवेशितः । क्रूरया चरमः पौत्रो भीमगुप्ताभिधस्तया ॥३१३॥
तस्मिन्नवसरे वृद्धः फल्गुणोपि व्यपद्यत । निगूढक्रौर्यदौःशील्या दिद्दा यत्नीरवाभूत् ॥३१४॥
बभूव सार्थं स्पष्टदुष्टचेष्टाशतोत्कटा । भ्रष्टकक्ष्यपटा मत्तदन्तिमूर्तिरिवोत्कटा ॥३१५॥ 315
महाभिजनजातानामपि हा धिङ्निसर्गतः । सरितामिव नारीणां वृत्तिर्निम्नानुसारिणी ॥३१६॥
स्रोतोधिराज्यमधिगम्य विराजमानात्सिन्धोः प्रसूय कमलाल्पपयोनिकेते ।
जाते सरस्यविरतं जलजे प्रसक्ता मार्वी महाभिजनजा अपि नीचभोग्याः ॥३१७॥
खशस्य वल्लिवासाख्यपर्णोत्सग्रामजन्मनः । बाणस्य सूनुस्तुङ्गाख्योविशन्महिषपालकः ॥३१८॥
प्रविष्टो जातु कश्मीरांल्लिखहारककर्मणा । सुगन्धिसीहमकटनागाह्वयिकषण्मुखैः ॥३१९॥
पञ्चभिर्भ्रातृभिः सार्धं सांधिविग्रहिकान्तिके । देव्या दृग्गोचरं यातो हृदयाब्जकोभवत् ॥३२०॥ तिलकम् ॥ 320
रहःप्रवेशितो दूत्या स भाव्यर्थबलाद्युवा । संभुक्तभूरिजाराया अपि तस्याः प्रियोभवत् ॥३२१॥
तुङ्गानुरागिणी राज्ञी पापा लज्जोज्झिता ततः । रसदानेन वैमुख्यभाजं भुट्यमघातयत् ॥३२२॥
धिङ्निर्विचारान्कुपतीन्येषां विषमचेतसाम् । फलशून्या स्तुतिस्तोषे दोषे प्राणधनक्षयः ॥३२३॥
रङ्को देवकलशो वेलावित्तः कृतस्तया । भुट्याधिकारे कौडुन्यमाचरन्निलपो विटः ॥३२४॥
येपि कर्दमराजाद्या वीरा द्वारादिनायकाः । तेपि कौडुन्यमभजन्नन्येषां गणनैव का ॥३२५॥
चतुष्पञ्चानि वर्षाणि तिष्ठन्नृपगृहे शिशुः । भीमगुप्तोभवद्यावत्किंचित्प्रौढीभवन्मतिः ॥३२६॥
राज्यव्यवस्था यावच्च पितामह्याश्च वृत्तयः । दुःस्थिताः प्रत्यभासन्त संस्थाप्यास्तस्य चेतसि ॥३२७॥
भङ्गशीलविहीनाया निर्घृणाया निसर्गतः । तावत्तेयधियस्तस्याः स चिन्त्यः समपद्यत ॥३२८॥
अभिमन्युवधूस्तं हि चक्रे गूढप्रवेशितम् । महाभिजनजं पुत्रं तस्मात्सोभूत्तथाविधः ॥३२९॥
सा देवकलशेनाथ दत्तमन्त्रा विशङ्किता । त्रपोज्झिता स्पष्टमेव भीमगुप्तमबन्धयत् ॥३३०॥ 330
निगूढे नन्दिगुप्तादिद्रोहे लोकस्य योभवत् । संदेहः स तदा तेन व्यक्तकृत्येन वारितः ॥३३१॥
ताभिस्ताभिर्यातनाभिर्भीमगुप्तं निपात्य सा । षट्पञ्चाशेभवद्वर्षे स्वयं क्रान्तनृपासना ॥३३२॥
प्रवृद्धरागया राज्ञ्या दत्तोद्रेको दिने दिने । सर्वाधिकारी तुङ्गोथ बभूवाधरिताखिलः ॥३३३॥
सभ्रातृकेन तुङ्गेन मीलिताः पूर्वमन्त्रिणः । राज्यविप्लवमाधातुमयतन्त विरागिणः ॥३३४॥
तेथ संमन्त्र्य कश्मीरानानिन्युः क्रूरपौरुषम् । उग्रं विग्रहराजाख्यं दिद्दाभ्रातुः सुतं नृपम् ॥३३५॥ 335
मुख्यामहारान्स प्राप्तो विधातुं राज्यविप्लवम् । धीमान्प्रायोपवेशार्थं द्रुतं प्रावेशयद्द्विजान् ॥३३६॥
विहितैक्येषु विप्रेषु लोकः सर्वोपि विप्लुतः । अन्वियेषान्वहं तुङ्गं तत्र तत्र जिघांसया ॥३३७॥

---

३११. 1) Thus $A_1$; $A_2$ एकोनप°. ३१२. 1) Thus corr. by later hand from $A_1$ मार्गशीर्षे. ३१५. 1) बभूव सार्थ supplied by $A_2$ in space left by $A_1$. ३१८. 1) $A_4$ gloss बोवील ग्रामः. ३१९. 1) ख supplied by $A_2$ in space left by $A_1$. ३२०. 1) Corr. by $A_2$ from $A_1$ सन्धि°.—2) Thus $A_1$; $A_2$ °कान्तरे. ३२५. 1) Thus corr. by $A_2$ from $A_1$ कौटिल्य°. ३२९. 1) Thus corr. by $A_2$ from $A_1$ अभिमन्युव°. ३३३. 1) धरि supplied by $A_2$ in space left by $A_1$. ३३६. 1) $A_2$ gloss प्राय· भोजनत्यागः.—2) Thus $A_1$; $A_2$ प्रावीविशद्°.

कस्मिंश्चिदपिहितद्वारे तुङ्गं प्रच्छाद्य वेश्मनि । दिनानि कतिचिद्दिद्दा तस्थावास्कन्दशङ्किनी ॥३३८॥
तथा स्वर्णप्रदानेन सुमनोमन्तकादयः । ब्राह्मणाः समगृह्यन्त ततः प्रायो न्यवर्तत ॥३३९॥
340 एवं तस्मिन्महाक्षेपे तया दानेन वारिते । ययौ विग्रहराजः स भग्नशक्तिर्यथागतम् ॥३४०॥
अथ दार्ढ्यं समासाद्य तुङ्गाद्याः प्रभविष्णवः । शनैः कर्दमराजादीञ्जघ्नुर्विहितविप्लवान् ॥३४१॥
सुलक्कणो रक्कसूकुस्तथान्ये भुक्षमन्त्रिणः । हष्टैर्निर्वासिता देशात्तुष्टैस्तैः संप्रवेशिताः ॥३४२॥
प्रवर्धमानवैरेण गूढदूतैर्विसर्जितैः । प्रायं विग्रहराजेन ब्राह्मणाः कारिताः पुनः ॥३४३॥
उत्कोचादित्सया विप्रा भूयः प्रायविधायिनः । लब्धस्थैर्येण तुङ्गेन संनिपत्यापहस्तिताः ॥३४४॥
345 तेषां मध्ये वसन्गूढमादित्याख्यः पलायितः । हतो विग्रहराजस्य प्रियः कटकवारिकः ॥३४५॥
शस्त्रक्षतः प्रतीहारी वत्सराजाभिधः पुनः । न्यङ्कोतकादिभिर्जीवग्राहमगृह्यत ॥३४६॥
ते स्वर्णग्राहिणो विप्राः सुमनोमन्तकादयः । सर्वेपि बद्धास्तुङ्गेन कारागारं प्रवेशिताः ॥३४७॥
अथ फल्गुणनाशेन दृप्ते राजपुरीपतौ । तां प्रत्यारब्धिरभवत्कुप्यतां सर्वमन्त्रिणाम् ॥३४८॥
निपत्य संकटे वीरः पृथ्वीपालाभिधस्ततः । चक्रे राजपुरीराजः काश्मीरिकाबलक्षयम् ॥३४९॥
350 शिपाटको हंसराजो विपन्नौ तत्र मन्त्रिणौ । चन्द्राद्यैर्दुर्गतिर्दृष्टा मरणं यत्र भे[2]षजम् ॥३५०॥
अथान्येन पथाकस्मात्तुङ्गः सार्धं सहोदरैः । कृत्स्नां राजपुरीं वीरः प्रविश्य सहसादहत् ॥३५१॥
प्रणाश तेनोपायेन पृथ्वीपालः स पार्थिवः । शेषाणां मन्त्रिणां सैन्यं प्राप मुक्तिं च संकटात् ॥३५२॥
अबलः सन्स भूपालस्तुङ्गाय प्रददौ करम् । एवं कृतं तदा तेन नष्टस्यार्थस्य योजनम् ॥३५३॥
प्रविश्याग्रगारं तुङ्गस्ततः स्वीकृतकम्पनः । चकार डामरग्रामसंहारं सिंहविक्रमः ॥३५४॥
355 दिद्दाप्युदयराजस्य भ्रातुः पुत्रं परीक्षितम् । चक्रे संग्रामराजाख्यं युवराजमशङ्किता ॥३५५॥
सा हि सर्वाञ्छिशुप्रायान्पुरो भ्रातृसुतान्स्थितान् । परीक्षितुं मुमोचाग्रे पालेवतफलावलिम् ॥३५६॥
शक्तः कियन्ति कः प्राप्तुं फलान्यत्रेतिवादिनी । साभवद्राजपुत्राणां तेषां कलहकारणम् ॥३५७॥
गृहीताल्पफलाँल्लब्धप्रहारांस्तान्ददर्श च । संग्रामराजं[1] त्वस्वल्पफलभाजमविक्षतम् ॥३५८॥
अनन्तफलसंप्राप्तावक्षतत्वे च कारणम् । सविस्मयं तया पृष्टः स तामेवं तदाब्रवीत् ॥३५९॥
360 अन्योन्यकलहव्यग्रानेतान्कृत्वा पृथग्वसन् । समवापं फलान्यस्मिन्न चाभूवं परिक्षतः ॥३६०॥
व्यसनं संप्रवेश्यान्यान्स्थितानामप्रमादिनाम् । न काः क्लेशविहीनानां[2] घटन्ते स्वार्थसिद्धयः ॥३६१॥
श्रुत्वेति तस्य सा बाल्यमप्रमत्तत्ववृत्तिकाम् । भीरुर्नारीस्वभावेन राज्येमन्यत योग्यताम् ॥३६२॥
शूरस्य लभ्यं शौर्येण भीरोर्भीरुतया यथा । कार्यं हि प्रतिभास्यन्तर्न भवेच्च तदन्यथा ॥३६३॥
काष्ठं वह्निपुञ्जितमपि भवेच्छीतशान्त्यै कपीनां लोप्त्रं भुक्त्यै सलिलमनलश्चाभि[1]शौचैणकानाम् ।
जन्तोर्भावा विदधति यथा भाविनः कार्यसिद्धिं तत्त्वं तेषां क्वचन सहजं वस्तुनो नास्ति किंचित् ॥३६४॥

---

३५०. ¹) Thus A₂; A₁ °दुर्गतिं दृष्ट्वा.—²) Thus corr. by later hand from A₁ भैष°. ३५१. ¹) सहस्रा supplied by A₂ in space left by A₁. ३५८. ¹) राजं omitted by A₁ and supplied by A₂. ३६१. ¹) Thus corr. by A₂; A₁ व्यसने संप्रविश्या°.—²) Thus corr. by A₂ from A₁ °विहीनां. ३६४. ¹) A₂ gloss अभिशौचा यथा अभिमभन्ति विषमूषकाः विषं च न विषयन्ते जीविता - - - - -. ²) A₂ यथाभावन.

तस्यामेकाब्दशीत्यब्दभुक्तभाद्राष्टमीदिने । देव्यां दिवं प्रयातायां युवराजोऽभवन्नृपः ॥३६५॥ 365

स्त्रीसंबन्धेन भूपालवंश्यानां भुवनाद्भुतः । तृतीयः परिवर्तोऽयं वर्ततेऽमुत्र मण्डले ॥३६६॥

निर्नष्टकण्टककुले वसुसंपदाढ्ये श्रीसातवाहकुलमाप महीतलेऽस्मिन् ।
दावाभिदग्धकुतरौ जलदाम्बुसिक्ते चूतप्ररोह इव केलिवने प्रवृद्धिम् ॥३६७॥

अथ स मृदुतयान्तर्गूढधैर्यानुभावः सुखमवनिमशेषां दोष्णि संग्रामराजः ।
बिसकुलनिभशोभानिह्नुतप्राणसारः फणकुलं उरगाणामीशितेव न्यधत्त ॥३६८॥

इति श्रीकाश्मीरिकमहामात्यचण्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां षष्ठस्तरङ्गः[2] ॥
अत्र वर्षचतुःषष्टौ मासेष्वर्धे दिनेषु च । अष्टस्वभूवन्भूपाला दश भूभोगभोगिनः ॥

---

३६६. 1) Thus corr. by later hand from A1 °वंशा°. ३६७. 1) Thus corr. by A3 from A1 निष्टकण्ट°.—2) Thus corr. by A2 from A1 सालवा°; R G as above.—3) A3 प्रवर्धिम्. ३६८. 1) Thus corr. by A3 from A1 फणकुल. *Colophon.* 1) A3 inserts here the note: ता० १० पं ३६९ ॥ आश्विनः ता० ११ प्रथमः २६६६ ॥.—2) A1 adds here: सिद्धिरस्त्वेव राजानकरत्नकण्ठेन.—3) A3 भाविनः.

# ॥ सप्तमस्तरङ्गः ॥

मातुस्तेजसि निर्मले[1] पितृकुले श्लाघ्या तनुर्वेधसा त्वं संध्याहितसंनिधिर्मम जपारक्तेऽधरे खेलसि ।
संध्यावन्दनसाभ्यसूयगिरिजास्तुत्येव शीर्षाङ्कलैर्यः संध्यामपि वन्दते स्म स जगत्प्रीणातु गौरीश्वरः ॥ १॥

क्षमां[1] क्षमापतिर्बिभ्रन्मनसा च भुजेन च । गाम्भीर्येण च शक्त्या च सोऽजयद्वाहिनीपतीन्[2] ॥२॥

जज्ञे राज्ञीक्षये भङ्गो यैस्तुङ्गस्य तदाखिलैः । दिनश्रीविगमे संध्याप्रसङ्गस्येव रागिणः ॥३॥

तत्तत्प्रतिभटाटोपस्फोटनात्प्रत्युतास्य तैः । उदयो ददृशे शश्वद्गतिं को वेत्ति वेधसः ॥४॥ युग्मम् ॥

नृपेण जातशातेयः शूरः शक्तिसमन्वितः । सर्वाधिकारयोग्योऽगा[1]त्तदा चन्द्राकरः क्षयम् ॥५॥

अन्ये भीमतिकाग्रामदिविरस्योरुसंपदः । पुण्याकरस्य तनयाः शूराः शान्तिं प्रपेदिरे ॥६॥

समर्थमन्त्रिविरहादनिच्छन्नपि वेधसा । निन्ये गत्यन्तरत्यक्तस्तुङ्गपक्षं क्षमापतिः ॥७॥

संग्रामराजतुङ्गादीन्देवी कोशमपाययत्[1] । मुमूर्षन्ती पुरा स्थातुमद्रोहेणेतरेतरम् ॥८॥

क्लेशासहो महीपालस्ततः कार्यवशादपि । तुङ्गन्यस्तप्रजाकार्यो भोगाभ्यासालसोऽभवत् ॥९॥

पर्याप्तं तस्य भीरुत्वं कियदन्यदकाश्यताम् । असमैर्यौनसंबन्धैश्चक्षमे यशसः क्षतिम् ॥१०॥

साहायकार्थी यस्माद्राष्ट्रीशौर्यादिमते सुताम् । दिद्दामठाधिपतये प्रेमनाम्ने स लोठिकाम् ॥११॥

क्व लोकोद्वहनोत्सङ्गभूभृद्योग्या नृपात्मजा । प्रतिग्रहजलक्लिन्नपाणिः क्वाल्पमना द्विजः ॥१२॥

अथ तुङ्गादिभङ्गाय प्रायं ब्राह्मणमन्त्रिणः । परिहासपुरे विप्रपारिषद्यानकारयन् ॥१३॥

विप्रमन्त्रिमतैक्येन कृतो राज्ञः स विप्लवः । दुःसहः पवमानाग्निसमागमसमोऽभवत् ॥१४॥

राज्ञोऽप्युत्पाटने सज्जैः कथंचित्प्रार्थितै[1]र्द्विजैः । मतिः क्षान्तिपरप्राये[2] तुङ्गनिःसारणे कृता ॥१५॥

राज्ञा[1] तुङ्गादिभिश्चैतं[2] यावत्तेभ्यः प्रतिश्रुतम् । अन्यत्प्रार्थयितुं लग्नास्तावत्ते शठबुद्धयः ॥१६॥

तुङ्गास्कन्देन विप्रोऽयं[1] यो मृतस्तद्गृहे[2] वयम् । तं निर्दहाम इत्युक्त्वा शवः कोऽप्यरघट्टतः ॥१७॥

तैरुद्धृत्य यदानीतः शठैस्तुङ्गगृहान्प्रति । केशहोमाच्च विहिताथो कृत्योत्थापिताभवत् ॥१८॥

तया प्रतीपपातिन्या निःशौचानां द्विजन्मनाम् । अकस्माच्चिरगाच्छस्त्रं विनाशायोत्थिते कलौ ॥१९॥ तिलकम्॥

ततः पलायिता विप्रा यस्तेषां मन्त्रदोऽभवत् । निगूढं राजकलत्रास्तद्वेश्म प्राविशन्भयात् ॥२०॥

स व्यक्तीभूतकौटिल्यः संग्रामं सुचिरं व्यधात् । अपद्वारैस्तु ते विप्राः पलाय्य स्वगृहान्ययुः ॥२१॥

---

१. [1]) $A_3$ निर्मिते. २. [1]) $A_3$ gloss भुवं क्षान्तिं च.—[2]) $A_3$ gloss सेनापतीन् समुद्रांश्च. ५. [1]) गा supplied by $A_3$. ८. [1]) $A_3$ gloss कोशं । दिव्यं । अपाययत् अकारयत् । पीतकोशान् कृतवती इत्यर्थः. १५. [1]) Thus corr. by $A_3$ from $A_1$ प्रार्थितो.—[2]) $A_3$ °प्रायैस्तु°. १६. [1]) Thus corr. by $A_3$ from $A_1$ राज्ञस्तु°.—[2]) $A_3$ gloss निःसारणं. १७. [1]) यं supplied by $A_3$.—[2]) $A_4$ gloss तुङ्गगृहे.

निर्जिते राजकलशे समकार्या द्विजातयः । मन्त्रिणः श्रीधरसुताः समागत्य व्यधुर्मृधम् ॥२२॥
ते कृत्वा सुमहत्कर्म समासिं समरे गताः । निर्भिद्य मण्डलं सप्त सप्तसप्तेर्द्रुतं ययुः ॥२३॥
जितः सुगन्धिसीहेन[1] तेषु शान्तेषु संयुगे । बद्ध्वा राजकलशस्तुङ्गेनानायितो गृहम् ॥२४॥
नीयमानोधिरोप्याशु स्कन्धं मार्गेषु विक्षतः । तुङ्गस्य युग्यवाहैः स नर्तितोपहतायुधः ॥२५॥
अन्योपि भूतिकलशो नाम मन्त्री विनिर्जितः । सुतेन राजकाख्येन सह भूरमठं ययौ ॥२६॥
क्रमात्सुगन्धिसीहाद्यैर्मुक्तः करुणया ततः । सपुत्रः सोवमानाभितप्तो देशान्तरं ययौ ॥२७॥
परिहासपुरादेवं जातो यो देशविप्लवः । स दैवयोगात्तुङ्गस्य शुभाय प्रत्युताभवत् ॥२८॥
ततः प्रसादिते राज्ञि गुणदेवेन मन्त्रिणा । आययौ भूतिकलशः कृतगङ्गानिमज्जनः ॥२९॥
पुनर्नृपगृहे तस्मिन्किंचिल्लब्धपदे शनैः । तुङ्गं निहन्तुं राज्ञैनं गूढं दूताः प्रयोजिताः ॥३०॥
ज्ञातवार्तेन तुङ्गेन तस्मिन्नर्थे प्रकाशिते । सपुत्रो भूतिकलशो राज्ञा निर्वासितः पुनः ॥३१॥
अवष्टम्भं मनाग्लेभे चन्द्राकरसुतः शनैः । यो मध्यामन्तकः सोपि तस्मिन्काले व्यपद्यत ॥३२॥
भूत्वा किंचित्क्षणं भूभृत्कन्यासंभोगभाजनम् । राजोपकारकृच्छ्रीमान्प्रेमापि प्रमयं ययौ ॥३३॥
विपेदिरेन्ये गङ्गायाः सर्वेपि नृपतिप्रियाः । अवाशिष्यत भोगाय तुङ्गः सभ्रातृकः परम् ॥३४॥
इति यो यो हि वृत्तान्तस्तस्य नाशाय शङ्कितः । स स दैवानुकूल्येन प्रत्युतोद्रेचकोभवत् ॥३५॥
कालक्रमत्रुटितसंश्रयभूः स्वमूलमात्राश्रयी तटतरुः सरितोम्बुपूरैः[1] ।
यैः शङ्क्यते निपततीति विशीर्णमृद्भिस्तैरेव तस्य हि भवेत्स्थितिभूमिदार्ढ्यम् ॥३६॥
नीत्युज्ज्वलं व्यवहरन्प्रजाराधनतत्परः । प्राक्पुण्यसंक्षयात्तुङ्गः शनैस्त्वासीत्स्खलन्मतिः[1] ॥३७॥
यत्स्वभाग्यापहाराय हीनजन्मानमाददे । साहायकाय कायस्थं क्षुद्रं भद्रेश्वराभिधम् ॥३८॥
विड्वाणिज्यं[1] सौनिकत्वं काष्ठविक्रयितादि[2] च । आरामिकस्य यस्यासीत्कृत्यं वंशक्रमोचितम् ॥३९॥
कम्बलोद्घृष्टपृष्ठोथ भोजनार्थमवालगत्[1] । भस्त्रामषीभाण्डवाही यश्च पथाभियोगिनाम् ॥४०॥
अनन्तराजकार्यादिचिन्ताश्रान्तो विधाय तम् । तुङ्गः सहायं नाबुद्ध संसर्गाद्भाग्यसंक्षयम् ॥४१॥
धार्मिकं तेन धर्मार्कं विनिवार्यार्यचेतसम् । गृहकृत्याधिकारे[1] स दुष्कृती विनिवेशितः ॥४२॥
देवगोब्राह्मणानाथातिथिराजोपजीविनाम् । अकालमृत्युर्विदधे वृत्तिच्छेदं स दुर्मतिः ॥४३॥
शस्त्राजीवोपि पुष्णाति क्रूरः कापालिको निजान् । भद्रेश्वरस्तु पापोभूद्द्विजानामपि जीवहृत् ॥४४॥
तुङ्गेन चैत्रे सर्वत्र कृते भद्रेश्वरे प्रभौ । सुगन्धिसीहः प्रययावाषाढे मासि संक्षयम् ॥४५॥
परलोकं गते तस्मिन्सर्वभारसहेनुजे । तुङ्गश्छिन्नोत्समाक्रन्दं सदैन्योमन्यतात्मनः ॥४६॥
श्रीत्रिलोचनपालस्य शाहेः साहायकार्थिनः[1] । देशं ततो मार्गशीर्षे मासि तं[2] व्यसृजन्नृपः ॥४७॥
राजपुत्रमहामात्यसामन्तादिनिरन्तरम् । सैन्यं तमन्वगाद्भूरि भुवनक्षोभनक्षमम् ॥४८॥

२४. [1]) $A_4$ gloss तुङ्गानुजेन. ३६. [1]) $A_3$ gloss वृक्षिकरः. ३७. [1]) Thus emended with C; A R G °सीद्स्खल°. ३९. [1]) $A_2$ gloss गोमयविक्रयित्वं.—[2]) Thus corr. by $A_3$ from $A_1$ °कविकादि. ४०. [1]) The first half of this verse has been omitted by $A_1$ and supplied by $A_3$ in margin. ४२. [1]) Thus corr. by $A_3$ from $A_1$ °कारी. ४७. [1]) $A_4$ gloss तुरुष्कसमरे.—[2]) $A_4$ gloss तुङ्गं.

अथागतेन सहितः[1] शाहिना कृतसत्क्रियः । पञ्चषाणि दिनान्यासीत्तद्देशे स यशोन्मदः ॥४९॥

50 रणागरचरन्यासशस्त्राभ्यासाविलासिनः[1] । अभियोगोचिताः शाहिरपश्यंस्तं[2] तदाब्रवीत् ॥५०॥ युग्मम् ॥

तुरुष्कसमरे यावन्न यूयं कृतबुद्धयः । आलस्यविजयास्तावत्तिष्ठतास्मिन्गिरेस्तटे ॥५१॥

एवं त्रिलोचनेनोक्तं[1] सोमहीत हितं वचः । तस्थौ परं समं सैन्यैरुत्सेकादाहवोत्सुकः ॥५२॥

हम्मीरेण[1] तदा सैन्यं जिज्ञासार्थं विसर्जितम् । तौषीपारे[2] मितप्रायैस्ततस्तीर्त्वावधीद्बलैः ॥५३॥

ततस्तं[1]माहितोत्सेकमपि शाहिः पुनः पुनः । जगादाहवतत्त्वज्ञः पूर्वोक्तामेव संविदम् ॥५४॥

55 स तस्य नामहीद्वाक्यं रणौत्सुक्यवशंवदः । प्रत्यासन्नविनाशानामुपदेशो निरर्थकः ॥५५॥

प्रातस्ततः स्वयं कोपात्तुरुष्कानीकनायकः । सर्वाभिसारेणागच्छच्छलाहवविशारदः[1] ॥५६॥

अथ तुङ्गस्य कटकः सहसा भङ्गमाययौ । शाहिसैन्यं परं संख्ये ददृशे विचरत्क्षणम् ॥५७॥

शाहिसैन्ये गतेऽप्यासीज्जयसिंहः स्फुरद्रणे । श्रीवर्धनश्च सांग्रामिर्[1]विभ्रमार्कश्च डामरः ॥५८॥

घोरे तुरंगतुमुले प्रहरद्भिस्त्रिभिर्भटैः । वीरक्षेत्रे निजे देशे रक्षितस्तैर्यशःक्षयः ॥५९॥

60 कस्त्रिलोचनपालस्य माहात्म्यं वक्तुमीश्वरः । निःसंख्या अपि यं संख्ये न जेतुमशकन्द्विषः ॥६०॥

शुशुभे[1] रुधिरासारवर्षी युद्धे त्रिलोचनः । कल्पान्तदहनज्योतिर्विसारीव त्रिलोचनः ॥६१॥

स योधयित्वा संग्रामे कोटीः कक्कुटवाहिनाम् । एकाकी कार्यमर्मज्ञो निर्ययौ रिपुसंकटात् ॥६२॥

गते त्रिलोचने दूरमशेषं क्षितिमण्डलम् । प्रचण्डचण्डालचमूशलभच्छायमानशे ॥६३॥

संप्राप्तविजयोऽप्यासीन्न हम्मीरः समुच्छ्वसन् । श्रीत्रिलोचनपालस्य स्मरञ्शौर्यममानुषम् ॥६४॥

65 त्रिलोचनोऽपि संभित्य हास्तिकं स्वपदाच्युतः । सयत्नोऽभून्महोत्साहः प्रत्याहर्तुं जयश्रियम् ॥६५॥

यथा नामापि निर्नष्टं शीघ्रं शाहिश्रियस्तथा । इह प्रासङ्गिकत्वेन वर्णितं न सविस्तरम् ॥६६॥

स्वप्नेऽपि यदसंभाव्यं यत्र भग्ना मनोरथाः । हेलया तद्विदधतो नासाध्यं विद्यते विधेः ॥६७॥

ईषद्भूमिवैपुल्यं[1] राज्ञः शंकरवर्मणः । वृत्तान्तवर्णने पूर्वममुत्र प्रकटीकृतम् ॥६८॥

स शाहिदेशः सामात्यः सभूभृत्सपरिच्छदः । किमभूत्किमु वा नाभूदिति संचिन्त्यतेऽधुना ॥६९॥

70 अवतारं तुरुष्काणां दत्त्वाशेषे महीतले । प्राप्तभङ्गस्ततस्तुङ्गः स्वदेशं प्राविशच्छनैः ॥७०॥

सृगालायेव तुङ्गाय लब्धभङ्गाय भूपतिः । न तत्रागसि चुकोप स धैर्यसदृशाशयः ॥७१॥

किं तु खेदाय समभूत्तुङ्गायत्तत्वमीशितुः । परायत्ततया चित्तं पशोर[1]प्युपतप्यते ॥७२॥

तुङ्गात्मजोऽपि कन्दर्पसिंहः श्रीशौर्यगर्वितः । राजोचितं[1] व्यवहरंस्तस्योद्वेगप्रदोऽभवत् ॥७३॥

गूढलेखैः क्षणे तस्मिंश्छिद्रान्वेषी स भूभुजम्[1] । भ्राता विग्रहराजोऽपि प्रैरयत्तुङ्गमारणे ॥७४॥

75 कोशाविस्मरणाद्[1]राजा चिरं दोलायमानधीः । अभीक्ष्णप्रेरणोद्विग्नः प्रेरकानब्रवीत्ततः ॥७५॥

---

४९. 1) Thus $A_2$; $A_1$ स तथा. ५०. 1) र supplied by $A_2$ in space left by $A_1$.—2) Thus corr. by $A_2$ from $A_1$ °पश्यत्तं. ५२. 1) Thus corr. by $A_2$ from $A_1$ °ओत्काः. ५३. 1) Thus $A_1$; altered by later hand to हम्मी°; G as above.—2) Thus corr. by $A_2$ from $A_1$ °पारय; $A_2$ gloss तौषी नाम नदी. ५४. 1) स्त supplied by $A_2$. ५६. 1) Thus $A_2$; $A_1$ °रेणोद्गच्छ°. ५८. 1) Thus $A_2$, with gloss संग्रामस्यापत्यं साङ्ग्रामिः; $A_1$ सङ्ग्रामे. ६१. 1) Thus $A_2$; $A_1$ शिशुम°. ६८. 1) $A_2$ gloss अस्य देशस्य भूमेः वैपुल्यं. ७२. 1) पशोर supplied by $A_2$ in space left by $A_1$. ७३. 1) Emended: A राज्ञो°. ७४. 1) Thus $A_1$; altered by later hand to भूभुजाम् which is found also in G R. ७५. 1) $A_2$ gloss पूर्वं देव्या दीक्षकोशाः कृता इति स्मरणात्.

एकाकिनैव सपुत्रः स गोचरो नः कदाचन । पतेद्यदि क्षणे तस्मिन्पश्यामः किं विदध्महे ॥७६॥
अन्यथा ध्रुवमाक्षिप्तो हन्यादस्मानसौ बलात् । इति कालापहारार्थमुक्त्वाभूद्विरतो नृपः ॥७७॥
तावन्मात्रं वचो बीजभूतं हृदि निधाय ते । विधातुं तदवस्थत्वं तुङ्गस्यासन्कृतोद्यमाः ॥७८॥
षण्मासाभ्यन्तरे तुङ्गो भूपेनाकारितो गृहात्[1] । सपुत्रो निर्ययौ दृष्टदुःस्वप्नोपि विधेर्वशात् ॥७९॥
स प्रविश्य नृपास्थानं स्थित्वा राज्ञोग्रतः क्षणम् । पञ्चषैः सहितो भृत्यैः प्राविशन्मन्त्रमण्डपम् ॥८०॥ 80
पश्चात्प्रविष्टास्तत्रैनं पर्वशार्करकादयः । अनुक्त्वापि महीपालं तुङ्गं शस्त्रैरपातयन् ॥८१॥
मन्त्री महारथो नाम योभूच्छंकरवर्मणः । तद्वंश्यस्तुङ्गभृत्येषु श्लाघ्यः सिंहरथः परम् ॥८२॥
निःशस्त्रो यः क्षणे तस्मिन्परित्राणविधित्सया । हन्यमानस्य तुङ्गस्य पृष्ठे स्वं वपुरक्षिपत् ॥८३॥
तुङ्गस्य प्रथमाघाते रुद्धः[1] श्वासोभवद्भयात् । राजा तस्मिन्निरुच्छ्वासे सोच्छ्वासः समपद्यत ॥८४॥
आस्थानब्राह्मणस्यासीद्धर्मनाम्नः सुतोन्तिके । यः पापकारी तुङ्गस्य पार्थः कङ्कश्च दुर्मतिः ॥८५॥ 85
ताभ्यामाभुविरेकिभ्यां प्राणार्थं स्वाङ्गुलीर्मुखे । क्षिपद्भ्यां प्रभुरस्तत्र शस्त्रं त्रासवशाज्जहे ॥८६॥
अन्तरङ्गाश्च[1] चङ्गाद्या येभूवंस्तुङ्गमन्त्रिणः । तैः स्त्रीवदासितं तूष्णीं ग्रस्तैः शस्त्रान्वितैरपि ॥८७॥
अज्ञाततुङ्गमृत्युभ्यस्तुमुले तत्र भूपतिः । तद्भृत्येभ्यः शङ्कमानो वह्निदानाहवादिकम् ॥८८॥
आश्वासाय स्वभृत्यानां छित्त्वा खड्गेन सत्वरम् । पातयामास तुङ्गस्य सपुत्रस्य शिरो बहिः ॥८९॥
दृष्ट्वा स्वामिशिरश्छिन्नं सैन्ये दैन्यात्पलायिते । भृत्यतामुज्ज्वलीचक्रुः कतिचित्तुङ्गसेवकाः ॥९०॥ 90
भुजंगनामा सामन्तद्विजापत्यो गृहागतः । संग्रामराजं विदधे गेहाग्रेह पलायितम् ॥९१॥
हारं कनकदण्डेन भञ्जन्नर्गलितं ततः[1] । विंशतिं हतवान्योधान्स राजास्थानमण्डपे ॥९२॥
कोशाधिकारी त्रैलोक्यराजनामा हतो रणे । कथ्यामन्तकधात्रेयो वीरोप्यभिनवाभिधः ॥९३॥
अङ्गने त्रिंशदेकाङ्गा वीरास्तुङ्गोपजीविनः । श्रेणीं बबन्धुर्निहता निःश्रेणीं स्वर्गपद्धतेः ॥९४॥
संग्रामं पद्मराजाख्यः कृत्वापि[1] निःसृतो[2]क्षतः । स्वामिप्रमयदुःखाभितापं तीर्थाश्रयाज्जहौ ॥९५॥ 95
अन्ये लोकद्वयत्राणमितं शस्त्रं रणाङ्गने । संत्यजन्तो व्ययुज्यन्त यशसा जीवितेन च ॥९६॥
चन्द्राख्यः सुभटमन्यो देशिकश्चार्जुनाभिधः । हेलाचक्रो डामरश्च त्यक्तशस्त्राः परैर्हताः ॥९७॥
लोठिकाश्रयस्तुङ्गो लुण्ठितश्रीर्महीभुजा । आषाढभुक्तद्वादश्यां कथाशेषो व्यधीयत ॥९८॥
निर्द्रोहवृत्तौ भूभर्त्रा तुङ्गे सतनये हते । लब्धोदया व्यजृम्भन्त खलप्राया नृपास्पदे ॥९९॥
राज्ञो मनः कलुषयन्गूढपैशुनकर्मणा । यो भ्रातृभ्रातृसुतयोर्[1]विपत्तौ हेतुतां गतः ॥१००॥ 100
स दुष्प्रवादनिर्दग्धो नागो निजकुलान्तकः । तुङ्गभ्राता ततो राज्ञा कम्पनाधिपतिः कृतः ॥१०१॥ युगलकम्॥
भार्या कन्दर्पसिंहस्य क्षेमा परमतर्षिणी[1] । नागेन संगमं चक्रे रक्षसेवाभिलक्षणां[2] ॥१०२॥
प्रशान्ते तुमुले बिम्बा चतुर्भिर्दिवसैः सती । तुङ्गस्नुषा सुता शाहेः प्रविवेश हुताशनम् ॥१०३॥

---

७७. [1]) Thus corr. by $A_3$ from $A_1$ क्षणमा°. ७९. [1]) Thus corr. by $A_3$ from $A_1$ गृहात्. ८४. [1]) Emended; A R G रुद्धश्वासो°. ८७. [1]) च supplied by $A_3$ in space left by $A_1$. ९२. [1]) Thus corr. by $A_3$ from $A_1$ रक्षन्स्वैर्गलितं [illegible]. ९५. [1]) Thus corr. by $A_3$ from $A_1$ °ख्य कृत्वा.—[2]) $A_1$ निस्सृतो; $A_3$ निसृतो. १००. [1]) Thus corr. by $A_3$ from $A_1$ भ्रातृपुत्रसुत°. १०२. [1]) Emended; A °वर्षिणी.—[2]) $A_3$ gloss रक्षो हि राज्ञी चरति.

भम्मायामवरुद्धायां कन्दर्पो[1] यावजीजनत् । पुत्रं त्रिचित्रसिंहं च मातृसिंहं च विभुतौ ॥१०४॥

105 गृहीत्वा तौ स्नुषां तां च मल्लना तुक्कवल्लभा । देशाद्विनिर्गता दीना राजपुर्यां स्थितिं व्यधात् ॥१०५॥ युग्मम्[1]॥

तुङ्गस्थाने ततो राज्ञा पापो भद्रेश्वरः कृतः । भूतेश्वरादिदेवानां चक्रे कोशादिलुण्ठनम् ॥१०६॥

कियद्विवेकवैकल्यमस्य राज्ञः प्रकाश्यताम् । तादृशानपि यश्चक्रे पार्थादीनधिकारिणः ॥१०७॥

पार्थः परमदुर्मेधाः श्वपाको भ्रातृकलत्रगः । निर्विचारेण यस्तेन नगराधिकृतः कृतः ॥१०८॥

वधादिपापं पार्थेन सुकृतत्यक्तचेतसा । पवित्रे प्रवरेशस्य रङ्गपीठे प्रवर्तितम् ॥१०९॥

110 चक्रे लुब्धस्य भूभर्तुर्मतङ्गः[1] कृपणाग्रणीः । क्षिप्रोः सुतः कोशवृद्धिं प्रजापीडनपण्डितः ॥११०॥

पुरा देवमुखाख्यस्य डिम्बरस्य किलाजनि । आपूपिकायां वेश्यायां पुत्रश्चन्द्रमुखाभिधः ॥१११॥

वस्तुक्रोपाभयाल्लब्ध्वा लालितत्वं महीपतेः । वराटकात्प्रभृत्याशीत्कोटीनां कृतसंचयः ॥११२॥

विभूतिमध्ये लुब्धस्य प्राभृतायान्महीक्षितेः । अपूर्वैर्निजभृत्येषु विक्रयोऽभूत्कुलोचितः ॥११३॥

प्रभूताविररोगश्च भूत्वा लब्धोदयः पुनः । यो मन्दाभिः सरोगश्च निःशङ्कोऽकैर्व्यहस्यत ॥११४॥

115 एकमेवाभवत्तस्य सुकृतं मरणक्षणे । कोटेस्त्रिभागं यद्दाच्छूरिणेश्वरयोजने ॥११५॥

तदात्मजाः कृता नागभागनन्दिमुखास्त्रयः । अधीशाः पृतनाङ्गस्य राज्ञा तुङ्गोपजीविनः ॥११६॥

हास्यं बभूव भूभर्तुस्तेषां तुङ्गपदार्पणम्[1] । बन्धनं यवकाण्डीनां हेमस्थाने शिशोरिव ॥११७॥

ते तुरुष्काहवे राज्ञा तुङ्गसंप्रहिताः पुनः । प्रत्यावृत्य ययुर्देशं निजमेव पलायिताः ॥११८॥

इत्थं मन्त्रिष्वयोग्येषु क्षान्तिशीले च भूपतौ । केचिदुद्रेकमभजन्दर्पाद्वित्रा डामराः ॥११९॥

120 सा लोठिकामठं कृत्वा लोठिका नृपतेः सुता । निर्लोत्तमाया विदधे मातुर्नाम्नापरं मठम् ॥१२०॥

पापिनामपि हन्तेयं कापि सत्कर्मवासना । भद्रेश्वरोऽपि यच्चक्रे विहारं सुकृतोज्ज्वलम् ॥१२१॥

सत्यं विवेक्ता संग्रामराजो योऽन्याय्यतोऽर्जितम् । निजं तुङ्गणो द्रविणं प्रपामपि न निर्ममे ॥१२२॥

श्रीलेखा पार्थिववधूः श्रीयशोमङ्गलात्मजा । पत्यौ शिथिलसामर्थ्ये स्वैरिणीत्वमसेवत ॥१२३॥

सुतः सुगन्धिसिंहस्य जयलक्ष्म्यां[1] बभूव यः । वल्लभो निर्भरं देव्याः सोऽस्यास्त्रिभुवनोऽभवत् ॥१२४॥

125 स जयाकरगञ्जादिगञ्जसंघाततीक्ष्णधीः । कोशोपकारकृत्तस्या जारोऽप्यासीज्जयाकरः ॥१२५॥

मयग्रामीणगञ्जादिकर्त्री संचयतत्परा । साभूद्भर्तुः प्रसादेन सुभगा भूरिवैभवा ॥१२६॥

स चतुर्थसमाषाढप्रारम्भाहे महीपतिः । हरिराजाभिधं पुत्रमभिषिच्यास्तमाययौ ॥१२७॥

सुमनःसेवितः कुर्वन्नशेषाशाप्रकाशनम् । द्वादशाब्दः स सर्वस्य चैत्रोत्सव इवाभवत् ॥१२८॥

अमोघाज्ञेन तेनेमां निश्चौरां कुर्वता महीम् । पण्यवीथ्यां[1] निशीथिन्यां[2] निषिद्धा द्वारसंवृतिः ॥१२९॥

130 अचिरस्थायिनी राज्ञस्तस्याज्ञाचिन्तितोन्नतिः । वन्द्या नवेन्दुलेखेव पार्थिवानामजायत ॥१३०॥

---

१०४. ¹) $A_3$ gloss कन्दर्पसिंहः. १०५. ¹) युग्मम्. added by $A_3$. ११०. ¹) Emended with G C; A R तुमतुं सतङ्गः. १११. ¹) $A_3$ gloss कोपालिकार्थं. ११७. ¹) Thus $A_1$; $A_3$ °पदेर्पणम्. १२४. ¹) Thus corr. by $A_3$ from $A_1$ °लक्ष्मी. १२५-१२६. ¹) The words from गञ्जादिगञ्जसङ्घा° to मयग्रामीण in the following verse have been omitted by $A_1$ and supplied in margin by $A_3$; they are found in G R. १२८. ¹) $A_3$ gloss पण्डितैः पुष्पैश्च.—²) $A_3$ gloss आशाः दिशश्च.—³) $A_3$ gloss वैरस्यं तोषश्च. १२९. ¹) ²) Thus corr. by $A_3$ from $A_1$ पुण्यवेश्यां and निषीथिन्यां. १३०. ¹) Thus $A_3$; $A_1$ °ज्ञाचिन्त्यतोन्नतिः.

शार्विक्षानिकटाम्बुर्वां स रक्षित्वा क्ष्मापतिः । अस्तं ययौ शुचियशाः शुचिशुक्लाष्टमीदिने ॥१३१॥
प्राप्तिनां द्योतमानानां नक्षत्राणामिव क्षणात् । लक्ष्मीर्दीप्तमखपेवेयं संगता भङ्गदायिनी ॥१३२॥
समन्योः स्वैरिणीवृत्तिः सुतस्य जननी निजा । अभिचारं चकारास्येत्यविगाना जनश्रुतिः ॥१३३॥
राज्योपकरणे सज्जीकृते राज्यार्थिनी स्वयम् । सा राजमाता श्रीलेखा यावत्कालात्समागता ॥१३४॥
मिलितैस्तावदेकाङ्गैर्भ्रात्रा धात्रेयकेण च । सागराख्येन तत्पुत्रो बालोऽनन्तो नृपः कृतः ॥१३५॥ युग्मम् ॥ 135
निधिं जिघृक्षोरन्येन हृते तत्र प्रमापणम् । तद्रक्षिणो हेर्लुब्धस्य पापायैव यथा किल ॥१३६॥
राजमातुस्तथा राज्यलुब्धायाः पुत्रनाशनम् । अभूदन्यहृते राज्ये वृजिनायैव केवलम् ॥१३७॥ युग्मम् ॥
सा राज्यविप्रलम्भेन तादृशा व्यथिताशया । व्यस्मरत्तनयस्नेहं धिग्भोगाभ्यासवासनाम् ॥१३८॥
अथाजगाम स्थविरः पितृव्यो बालभूपतेः । राज्यं विग्रहराजाख्यो हर्तुं विततविक्रमः ॥१३९॥
स लोहरात्प्रचलितो दग्ध्वा द्वारमतर्कितः । दिनद्वयेन सार्धेन नगरं सत्वरोऽविशत् ॥१४०॥ 140
श्रीलेखाप्रेरिताः सेनाः प्रविष्टं लोठिकामठम् । उद्दीपितालयस्तत्र निजघ्नुस्तं सहानुगम् ॥१४१॥
मठद्वयं ततः कृत्वा स्वस्य भर्तुः सुतस्य च । तस्थौ व्ययवती राज्ञी राज्यद्रोहोद्यतानिशम् ॥१४२॥
ततो नरपतिः किंचिच्छनैः शिथिलशैशवः । अतिव्ययादिव्यसनी गर्भेश्वरतयाभवत् ॥१४३॥
तस्यास्तद्रुद्रपालाद्याः शाहिपुत्राः परं प्रियाः । अनल्पवेतनादाने राज्यस्वस्यापहारिणः ॥१४४॥
कृतप्रत्यहनिर्वाहः सार्धलक्षेण भूभुजा । रुद्रपालो दरिद्रत्वं कदाचिदपि नात्यजत् ॥१४५॥ 145
दिद्दापालः क्ष्मापाललब्धया प्रतिवासरम् । सहस्राणामशीत्यापि शेते स्म न सुखं निशि ॥१४६॥
अनङ्गपालवेतालश्चक्रे क्ष्मापाललालितः । शश्वत्सुवर्णगीर्वाणप्रतिमापाटने मनः ॥१४७॥
रुद्रपालः परित्राता धनप्राणादिहारिणाम् । बभूव चौरचण्डालप्रायाणां वज्रपञ्जरः ॥१४८॥
कायस्था रुद्रपालाद्याः प्रजानां पीडनं व्यधुः । चकारान्धमठं श्रीमानुत्पलाख्यो वरमणीः ॥१४९॥
कियद्रुद्रपालश्लाघ्यमन्यत्तस्याभिधीयताम् । जालन्धराधिपस्येन्दुचन्द्रस्येन्दुमुखीं सुताम् ॥१५०॥ 150
उपयेमे मनोज्ञत्वाज्ज्येष्ठामासमतिं स्वयम् । यया मठः स्वाभिधया विदधे त्रिपुरेश्वरे ॥१५१॥
तस्याः किंचिद्वयोन्यूनां स्वसारं यो यवीयसीम् । अथ सूर्यमतीं देवीं भूभुजे परिणीतवान् ॥१५२॥
रुद्रेण भूपतिः सख्या स कर्णसुखदायिना । पात्रीकृतो दुर्नयानां कर्णेनेव सुयोधनः ॥१५३॥
कम्पनाधिपतिस्तत्र क्षणे त्रिभुवनो बली । आययौ भूपतेर्हर्तुं राज्यं संभृतडामरः ॥१५४॥
आकृष्टाशेषकटके तस्मिन्योद्धुमुपागते । एकाङ्गाः सहयारोहा राजपक्षं न तत्यजुः ॥१५५॥ 155
असिना लङ्घयन्प्रासानमोघाश्लाघ्यविक्रमः । प्रजहारानन्तदेवः स्वयं त्रिभुवनं रणे ॥१५६॥
संनाहरक्षिताङ्गः स दृढप्रहतिपीडितः । विदद्रौ वदनेनासृक्स्रवमतापमिवोद्वमन् ॥१५७॥
त्रिनवच्छत्रशौटीर्यैः शिशुप्रायः स भूपतिः । दृष्ट्वा बलमसंभाव्यं तस्मिंस्त्यक्त्वा रणं गते ॥१५८॥

१३३. ¹) स्वविगाना supplied by $A_3$ in space left by $A_1$. १३५. ¹) $A_4$ gloss तस्या अपरः पुत्रः. १३६. ¹) Thus $A_2$; $A_1$ हतं १३९. ¹) Thus A R; G C हन्तुं. १४१. ¹) Thus corr. by $A_3$ from $A_1$ प्रविष्टो. १४७. ¹) Thus corr. by $A_3$ from $A_1$ °मापटले. १५०. ¹) च supplied by $A_2$. १५१. ¹) मास supplied by $A_3$ in space left by $A_1$. १५२. ¹) Thus $A_1$; $A_3$ किंचिदिव. १५७. ¹) $A_3$ gloss वमन्. १५८. ¹) $A_3$ gloss शौटीर्यं अभिमानः प्रागल्भ्यं वा.—²) $A_3$ gloss शिशुसदृशः.

शमालाडामरं भक्तं प्राग्वैरमभिनवाभिधम् । शालास्थले व्यधात्क्ष्माभृद्विक्रमो मोघविक्रमम्[1] ॥१५९॥

160 मांसासृग्वेष्टनायष्टीभूतखड्गो भ्रमन्रणे । भुवनक्षोभकृदभूद्वैरयोनन्तभूपतिः ॥१६०॥

पश्यन्प्रहारलूनाङ्गानेकाङ्गान्स पदे पदे । निवेद्यमानानग्रस्थैर्नामग्रहणपूर्वकम् ॥१६१॥

क्षितिभृज्जातदाक्षिण्यो विलब्धिस्थावरे ततः । चाम्पल्यमक्षपटलादेकाङ्गानां न्यवारयत् ॥१६२॥ युग्मम्[1] ॥

एवं तत्र कृतज्ञेन भृत्येभ्यः प्रतिपादिता । विलब्धिस्तेन दीन्नारकोटिषण्णवतिः क्रमात् ॥१६३॥

राज्ञो रणाभिवृत्तस्य दुग्धसेकैः करात्सरुः । स्थिरग्रहदृढः कृष्टश्चिरेणेति जनश्रुतिः ॥१६४॥

165 अहो महत्त्वं भूभर्तुर्दीनो देशान्तरागतः । तावत्त्रिभुवनो येन संविभेजे विमन्युना ॥१६५॥

महाराजाभिधस्तेन बन्धुर्गञ्जाधिपः कृतः[1] । रुद्रपालकृतद्वेषो विरक्तश्चलितो ययौ ॥१६६॥

सप्तभिर्म्लेच्छभूपालैः समं मिलितडामरः । तेनानीतो[1] दरद्राजो यत्नाच्चलमङ्गलः[2] ॥१६७॥

क्षीरपृष्ठाभिधं[1] ग्रामं प्राप्तस्य समरोत्सुकः । तस्याग्रं विक्रमोदग्रो रुद्रपालो विनिर्ययौ ॥१६८॥

श्वो व्यवस्थापिते युद्धे सैन्याभ्यां दरदीश्वरः । क्रीडन्पिण्डारकाख्यस्य नागस्य भवनं ययौ ॥१६९॥

170 दुर्नयाचरणात्तत्र पार्श्वस्थैर्वारितोपि सः । प्लवमानस्य मत्स्यस्य गात्रे कुन्तमपातयत् ॥१७०॥

अथोज्जगाम गोमायुवपुः कुण्डाद्भुजंगमः । स च तं मृगयौत्सुक्यादधावद्दरदीश्वरः ॥१७१॥

तमापतन्तमालोक्य व्यवस्थोन्मूलनं विदत्[1] । आस्कन्दाशङ्कि भूभर्तुः सैन्यं युद्धाय निर्ययौ ॥१७२॥

अभूत्ततोस्त्रसंघर्षसंजातानलसंहतिः । कृतस्वर्गाङ्गनोद्वाहो वीराणां समरोत्सवः ॥१७३॥

तस्मिन्महाभटाटोपे शिरश्छिन्नं दरत्पतेः । रुद्रस्य रौद्रमहसः संप्ररूढं यशः पुनः ॥१७४॥

175 समरे वधबन्धादि म्लेच्छराजाः प्रपेदिरे । संप्राप हेमरत्नादि पुनः कश्मीरभूपतिः ॥१७५॥

उत्तंस[1]मुक्ताद्योताम्भःक्षालिताग्रझलज्झलम्[2] । रुद्रपालो दरद्राजशिरो भर्तुरुपानयत्[3] ॥१७६॥

भ्रात्रोदयनवत्सेन कृतमायैस्तथा द्विजैः । बह्व्यश्चैवंविधास्तस्य बभूवुरवदालिकाः ॥१७७॥

रुद्रपाले ततो लूतामयेन प्रलयं गते । अन्येपि शाहितनयाः क्षिप्रमेव क्षयं ययुः ॥१७८॥

पालखेदान्ध्यविगमे शुद्धाशयजुषोभवत् । देवी सूर्यमती भर्तुर्दर्पणस्येव बिम्बिता ॥१७९॥

180 सुभटापरनामा सा गौरीश्वरविधायिनी । पुण्यं वितस्तापुलिने निर्ममे सुभटामठम् ॥१८०॥

गोहेमहयरत्नादिप्रदानैः सुबहून्द्विजान् । सदाशिवप्रतिष्ठायामदरिद्रांश्चकार सा ॥१८१॥

आशाचन्द्रापराख्यस्य कल्लनस्यानुजन्मनः । नाम्ना व्यधापि वात्सल्यात्साग्रहारो मठस्तया ॥१८२॥

सिल्लनाख्यस्य च भ्रातुर्भर्तुश्चाभिधया सती । मठौ चाकारयत्पार्श्वे विजयेशामरेशयोः ॥१८३॥

अष्टोत्तरं चाग्रहारशतं श्रीविजयेश्वरे । ब्राह्मणेभ्यो महापुण्यं विद्वद्भ्यः प्रत्यपादयत् ॥१८४॥

185 पत्युर्नाम्नाप्यग्रहारान्प्रददावमरेश्वरे । त्रिशूलबाणलिङ्गादिप्रतिष्ठाश्च विनिर्ममे ॥१८५॥

---

१५९. 1) Thus corr. by $A_2$ from $A_1$ मोघविक्रमम्. १६२. 1) Supplied by $A_2$. १६६. 1) Emended with G C, A कृपः. १६७. 1) $A_2$ gloss महाराजेन.—2) चलमङ्गलः supplied by $A_2$ in space left by $A_1$; $A_2$ gloss नाम. १६८. 1) Thus $A_1$, $A_2$ क्षीरपृष्ठा°, with gloss क्षीरोट् इति ग्राम क्रमराज्ये. १७२. 1) Emended; A विदन. १७६. 1) $A_2$ gloss उत्तंसभूताः या मुक्ता मुक्तामणयः तासां यो द्योतः दीप्तिः स एवाम्भः तेन क्षालिता अग्रस्य रुधिरस्य झलज्झलाकाचकच्यं प्रकाशः स्फार इति यावत् यस्य तत् इति शिरोविशेषणं । झलज्झला तु शोभायामिति कोशः मुक्ताफलदीप्तिभिः शुद्धस्वाम्भस्त्वेन रूपणम् । जलस्य हि शुद्धं रूपमिति वैशेषिकाः ॥.—2) Thus corr. by $A_2$ from $A_1$ झलज्झलम्.—3) Thus corr. by $A_2$ from $A_1$ °रुपायनम्. १७७. 1) Thus $A_2$; $A_1$ मथा ह्येवं°

दंपती राजराजाख्ये मृते पुत्रे प्रचक्रतुः । सदाशिवान्तिके राजवेश्म संत्यज्य तौ स्थितिम् ॥१८६॥
ततः प्रभृति सत्यज्य पूर्वराजकुलस्थितिम् । तत्रैव रूढ्या भूपालास्तत्रैव वसतीर्व्यधुः ॥१८७॥
पार्थिवस्याश्वशालीयाः प्रियत्वाजितया प्रियाः । प्रसादैर्देशलुण्ठ्या च सर्वतः समतां ययुः ॥१८८॥
धर्मेश्वरतया भर्तुर्वल्लभो नर्मकोविदः । अलुण्ठयत्प्रजा नित्यं डल्लको नाम दैशिकः ॥१८९॥
मालवाधिपतिर्भोजः प्रहितैः स्वर्णसंचयैः । अकारयद्येन कुण्डयोजनं कपटेश्वरे ॥१९०॥ 190
प्रतिज्ञा भोजराजेन पापसूदनतीर्थजैः । सततं वदनस्नाने या तोयैर्विहिताभवत् ॥१९१॥
अपूरयत्तस्य यस्तां दुस्तरां नियमादितः । प्रहितैः काचकलशीकुलैस्तद्वारिपूरितैः ॥१९२॥
स तस्य पद्मराजाख्यः पर्णप्राप्तिकदैशिकः । प्रियताम्बूलशीलस्य त्यागिनो वल्लभोभवत् ॥१९३॥ चक्कलकम् ॥
तेन नागरखण्डादिपर्णविक्रयिणा नृपः । देशोत्पत्तिधनं प्रायो निःशेषं दापितस्तदा ॥१९४॥
पञ्चचन्द्रकशोभाङ्कमौलिसिंहासनं नृपात् । बन्धायादत्त लब्धव्ये धने स धनिकोधिके ॥१९५॥ 195
तद्राजचिह्नमास्थानोपयुक्तं तस्य मन्दिरात् । आनीयमानं मासार्धवासरे मासि मास्यभूत् ॥१९६॥
स्वकोशसंचयं दत्त्वा देवी सूर्यमती ततः । पद्मराजोद्धृतां देशस्याव्यवस्थां न्यवारयत् ॥१९७॥
शमिते चाश्वशालीयडल्लकादिभये तदा । प्रावर्तन्त पुनर्देशे व्यवस्था निरुपद्रवाः ॥१९८॥
ततः प्रभृति राज्ञ्यैव राजकार्योद्यताभवत् । तस्थौ शौर्यकथां त्यक्त्वा राजा कार्यकरः पुनः ॥१९९॥
भर्तुर्नारीविधेयत्वं तस्या भर्तृजयस्तथा । निष्कलङ्केन शीलेन नान्योन्यं गर्ह्यतामगात् ॥२००॥ 200
भवभक्तिव्रतस्नानत्यागशीलादिभिर्गुणैः । कृतिनानन्तदेवेन मुनयोपि विनिर्जिताः ॥२०१॥
राज्ये तस्य महीभर्तुर्दर्पि तांस्तानलङ्घयन् । पतिंवरेव राजश्रीर्भृत्याश्रवनतोन्मुखी ॥२०२॥
क्षेमाभिधो राजगञ्जपूरणं बालभञ्जकः । व्यधाद्वादशभागादिप्रकारैर्ढौकयन्धनम् ॥२०३॥
मन्त्री ततोभवत्साधुस्त्रैगर्तः केशवो द्विजः । सौधचन्द्रातपेनेव भूपालो येन भूषितः ॥२०४॥
भ्राम्यन्गतश्रीरेकाकी स एव ददृशे जनैः । भाग्याम्बुवाहतडितो निविडाः कस्य संपदः ॥२०५॥ युग्मम् ॥ 205
भाग्याधीनं धनं ध्यात्वा मुधा मुग्धधियामसौ । कुलविक्रमयोर्दर्पो मिथ्यैव पृथुनां प्रति ॥२०६॥
प्रासादपालवैद्यस्य गौरीशत्रिदशालये । भूतेर्हल्लधरो वज्रो वराहश्चाभवन्सुताः ॥२०७॥
तेभ्यो हल्लधरः सूर्यमत्या विहितसेवनः । वृद्धिं दिने दिने गच्छंल्लेभे सर्वाधिकारिताम् ॥२०८॥
विधेयान्बुद्धियुक्तेन कुर्वतः क्षित्यनन्तरान् । सपत्नीकोभवत्तस्य मुखप्रेक्षी क्षमापतिः ॥२०९॥
क्षेमेण स्थविरं पूर्वं सपादाममुदग्रधीः । कर्मस्थानं स्फुटीचक्रे सर्वस्थानधुरंधरम् ॥२१०॥ 210
अभूद्दर्णकमूल्यादिलेखनं कनकस्य यत् । राजायत्तं जनस्यार्थसंचयानां प्रकाशकम् ॥२११॥
स तन्निवारयामास भाविनां भूभुजां विदन् । ज्ञानी संचितवित्तस्य दण्डाद्यायासकारिताम् ॥२१२॥

१८७. 1) Thus corr. by $A_2$ from $A_1$ रूढा. १८८. 1) Thus corr. by $A_2$ from $A_1$ °लुण्डा. १९०. 1) Thus corr. by later hand from $A_1$ °भौजैः. १९२. 1) $A_2$ gloss प्रतिज्ञां.—2) Thus corr. by later hand from $A_1$ प्रहिते काचक°.—3) $A_2$ gloss शेष इति भाषया. १९३. 1) $A_2$ gloss ग्रामविशेषः. १९५. 1) Thus corr. by later hand from $A_1$ °सनं. १९६. 1) र्ध supplied by $A_2$ in space left by $A_1$. २००. 1) Thus corr. by later hand from $A_1$ शीलेना.—2) Thus corr. by $A_2$ from $A_1$ गृह्यता°. २०१. 1) Thus corr. by $A_2$ from $A_1$ °त्याग°. २०३. 1) $A_2$ gloss नापितः. २०४. 1) Thus corr. by later hand from $A_1$ केशवो. २०७. 1) Thus $A_1$; $A_3$ भूतिर्ह°. २०९. 1) Thus $A_1$; $A_3$ °युक्तेन.—2) Thus corr. by $A_2$ from $A_1$ °न्तरम. २१०. 1) Thus $A_1$; $A_3$ सर्वकार्यधु°. २१२. 1) Thus $A_3$; $A_1$ ज्ञाने.

भर्त्सितानस्य शालीनां धनदारापहारिणः । कांश्चिद्व्यापाद्य स शमं निन्ये लोकस्य विप्लवम् ॥२१३॥
तदाद्यासहता भीतः कम्पस्वर्णैः सुरास्पदैः । शोभां मठाग्रहारैश्च वितस्तासिन्धुसंगमः ॥२१४॥
215 भ्रातरश्च सुताश्चास्य लक्ष्मीपरिचयोन्मदाः । द्विरदा इव न क्वापि दानप्रणयितां जहुः ॥२१५॥
तद्भ्रातृपुत्रो बिम्बाख्यः श्रीमान्वीरो वराहजः । द्वाराधिकारकार्यासीद्दानप्रलयवारिदः ॥२१६॥
स डामरकुलाकालमृत्युः स्वल्पानुगोऽभवन् । खशालये जहौ प्राणान्पलायनपराङ्मुखः ॥२१७॥
चम्पायां सालभूपालमुन्मूल्यानन्तभूपतिः । तत्सूनुजयी नव्यं धराधवमरोपयत् ॥२१८॥
मन्त्रभूम्येन शौर्येण परदेशेषु भूपतिः । हठप्रवेशान्विदधत्सोऽभूत्कृच्छ्रगतोऽसकृत् ॥२१९॥
220 तुक्कात्मजस्य कलशस्यारब्धो छिन्नसैनिकम् । अमोचयद्धलधरो युक्त्या वल्लापुरादमुम् ॥२२०॥
उरशां च प्रविष्टस्य वैरिरुद्धाध्वनो व्यधात् । कम्पनाधिपतिस्तस्य मार्गान्संशोध्य निर्गमम् ॥२२१॥
कालेनानन्तमहीभर्तुर्वैरिविग्रहसंकटे । साहसान्युदजृम्भन्त तानि तानि क्षणे क्षणे ॥२२२॥
राजेश्वरो द्वारपतिः श्रीमान्भद्रेश्वरात्मजः । डामरैः क्रमराज्यस्थैरन्येऽपि बहवो हताः ॥२२३॥
वीक्ष्य नीतिदृशा कार्यं भीत्या व्यवहरन्नपि । भृत्यतां निष्परिभवां को भुङ्क्ते नृपमन्दिरे ॥२२४॥
225 दुष्प्रवादास्पदीभूतो देव्या निविडसेवनात् । आशाचन्द्रादिभिः क्षुद्रैर्बद्धो हलधरोऽप्यभूत् ॥२२५॥
स राज्ञा हृतसर्वस्वो बन्धनक्लेशमन्वभूत् । भाग्यप्रभावे निःसारे सुखमेकान्ततः कुतः ॥२२६॥
नृपेण बन्धनात्त्यक्तं तं श्रीः प्रत्यागता पुनः । आलिलिङ्ग सितच्छत्रलज्जास्मितसितानना ॥२२७॥
स राज्ञ्याः प्रावृष इव प्रणयेन क्षणे क्षणे । कोपप्रसादमेघार्कपर्यायापातमन्वभूत् ॥२२८॥
ततः सरलचित्तस्य क्रमेण समपद्यत । भार्याजितत्वं भूभर्तुर्दुर्विपाकार्पणोन्मुखम् ॥२२९॥
230 अधिकारपरित्यागाद्दोषाननुशयावहान् । वदद्भिर्वार्यमाणोऽपि प्राज्ञैर्हलधरादिभिः ॥२३०॥
पत्न्या संप्रेरितः शश्वत्तनयस्नेहमुग्धया । पुत्राय कलशायाभूद्राज्यं दातुं समुद्यतः ॥२३१॥
यास्यत्यनुशयं राजन्नेवं त्वमपि कारितः । सज्जं तेन रणादित्यनाम्ना क्षत्ताभिषेचनम् ॥२३२॥
एकचत्वारिंशस्य वर्षस्य तनयः सिते । षष्ठेऽह्नि बाहुलस्याभूदभिषिक्तो महीभुजा ॥२३३॥
अथास्थाने रणादित्यो राजपुत्रान्निवेशयन् । चिन्तयन्राज्यमाहात्म्यं प्रतिपत्तिषु निष्ठुरः ॥२३४॥
235 अनन्तो राजपुत्रोऽयं देवेति कथयन्वचः । कृकाटिकान्यस्तहस्तः क्षितिपालं न्यवेदयत् ॥२३५॥
कुपितेन स भूभर्त्रा परिवृत्यावलोकितः । एवं कृतस्मितो व्यक्तं तमूचे नीतिनिष्ठुरः ॥२३६॥
इत्थं यत्र निवेद्यन्ते कान्यकुब्जादिभूभुजः । तत्रैव त्यक्तराज्यस्य कान्यास्तु प्रक्रिया तव ॥२३७॥
दिने दिने सानुशयो नियतं भविता भवान् । नाभिमानपरित्यागः कर्तुं शक्यो मुनेरपि ॥२३८॥
सुदूरदर्शिनां तत्र मन्त्रिणां हृदयंगमम् । राजा तस्य वचः श्रुत्वा प्रतिवाक्याक्षमोऽभवत् ॥२३९॥
240 दृष्ट्वान्येद्युर्नवं भूपं राजचक्रेण सेवितम् । नवेतरं च सहितं परिमेयैः परिच्छदैः ॥२४०॥

२१४ ¹) Thus corr. by A₃ from A₁ कश्चिस्व°; A₂ gloss क्रमात् देवीच्छनानां स्वर्णं येषां तैः. २१७. ¹) Thus corr. by A₃ from A₁ °भवम्.—²) Thus A₃; A₁ जहत्. २२०. ¹) तुक्का supplied by A₃ in space left by A₁. २२१. ¹) Thus corr. by A₃ from A₁ मार्गान्स°. २३२. ¹) सज्जं supplied by A₃ in space left by A₁.—²) A₂ gloss तत्तामन्तरेण रणादित्यनाम्ना क्षत्ता प्रतीहारः अभिषेचनं सज्जं कारित इत्यन्वयः कथं भूत एवंभूतो अपि. २३३. ¹) A₂ gloss कलशः.—²) Thus corr. by later hand from A₁ बह°; A₂ gloss कार्त्तिकस्य. २३४. ¹) च supplied by A₃.

धीमान्हलधरो युक्त्या कृतकालात्ययया नृपम् । एवं निर्भर्त्स्यैव लक्ष्मीं तं प्रत्याजीहरत्सुतः ॥२४१॥
विधाय निःसुखं सूनुं राज्यभारार्पणाद्विभुम् । कस्मात्त्वं सुखसापेक्षो न जिह्रेष्यत्र वार्धके ॥२४२॥
तत्स्वयं राजकार्याणां कार्यमुद्वहनं त्वया । अभून्यो यौवनाभोगैरयमस्तु सुतस्तव ॥२४३॥
इत्युक्त्वा स पुनर्भूपमधिकारमजिग्रहत् । चक्रे कलशदेवं च कलया युक्तिवञ्चितम् ॥२४४॥
पित्रोरेवान्तिके कुर्वन्नाहाराद्यपि संततम् । ततो बभूव कलशो नाममात्रमहीपतिः ॥२४५॥
सर्वास्थानाख्यपूजादिविधाने पार्थिवोज्झिते । पितुः सहायकल्पः स पौरोहित्यमिवाकरोत् ॥२४६॥
अनिमित्तप्रहृष्टानामनिमित्तानुतापिनाम् । न क्वापि चलचित्तानां तिरश्चामिव निश्चयः ॥२४७॥
दापयित्वा पतिं राज्यं निर्बन्धेनापि तावता । सूनौ बभूव यद्राज्ञी विप्रेमैवानुतापिनी ॥२४८॥
सेर्ष्या स्नुषाणामुत्कर्षं पार्थिवप्रमदोचितम् । वेषालंकरणादौ सा रूक्षचित्ता न चक्षमे ॥२४९॥
दासीकृत्यं तया पुत्रमहिष्यः कारिताः सदा । गृहोपलेपने याश्च वैमुख्यमदर्शयन् ॥२५०॥
पुत्रो विग्रहराजस्य क्षितिराजाभिधस्ततः । राज्ञः पितृव्यजो भ्राता कदाचित्पार्श्वमाययौ ॥२५१॥
तस्मै न्यवेदयत्खेदं स चित्तस्योपतापकम् । पुत्रे भुवनराजाख्ये राज्यलुब्धेतिविद्रुते ॥२५२॥
स हि तस्यात्मजो नीलपुरराज्यं समाश्रितः । तद्बलैः पितुरारब्धं विधातुं सोद्यमोभवत् ॥२५३॥
नाम भागवतानां च पूज्यानां स्वपितुर्व्यधात् । वस्तयज्ञोपवीतानां शुनामशुचिमानसः ॥२५४॥
क्षितिराजः स्वबन्धौ च विरुद्धायां विशुद्धधीः । मनस्तापापहे चक्रे सर्वत्यागामृते स्पृहाम् ॥२५५॥
राज्यं कलशपुत्राय ज्येष्ठानन्तरजन्मने । रामलेखाभिधानायां राज्ञ्यां जाताय सत्वरम् ॥२५६॥
दत्त्वा स्तनंधयायापि तदोत्कर्षाभिधाय सः । राजर्षिर्विबुधैः सार्धं विदधे तीर्थसेवनम् ॥२५७॥
भुक्त्वा शमसुखं भूरीन्वर्षान्परमवैष्णवः । स चक्रायुधसायुज्यं ययौ चक्रधरे सुधीः ॥२५८॥
सं च भोजनरेन्द्रश्च दानोत्कर्षेण विश्रुतौ । सूरी तस्मिन्क्षणे तुल्यं द्वावास्तां कविबान्धवौ ॥२५९॥
पितुः पितृव्यजाद्भ्रातुर्जातस्यानन्तभूभुजा । तन्वङ्गराजस्योत्सङ्गे नप्ता न्यासीकृतः शिशुः ॥२६०॥
तन्वङ्गोऽपि विवृद्धिं तन्नीत्वा राष्ट्रं शिशुं च तम् । पुनः प्रविष्टः कश्मीरानस्तं चक्रधरे ययौ ॥२६१॥
सर्वसाधारणीभूतभोगानां राजबीजिनाम् । तावज्ज्ञातेयमभवन्नेह द्रोहकलङ्कितम् ॥२६२॥
इन्दुराजात्मजात्सिद्धराजो यो बुद्धराजतः । जातो मदनराजाख्यं वीरं पुत्रमजीजनत् ॥२६३॥
अत्युत्सिक्तः सुतस्तस्य दरंनृपतिमण्डलात् । विधुरे राज्ञि निर्यातः शौर्योद्रेकादखण्डितः ॥२६४॥
तदानीं जिन्दुराजाख्यो डामरोद्रेकखिन्नया । राज्ञ्या स्वयं गृहं नीत्वा सान्निध्यं ग्राहितोभवत् ॥२६५॥
काणः शोभाभिधस्तेन गाढोद्वेगावहः प्रभोः । देग्रामस्थो डामरोऽथ दत्त्वास्कन्दं निपातितः ॥२६६॥

२४८. 1) $A_2$ gloss विप्रेमा निःस्नेहा; $A_3$ विप्रमेवानुतापिनी इत्यन्यादर्शे. २४९. 1) क्ष: supplied by $A_3$ in space left by $A_1$. २५३. 1) Thus $A_1$; $A_3$ नीलपूरराजं.—2) Thus corr. by $A_3$ from $A_1$ °रारब्धि; $A_3$ gloss आस्कन्दं. २५४. 1) वस्त supplied by $A_3$ in space left by $A_1$. २५६. 1) $A_4$ gloss कलशदेवस्य द्वौ पुत्रौ ज्येष्ठो हर्षदेव एकः कनिष्ठ उत्कर्षो द्वितीयः. २५९. 1) $A_4$ gloss अनन्तदेवः.—2) $A_4$ gloss भोजराजश्च. २६०. 1) $A_4$ gives in margin a genealogical list showing the descendants of the brothers उदयराज and कान्तिराज: उदयराज, संग्रामदेव, अनन्तदेव, कलश, and कान्तिराज, जस्सराज, तन्वङ्ग.—$A_4$ gloss (to पितुः) संग्रामदेवस्य.—2) $A_4$ gloss कान्तिराजपुत्रजस्सराजात्.—3) $A_4$ gloss तन्वङ्गस्य.—4) Thus corr. by $A_3$ from $A_1$ तन्वयाज°.—5) $A_4$ gloss पौत्र उत्कर्षः. २६४. 1) Thus corr. by $A_3$ from $A_1$ इत्यु°.—2) $A_2$ दूरं नृपती इत्यन्यादर्शे. २६५. 1) Thus $A_1$; $A_3$ गत्वा. २६६. 1) $A_3$ gloss देवग्रामो इति भाषया.

कम्पनाधिपतां दत्त्वा ततस्तस्य प्रतापिनः । पार्थिवो राजपुर्यादीन्देशांश्चक्रे करप्रदान् ॥२६७॥
अनन्तभूभुजो राज्ये तत्तत्स्खलितसंकटे । आलम्बयष्टिप्रतिमो ययौ हलधरः क्षयम् ॥२६८॥
मुमूर्षुणा चक्रधरे तेन पार्श्वस्थितो नृपः । सजानिरुपदेशार्थी स तदेत्थमकथ्यत ॥२६९॥
270 मा कार्ष्ट परराष्ट्रेषु रभसादधिसाहसम् । युक्त्या वल्लापुरादौ वो व्यपोढं व्यसनं मया ॥२७०॥
विशङ्क्यो जिन्दुराजोयं परार्ध्यां वृद्धिमागतः । भेदं वः सह पुत्रेण[1] जयानन्दो[2] विधास्यति ॥२७१॥
कथितं तेन तत्स्मृत्वा जिन्दुराजं महौजसम् । विज्ञेनाबन्धयद्राजा युक्तिमांस्त्याजितायुधम् ॥२७२॥
अथ कालेन कलशक्ष्माभृत्कलुषिताशयः । भृत्यैरसाधुसंसेव्ये प्रसक्तिं प्रापितोध्वनि ॥२७३॥
तस्याभवन्विज्जपित्थराजपाजादयः प्रियाः । उत्सेकदा राजपुत्राश्चत्वारः शाहिवंशजाः ॥२७४॥
275 पुत्रो गङ्गपतेर्नागनाम्नो[1] निकटसेवकः । सोपि तस्य जयानन्दः कौटिल्याध्यापकोभवत् ॥२७५॥
द्विजेन्द्रेमरकण्ठे तु याते शिवसमानताम् । राजा प्रमदकण्ठस्य ययौ तज्ज्ञस्य शिष्यताम् ॥२७६॥
दुःशीलस्य प्रकृत्यैव तस्याकृत्योपदेशकृत् । गम्यागम्यविचारस्य परिहर्ताभवद्गुरुः ॥२७७॥
गुरोर्गतविकल्पत्वं तस्यान्यत्किमिवोच्यताम् । त्यक्तशङ्कः प्रववृते स्वसुतासुरतेपि यः ॥२७८॥
महासमयसंचारचतुरैर्यैरभीतितः । गण्यते स्वप्रभावोग्रैर्भैरवोपि न निर्भयैः ॥२७९॥
280 ते भट्टपादास्त्रासेन पतिता भग्नजानवः । बिडालवणिजा स्वस्याः शिरोहस्तार्पणैः कृताः ॥२८०॥
पुरा कृष्णबिडालाङ्को वणिक्कश्चिदिहाभिधाम् । बिडालवणिगित्यात्मनामविस्मारिकां दधे ॥२८१॥
यो व्याजमूर्खो वैद्यत्वगुरुत्वार्हकृतः क्रमात् । पदकृद्रजकादीनां शिल्पिनां गुरुतामगात् ॥२८२॥
स भट्टपादानुल्लाघांश्चक्रे मूर्ध्न्यधिरोपयन् । श्रेष्ठी बिडालविष्ठौघहिङ्गुगन्धोत्कटं करम् ॥२८३॥
एवं प्रकृतिनिःसारैरपि गर्जद्भिरन्वहम् । आन्ध्यं स गुरुभिर्निन्ये दिवसोम्बुधरैरिव ॥२८४॥
285 ये दीर्घजागरा रात्रौ भुग्मिभोजनसेविनः । अजीर्णपिशितोद्गारनिन्द्यदुर्गन्धकन्धराः ॥२८५॥
अवस्करप्रणालाभाः पृष्ठे क्षिप्रमधःपथैः । शौचपाय इव क्षिप्रमुज्झन्ति मधुनिर्झरम् ॥२८६॥
नक्तमातोद्यवाद्यज्ञैस्तैः सार्धं कृतसेवनः । चारणो वेणुवाद्यज्ञो योषितां धर्षयन्हठात् ॥२८७॥
कनकाख्ये मठाग्रामे क्रुद्धे हलधरात्मजे । स्तम्भे निबद्ध्य तद्भृत्यैश्छिन्ननासो व्यधीयत ॥२८८॥
यो विटश्चमको नाम लूनाङ्गोमङ्गुलाद्वहः । शनैर्लेभे स वाल्लभ्यं कौहुन्यान्नवभूपतेः ॥२८९॥
290 प्रसादवित्तो भूभर्तुरन्तरे मन्त्रिणामपि । लब्धप्रतिष्ठः स प्राप ठक्कुराख्यां नृकुक्कुरः ॥२९०॥
प्रथां प्राप्तस्त्रपाहेतुं स भञ्जन्वंशमञ्जसा । प्रागेव नासावंशस्य भञ्जनं बहमन्यत ॥२९१॥
तेनोद्दीपितदौःशील्यः स यच्चक्रे त्रपोज्झितः । अत्रान्यमपि वृत्तान्तं मध्यपातात्तदुच्यते ॥२९२॥
काञ्चनाख्या स्वसा राज्ञो नागाख्या च तदात्मजा । परदारप्रसक्तेन संभोक्तुं नात्रशोषिता ॥२९३॥

२६७. [1]) Thus corr. by $A_4$ from $A_1$ सपर्यो and °देशाश्चके —[2]) $A_3$ gloss राजपित्र. २७१. [1]) $A_4$ gloss कलशेन.—[2]) $A_4$ gloss अनन्तदेवगङ्गपतेर्नागनाम्नो भृत्यस्य पुत्रः. २७२. [1]) $A_4$ gloss हलधरेण. २७४. [1]) Emended; A R G °भवद्विज्ज°. २७५. [1]) $A_4$ gloss गुङ्गभ्रातु. २७६. [1]) Thus corr. by $A_3$ from $A_1$ तज्ज्ञमशि°. २७८. [1]) र supplied by $A_3$; $A_4$ gloss स्वा आत्मीया च्यासौ पुत्री तस्याः सुरते सम्भोगे. २७९. [1]) Thus $A_1$; $A_3$ निर्भयः. २८०. [1]) Thus corr. by $A_3$ from $A_1$ बिडाल°. २८१. [1]) Thus corr. by $A_3$ from $A_1$ बिडालनाम इत्या°. २८२. [1]) This verse has been omitted by $A_1$ and added in margin by $A_3$; found in R G. २८५. [1]) Thus $A_3$, $A_1$ °जागराश्चार्त्रौ. २८६. [1]) Thus corr. by $A_3$ from $A_1$ क्षिप्रम°. २८९. [1]) Thus corr. by $A_3$ from $A_1$ कौद°. २९१. [1]) Thus $A_3$; $A_1$ कथामासो पाहेतुं. २९२. [1]) Thus R G; A यश्चक्रे.

तमुद्धर्तुं तपस्वीको वुद्धवान्बुद्धभूपतिः । न सत्यमित्सीलपवा तस्थौ तु निभृतव्ययः ॥२९४॥
भिक्षकौ[1] धान्यमुष्टीनामोवर्वाणामणो द्विजः । योऽप्यभूद्रामदेवाख्यो वैधेयो लोष्टकाभिधः ॥२९५॥ 295
स ग्रामसेमपालस्य मठास्यस्यर्थठक्विधि । मलूनां मुष्टिमद्रान्नं विज्ञाप्यान्मुष्टिलोष्टकः ॥२९६॥
परां प्रसिद्धिं संप्राप्तो नवक्ष्मापस्य रागिणः । आसीद्दुह्लककोहम्बदेवस्ये रतिभिवः ॥२९७॥ तिलकम् ॥
भट्टारकमठाधीशः साधुर्व्योमशिवो जटी । कुर्कुटाख्याधिकरणे गृहीतनियतव्रतः ॥२९८॥
अन्धयान्धर्थिकान्नान्ननाटः स्वार्थनवेलकात् । अवन्तिपुरजं हस्तपादकहिंजबेलकम् ॥२९९॥
परिभ्रष्टमुपादत्त लालितस्तेन यं[1] पुरा । स तैर्न मारितापुस्तभङ्गाम्बनमयाम्बरः ॥३००॥ 300
विसृज्यमानः पुष्पाणि माहयित्वा नृपान्तिकम् ।[1] .................. ॥३०१॥
मदनो नाम वाचालः प्रपेदेऽस्यान्तरङ्गताम् । शनैः कौहम्बदुर्गोष्ठीमध्यपातं समाभवत् ॥३०२॥ चक्रकम् ॥
तैस्तैरेव विटैश्चाटुकारैः क्षिप्रविमोहितः । दोषानपि गुणान्मेने कलशः कलुषीकृतः ॥३०३॥
नर्म त्रपणकारि वाक्यमुचितं कृत्यं प्रजापीडनं तेजस्वित्वमलज्जता सरसता गम्याङ्गनासंगमः ।
सारल्यं खलपालिताभसहनं येषां न तत्संनिधौ किंचित्कर्म कुकर्म दोष इति वा हिंसाय संत्यज्यते ॥३०४॥
राजा चौर्यरतौत्सुक्यात्यतिवेहं परिभ्रमन् । स्वदारालिङ्गनैः प्रीतिं क्षणदासु न लब्धवान् ॥३०५॥ 305
पारतन्त्र्यकृतासारमीतिः परवधूरतिः । अभिलाषामलोत्सेके रागभाजां घृताहुतिः ॥३०६॥
तान्कुट्टनान्पुरस्कृत्य पर्यपानेकदा नृपः । जिन्दुराजगृहं प्रायात्स रात्रौ चौर्यकामुकः ॥३०७॥
तत्रासीज्जिन्दुराजस्य स्नुषा परमपुंश्चली । स्वगृहे दत्तसंकेता नक्तं कलशभूभुजः ॥३०८॥
प्रविशन्तमथावस्तं भषद्भिः ज्ञापितं श्वभिः । धृतासयो गृहद्वारं चण्डालाश्चौरशङ्किताः ॥३०९॥
तान्हन्तुमुद्यतान्दृष्ट्वा तं क्षितौ पतितं भयात् । पृष्ठन्यस्तस्ववपुषो ररक्षुरनुयायिनः ॥३१०॥ 310
तेभ्यः स मुष्टिघातादि दददन्यः कथमप्यभूत्[1] । मैवं कलशदेवोऽयमित्युक्त्वा त्याजितो निजैः ॥३११॥
प्राणहीनं[1] पुरस्कृत्य नारीमभिससार यत् । तदेव कामिनस्तस्य नूनमासीदमङ्गलम् ॥३१२॥
स निर्यातो गृहात्कान्ताकटाक्षविवशीकृतः । पथि कालीकटाक्षार्तं[1] दैवान्न प्रलयं ययौ ॥३१३॥
निजचित्तापराधेन कुर्वन्नीतिव्यतिक्रमम् । अस्पृश्येभ्यः परिभवं भूपालोऽप्युपलब्धवान्[1] ॥३१४॥
इन्द्रियैरिन्द्रचन्द्राद्या क्षेपिता यैः सुरा अपि । अपरिम्लानमानत्वं तैर्मर्त्यस्याथ वा कथम् ॥३१५॥ 315
प्रागुन्मीलति दुर्यशः सुविषमं गर्वोभिलाषस्ततो धर्मः पूर्वमुपैति संक्षयमथो श्लाघ्योऽभिमानक्रमः ।
संदेहं प्रथमं प्रयात्यभिजनं पश्चात्पुनर्जीवितं किं नाभ्येति विपर्ययं विगलने शीलस्य चिन्तामणेः ॥३१६॥
राजधानीमथाप्तस्य दुःशीलस्य महीपतेः* । क्षपायामेव तां वार्तां पितरावधिजग्मतुः ॥३१७॥
तौ हसित्वा सुतस्नेहलज्जाशोकान्वितौ चिरम् । निश्चयं बन्धने तस्य सदोषस्य प्रचक्रतुः ॥३१८॥
सर्वविद्यानिधिं ज्येष्ठं नप्तॄणां बप्पिकात्मजम् । हर्षं राज्ये चिकीर्षू च चिन्वतुस्तां निशीथिनीम् ॥३१९॥

२९५. [1]) Thus A B G; C भिक्षुक.—[2]) $A_2$ gloss [illegible]. २९८. [1]) $A_2$ gloss [illegible]. २९९. [1]) The second half of this verse has been omitted by $A_1$ and supplied by $A_2$ in margin. ३००. [1]) $A_2$ gloss [illegible].—[2]) A gloss [illegible]. ३०१. [1]) $A_1$ indicates here a *lacune* of two *pâdas*. ३०७. [1]) Thus corr. by $A_2$ from $A_1$ कुट्टनान्पु°. ३११. [1]) Thus $A_1$ originally; भूत् has been subsequently erased by $A_1$ and replaced by two dots. ३१२. [1]) $A_2$ gloss [illegible]. ३१३. [1]) Thus emended with C and G *sec. manu*; A °कटाक्षा°. ३१४. [1]) प्यु supplied by $A_2$.

320 आकारितस्ततस्ताभ्यां प्रातः कलशभूपतिः । ऊचे बिज्जजयानन्दौ[1] साशङ्को जनकाद्भयम् ॥३२०॥
तन्मतेन जयानन्दवत्सहस्तः कथंचन । अन्वीयमानो बिज्जेन स पित्रोः प्राविशद्गृहम् ॥३२१॥
पिता प्रविष्टमात्रं तं वक्त्रे दत्तचपेटकः । अभाग्यभागिन्नर्पिहि क्षुरिकामित्यथाब्रवीत् ॥३२२॥
एवं प्राग्विद्धबाहुसंधिमालम्ब्य पाणिना । सावष्टम्भं स्पृशञ्छस्त्रं बिज्जो राजानमब्रवीत् ॥३२३॥
राजन्मानवतां धुर्यो भवन्नपि भवान्कथम् । नात्याज्यं[1] मानिनां वेत्ति मानग्रहमहाव्रतम् ॥३२४॥
325 गृहीतवेतनेनायं राजपुत्रेण शस्त्रिणा । संकटेस्मिन्मया स्वामी जीवता त्यज्यते कथम् ॥३२५॥
पिता भवानयं पुत्रः क्षणेन्यस्मिन्महीपते । भव्यसंनिहितेमुष्य यद्योग्यं तद्विधीयताम् ॥३२६॥
मुग्धं विमोह्य नृपतिं वचोभिः स्निग्धकर्कशैः । बिज्जः स्वामिनमादाय निराक्रामत्तदन्तिकात् ॥३२७॥
बिज्जस्यापूजयन्धीरास्तद्धैर्यमतिमानुषम् । अनन्तदेवस्याप्यग्रे यदेवं स व्यजृम्भत ॥३२८॥
चण्डी नरपतेः[1] पत्नी भाव्यर्थबलवत्तया । अत्याज्यजपमौनस्या तस्मिन्नवसरेभवत् ॥३२९॥
330 सा चेदासिष्यतो[1]युक्ता नाभविष्यत्तदेतरत् । नियमात्सर्वनाशाद्वा बन्धनात्कलशस्य वा ॥३३०॥
ततो बिज्जेन कलशः सत्वरेण प्रवेशितः । अस्यन्दिल्हाभिधानाया वल्लभाया निवेशनम् ॥३३१॥
शिरोर्तिरस्य संजातेत्युक्त्वा भीतं पतिं व्यधात् । सा प्राज्ञा ज्ञातवृत्तान्ता तैलेनाभ्यक्तमस्तकम् ॥३३२॥
व्याजेन तेन सर्वस्य संप्रवेशं निषिध्य सा । पतिं जुगोप विन्यस्य बिज्जं द्वारस्य रक्षणे ॥३३३॥
ततः समाधेर्विरता राज्ञी निर्भर्त्स्य भूपतिम् । कुशलान्वेषणमिषात्तनयस्यान्तिकं ययौ ॥३३४॥
335 बद्धुं बद्धोद्यमो राजा तथैव प्रययौ यदा । दत्तप्रवेशो बिज्जेन तदैकाक्येव सोभवत् ॥३३५॥
निषेधादनुगन्तॄणां ततः क्रुद्धो धराधवः । रुषित्वा विजयक्षेत्रं गन्तुं प्रावर्ततोद्धतः ॥३३६॥
तं प्रयान्तं सपत्नीकं प्राप्तं पद्मपुरान्तिकम् । अथोचन्नेत्य तत्रस्था विश्वावट्टादयो द्विजाः ॥३३७॥
अधिकारं स्वयं त्यक्त्वा राजन्किमनुतप्यसे । कृतस्यानुशयो युक्तो न सतो नासतोपि वा ॥३३८॥
न च ते दुर्मती त्यक्ताः प्रजा एता मयेत्यपि । ध्यात्वा सूनोः समुचिता कर्तुं दुष्टस्य वाच्यता ॥३३९॥
340 न यन्त्रपुत्रकस्येव शक्तिः कापि हि भूभुजः । भवेत्साधुरसाधुर्वा स प्रजानां शुभाशुभैः ॥३४०॥
उज्झन्ति यत्पयोवाहा जलानि तडितोथ वा । वनस्पतीनां सदसत्कर्मपाकस्य तत्फलम् ॥३४१॥
यथापथस्थितं पुत्रं त्यक्त्वैकस्यासितुं सुखम् । कोशं त्यक्त्वा प्रस्थितस्य घटते तत्कथं तव ॥३४२॥
धाराधिरूढसामर्थ्यः सद्वंशः शुचिमानपि । संस्पृश्यते क्षीणकोशः कृपाण इव कैः पुमान् ॥३४३॥
श्रुत्वेत्यैच्छन्नृपो यावत्प्रत्यावृत्तिं विचारवान् । तावत्स पुत्रेणाभ्येत्य सभार्येण प्रसादितः ॥३४४॥
345 अथ प्रविश्य नगरं स प्रासादांपवर्जिताम् । अशान्तमन्युरादाय लक्ष्मीं भूयो विनिर्ययौ ॥३४५॥

---

३२०. [1]) $A_3$ gloss जयानन्दः नागपुत्रः पुत्रः ॥ बालपुत्रः. ३२४. [1]) Thus corr. by $A_2$ from $A_1$ न त्याज्यं. ३२९. [1]) चण्डी नरपतेः and नवसरेभवत् supplied by $A_2$ in space left by $A_1$. ३३०. [1]) सिष्यतो supplied by $A_2$ in space left by $A_1$.— [2]) सर्वनाशाद्वा बन्ध supplied by $A_2$ in space left by $A_1$. ३३५. [1]) Emended: $A_1$ बन्धुं, $A_2$ बन्धुं. ३३६. [1]) क्रुद्धः supplied by $A_2$ in space left by $A_1$. ३३७. [1]) Emended; A विश्वाव°. ३३८. [1]) कृतस्या supplied by $A_2$. ३३९. [1]) Thus corr. by $A_2$ from $A_1$ त्यक्त्वा.—[2]) $A_2$ gloss, partly effaced, दुर्मती दुष्टबुद्धिविशिष्टे पुत्रे मया एताः प्रजाः त्यक्त[ाः]पुत्र एव राज्य[स्या]धना-धिस्थापि [ध्या]त्वा दुष्टस्य पुत्रस्य वाच्यता निन्दा कर्तुं न समुचिता ते ···त्यन्वयः. ३४२. [1]) $A_2$ gloss भाण्डागारं. ३४५. [1]) Emended: A प्रसास°; C प्रमाण°.

इत्यायुधमनुज्ञाप्य स्वयं स्वीकृत्य निर्गतः । देवीं प्रतीक्षमाणोस्थात्सरित्पारे ततः क्षणम् ॥३४६॥
मानाभकारानारोप्य कोशाश्वीषु नृपाङ्गनाः । भावःशाकमपि गृहे निर्यान्त्यः पर्यशोचयन् ॥३४७॥
अज्ञातवार्तः प्राक्तूष्णीं तस्मिन्स्थानेभवज्जनः । ज्ञातवार्तस्तदा त्वासीदाक्रन्दमुखराननः ॥३४८॥
प्रतिमोक्तुं पुरे ताभ्यां दत्तपुष्पाञ्जली जनः । बाष्पबिन्दूनिवाक्षीदीर्घानर्घकणानिव ॥३४९॥
हा मातर्हा पितः केत्थं गच्छतः परिदेवितात् । इत्यस्मादपरः शब्दो मार्गेषु न तदा श्रुतः ॥३५०॥ 350
मार्गेष्वन्तरान्तराक्रन्दविरती निर्झरध्वनिः । शैलानां शोकनिःश्वासफूत्कार इव शुश्रुवे ॥३५१॥
तयोराक्रन्दितैः श्वभ्रस्यापि संजातसंस्रवौ । कर्णौ शून्येप्यशृणुतामाक्रन्दितमिवासकृत् ॥३५२॥
पुत्रागसा तादृशौ तौ दृष्ट्वा मार्गे द्रुमीकृताम् । खगानां शावभरणमपि लोको व्यगर्हत ॥३५३॥
तयोः पुत्रानयोस्तप्रचेतसोर्विजयेश्वरः । मनःप्रसादं संदृष्टः स्निग्धबन्धुरिवाकरोत् ॥३५४॥
तत्र भाण्डागाराश्वभृत्याद्यावसथार्पणैः । संविधानक्रियाभिश्च व्यधत्तोरणमह्निकम् ॥३५५॥ 355
देशे कोशोपकरणपूर्णगोणीगणावृते । आसन्निन्धनगण्डालीकलशरथ्या इवापणाः ॥३५६॥
तन्वङ्गराजतुङ्गादिशातिपुत्रा नृपात्मजाः । तं सूर्यवर्मचन्द्राद्या डामराश्चानुवव्रजुः ॥३५७॥
डामरान्क्षीरभूपादीन्राजा नौनगरादिषु । स्थानेषु स्वेषु निक्षिप्य रक्षित्वे गुप्तिमानभूत् ॥३५८॥
विश्रान्तसर्वचित्तस्य श्रीमतोनन्तभूपतेः । प्रावर्तन्तोत्सवैर्गन्तुं दिनानि विजयेश्वरे ॥३५९॥
राजपुत्राश्वारोहशालिडामरमण्डलैः । कृत्स्नैरेव स्थितिर्बद्धा सविधे वृद्धभूभुजः ॥३६०॥ 360
वत्सरे पञ्चपञ्चाशे ज्येष्ठे मासि विनिर्गतः । आसाद्य विजयक्षेत्रं सं स्वर्गसुखमन्वभूत् ॥३६१॥
कलशस्तु गते राज्ञि प्राप कीलबद्धं महीम् । रक्षाही ज्वलिते यातरक्षां निधिमहीमिव ॥३६२॥
स्वराज्यमुज्ज्वलीकर्तुं रिक्तोपि विहितोद्यमः । चक्रे संमन्त्र्य बिज्जाद्यैः संमतानधिकारिणः ॥३६३॥
तेन सर्वाधिकारेषु जयानन्दो नियोजितः । द्वारे वराहदेवश्च वितस्तात्रपुरोद्भवः ॥३६४॥
यो श्वभ्राधिकार्यासीज्जिन्दुराजस्य कम्पने । राज्ञां विजयमित्रः स कम्पनाधिपतिः कृतः ॥३६५॥ 365
यथाधिकारमन्यांश्च विनिधायाधिकारिणः । राजार्थचिन्तामारेभे संरब्धः पितृविग्रहे ॥३६६॥
जयानन्दः पदातीनां चिकीर्षुरथ संग्रहम् । यत्नादनुचितेभ्योपि धनिकेभ्योग्रहीदृणम् ॥३६७॥
स्वीकृत्य पत्तीन्बिज्जादिराजपुत्रगणान्वितः । अथावन्तिपुरं प्राप योद्धुं वृद्धनराधिपम् ॥३६८॥
अभ्यर्थ्य कारितो वेलां राज्ञा काराविनिर्गतः । शिमिकावर्मना योद्धुं जिन्दुराजो विनिर्ययौ ॥३६९॥
तेषामुद्योगमाकर्ण्य क्रुद्धा वृद्धमहीभुजम् । स्वे डामराश्वारोहाद्याः संरम्भादुपतस्थिरे ॥३७०॥ 370
अजायत ध्वस्तगुडक्रीडत्तुरगमण्डला । शस्त्रैः सत्राटवी कृत्त्वा संकटा विजयेश्वरे ॥३७१॥
ततः सूर्यमती यत्नात्पतिं परमकोपनम् । ययाचे पुत्रवात्सल्याद्युद्धं दिवसद्वयम् ॥३७२॥

---

३४६. [1]) Thus corr. by $A_2$ from $A_1$ °स्था सरि°. ३४८. [1]) Thus corr. by $A_2$ from $A_1$ °स्तदाप्यासी°. ३५०. [1]) Thus corr. by $A_2$ from $A_1$ क्क. ३५३. [1]) $A_2$ gloss शावाः पोताः तेषां भरणं पोषणं. ३५६. [1]) $A_2$ गण्डालयः गण्ड इति भाषया. ३५७. [1]) Thus corr. by $A_2$ from $A_1$ °तुङ्गा°. ३६१ [1]) $A_2$ gloss अनन्तदेवः.—[2]) $A_2$ gloss स्वर्गसुखं परमानन्दं न तु मृ [तिम्]. ३६२. [1]) $A_2$ gloss भ्रमरहिताम्. ३६४. [1]) च supplied by $A_2$ in space left by $A_1$.—[2]) $A_2$ gloss वितस्तात्रं नाम पत्तनं तस्मादुद्भवो यस्य स वितस्तात्रपुरोद्भवः. ३६५. [1]) Thus corr. by $A_2$ from $A_1$ यो श्वभ्राधि°.—[2]) $A_2$ gloss कालसीन. ३६९. [1]) वे supplied by $A_2$ in space left by $A_1$. ३७०. [1]) संरम्भा supplied by $A_2$ in space left by $A_1$.

अस्थानासक्त भक्त्यादीन्निजानिति विसृज्य सा । तन्मुखेनातिवात्सल्यादिदमूचे रहः सुतम् ॥३७३॥
पिताश्रयांस्त्यजन् पुत्र कस्ते मतिविपर्ययः । तीव्रशौर्येण पित्रापि यदेवं योद्धुमिच्छसि ॥३७४॥
यस्य भ्रूभङ्गमात्रेण दरद्राजादयो हताः । तत्प्रकोपानले कस्मादीहसे शलभायितुम् ॥३७५॥
अस्मिंस्तु प्रीतिमार्गस्थे प्रीतिदोऽक्षमे नृपे । कस्त्राता स्यात्त्वदीयानां तृणानामिव शस्त्रिणाम् ॥३७६॥
सेनाङ्गैः कतमैः केन शौर्येण कतमैर्धनैः । भवाद्दशक्तिमतां धुर्यं योद्धुमेनं प्रधावति ॥३७७॥
देशास्तस्य क्रमेणैतेन भुक्तं राज्यमखण्डितम् । पित्रा तीर्थोपविष्टेन किमिवापकृतं तव ॥३७८॥
द्वेष्टृभिः पात्यमानो व्यसनेऽस्मिन्सुदारुणे । प्रयास्यसि दिनैरेव रिक्तोऽप्यत्यन्तरिक्तताम् ॥३७९॥
नय सेनाः पितुर्भीतिर्जीवन्त्यां मयि नास्ति ते । ऋजुमेनं नयस्वार्द्रं प्रत्युतानुनयोक्तिभिः ॥३८०॥
इति दूतमुखैर्गूढं पुत्रो मात्रा कृतार्थनः । सर्वाशाभ्योऽनयत्सैन्यं राजावेव निजान्तिकम् ॥३८१॥
श्रुतापसारं सैन्यानां दूतैरेत्य प्रसादितम् । उपालेभे पतिं प्रातर्धृष्टा प्रत्युत वल्लभा ॥३८२॥
राज्ञा मिथस्तयोरेवं शमिताशेषवैरपि । पिशुनप्रेरणात्प्राप कालुष्यं धीः क्षणे क्षणे ॥३८३॥
वैरस्य कर्पटस्येव भेदं याति मुहुर्मुहुः । संधीयमानमपि यच्छिन्नाम्बरमिवाशयम् ॥३८४॥
वाचाल्यादौ सुतोदन्तं श्रुत्वा तप्ताशयो नृपः । गृहं प्रविष्टो धृष्टस्त्रीभाषितैर्जडतां ययौ ॥३८५॥
एवं प्रतिदिनं तप्तस्त्यक्ततापः प्रतिक्षपम् । स्वच्छाशयः शरत्सुष्यत्तडागौपम्यमाययौ ॥३८६॥
चकार पितृपक्ष्याणां पुत्रो वेश्मादिनाशनम् । पिता तु पुत्रपक्ष्याणां न किंचित्स्त्रीवशीकृतः ॥३८७॥
पुत्रस्नेहान्धया पत्न्या बाधितैश्चानुयायिभिः । रूक्षोक्तिभिस्ताड्यमानस्तस्थौ दुःस्थः सदा नृपः ॥३८८॥
राज्यं जिहीर्षुः पुत्रस्य निःशूरं तद्बलं विदन् । ईश्वरस्य जिन्दुराजस्य गणनां नैव चाकरोत् ॥३८९॥
पुत्राज्जिहीर्षुणा राज्यं तेन तन्वङ्गनन्दनाः । प्रार्थ्यन्ते स्म तदा राज्यकृतये तत्पराङ्मुखाः ॥३९०॥
संभेदं तं तदा राज्ञी स्वान्वयाशर्मशङ्किनी । हर्षं देवी नृपं कर्तुं दूतैराहूतवत्यभूत् ॥३९१॥
स पितामह्योर्दूतैराहूतः साहसोन्मुखः । बाह्याल्यां निर्गतः सज्जै रक्ष्यमाणोऽपि रक्षिभिः ॥३९२॥
दत्तपार्ष्णिकशाघातः क्षणार्धेनोदलङ्घयत् । मनोजवेनाममौजा वाजिना पञ्चयोजनीम् ॥३९३॥
वाजिनं विजिताभ्यासमनुगन्तुं समुद्यताः । अगच्छन्बहवो मार्गे दीनाः सेनाहयाः श्रमम् ॥३९४॥
प्राप्तस्य पादयोस्तस्य पतितस्य पितामही । आनन्दाश्रुजलस्यन्दैरभिषेकं प्रचक्रतुः ॥३९५॥
पुत्रे तन्निकटं प्राप्ते कलशः कम्पिताशयः । अप्रियाचरणात्पित्रोः संधित्सुः स न्यवर्तत ॥३९६॥
स तस्य नगरात्पत्नीः पार्श्वं प्राज्ञो व्यसर्जयत् । अकरोद्विप्लुते राष्ट्रे स्वभेदस्याप्रकाशनम् ॥३९७॥
एवं प्रवर्धमानेऽपि वैरे कलशभूपतिः । कंचित्कालं मते मातुरवर्तिष्ट मनागिव ॥३९८॥
खशालाः कलशाद्वेषाद्विजयोः कम्पनापतेः । तया प्रावर्तितनतेर्मार्गे संत्याजितः पतिः ॥३९९॥
अत्रान्तरे शमयितुं वैरं देशोपघातकृत् । तावुद्दिश्य पितापुत्रौ द्विजाः प्रायं प्रचक्रिरे ॥४००॥

---

३७३. 1) Thus corr. by $A_3$ from $A_1$ °सीसिपे. ३७६. 1) $A_3$ gloss अग्नं. ३७८. 1) Thus corr. by $A_3$ from $A_1$ भुक्त°. ३८१. 1) $A_3$ gloss अमात्यकलशयोः. ३८४. 1) कर्प supplied by $A_3$ in space left by $A_1$. ३८५ 1) Thus corr. by $A_3$ from $A_1$ वाह्याल्यां°. ३८६. 1) °शुष्यत् supplied by $A_3$ in space left by $A_1$. ३८८. 1) Thus $A_3$; $A_1$ तथा. ३९१. 1) Thus corr. by $A_3$ from $A_1$ स्वान्व°. ३९२. 1) $A_3$ gloss पितामह्योः पितामहपितामह्योः.

संधिबन्धे समुत्पन्ने ततस्तदनुरोधतः । दंपती संप्रविष्टौ तौ सार्धं स्वाश्रयं पुरम् ॥४०१॥
अथानन्दादिदुष्प्रयाय बुद्ध्वा बन्धोद्यतं सुतम् । भूयोपि ययतुः खेदान्निर्गत्य विजयेश्वरम् ॥४०२॥
तस्याभ्याशकुटानि पुत्रो राज्ञावदाहयत् । व्यापादयत्पदातींश्च विपक्षस्वामिभुक्तिभिः ॥४०३॥
तथा प्रवर्धमानेपि विरोधे तस्यरोधयत् । वात्सल्यविवशा राज्ञी भर्तुः प्रतिचिकीर्षितम् ॥४०४॥
लुड्डाभिधाभूत्कैवर्तबन्धकी तद्विधेयधीः । धक्कडामरनामा च तज्जारः खलतिस्तदा ॥४०५॥ 405
स तत्रावित दुष्टात्मा कथ्यमानो समीपगैः । शुश्राव पितरौ[1] नित्यं लीलास्मितसिताननः ॥४०६॥ युग्मम् ॥
तौ दंपती पुनर्हेमतुलापुरुषयुग्मदौ । चित्राभिर्धर्मचर्याभिर्मनस्तापममुञ्चताम् ॥४०७॥
यदा पुनस्तयोर्दार्ढ्यमादात्वाद्य व्यहीयत । तदा सेर्ष्यः स दुष्पुत्रो रात्रौ वह्निमदापयत् ॥४०८॥
तेनाभिनोर्वरीशस्य सर्वोपकरणैः समम् । भस्मावशेषमभवद्विजयेश्वरपत्तनम् ॥४०९॥
सर्वनाशशुचा दीना राज्ञी मर्तुं समुद्यता । तन्वङ्गपुत्रैश्चकृपे कथंचिज्ज्वलतो गृहात् ॥४१०॥ 410
त्यक्तांशुकानि शय्याभ्यो निशायां सुप्तमुत्थितम् । निःशेषं राजसैन्यं तदजायत दिगम्बरम् ॥४११॥
तद्राजधानीसौधाग्रात्पश्यन्कलशभूपतिः । गीतावनृत्यज्ज्वालौघैर्गगनालिङ्गिभिः समम् ॥४१२॥
अतरद्भ्रष्टसर्वस्वः स पारं सरितो नृपः । निममज्ज सजानिस्तु दुस्तरे शोकसागरे ॥४१३॥
संप्राप्य मातरमुद्दं रत्नलिङ्गं नृपाङ्गना[1] । व्यक्रीणाल्लक्षसमस्या[2] टाङ्कानां पार्श्वभीगुषाम् ॥४१४॥
क्रीत्वा च प्रददौ पूर्वं[3] भृत्यानां भोजनांशुके । धनेन तेन[1] निर्दग्धान्यपि धामान्यशोधयत् ॥४१५॥ 415
भस्मकूलतलाच्चावलब्धं स्वर्णादि भूभुजा । कथापि याचतो हन्त प्रथयत्यद्य कौतुकम् ॥४१६॥
राजा भूत्वाटवीभूते पत्तने तत्र सानुगः । नड्वलग्रथितच्छत्रपटलाच्छादितेऽवसत् ॥४१७॥
तावत्यप्यर्थसामर्थ्ये चिकीर्षोस्तत्पुरं नवम् । विना राज्योचितामाज्ञां न सिद्धं वृद्धभूपतेः ॥४१८॥
भ्रष्टाभिभवो मातुरानुकूल्याज्जयो नृपः । परितापं पितुस्तैस्तैर्दुःसंदेशैः सदाकरोत् ॥४१९॥
निर्बन्धादथ पुत्रेण पर्णोत्सगमनं पिता । निर्वासनोत्सुकेनोक्तः शश्वद्दूतमुखैर्यदा ॥४२०॥ 420
प्रभवन्त्या यदा नासीत्पत्न्या तस्यैव वस्तुनः । निष्पत्तये प्रेर्यमाणः साधिक्षेपं क्षणे क्षणे ॥४२१॥
तदा जातु रहः कुर्वंस्तन्वङ्गे शयने स्थिते । उवाचानुक्तपूर्वं तामेवं स परुषं वचः ॥४२२॥ तिलकम् ॥
अभिमानो यशः शौर्यं राज्यमोजो मतिर्धनम् । मया जायाविधेयेन हन्त किं किं न हारितम् ॥४२३॥
मिथ्योपकरणं नारीर्गणयन्ति नृणां जनाः । परिणामे तु नारीणां क्रीडोपकरणं नराः ॥ ४२४ ॥
दृष्टोन्मेषात्प्रसक्ताभिर्विरक्ताभिरथव्यथा । के नाम नात्र कान्ताभिः कृतान्तस्यातिथीकृताः ॥४२५॥ 425
रूपं काश्चिद्बलं काश्चित्प्रज्ञां काश्चिच्च कार्मणैः । पुंस्त्वं काश्चिदसून्काश्चिन्नृणां जह्रुरङ्गनाः ॥४२६॥
हरन्ति पादभिरिव क्ष्मां पुत्रैरन्यगोत्रजैः । मत्ताः पयोधरोत्सङ्गाद्वरक्लिण्य इवाङ्गनाः ॥४२७॥
पर्वन्ते वेतनमिमे किं जीर्णैरीदृशैरिति । पोषयन्ति सुतान्भर्तृक्षपणाशिषु योषितः ॥४२८॥
सर्वकालं विदित्वापि दोषान्योषित्कृतानमून् । प्रतिपत्त्यनुरोधेन मयैवं नावधीरिता ॥४२९॥

४०६. ¹) $A_2$ gloss पितराविति पितरौ राजा राज्ञी च राजा धक्कडामरनाम्ना समीपगैः कथ्यमानः राज्ञी च लुड्डाभिधा कैवर्ती नाम्ना कथ्यमाना व्यवहारार्थमित्यर्थः. ४१४. ¹) Thus corr. by $A_2$ from $A_1$ नृपात्मजा.—²) Thus corr. by $A_2$ from $A_1$ विक्री°. ³) Thus $A_2$; $A_1$ पूर्वमीषु°. ४१५. ¹) Thus $A_1$; $A_2$ तत्र°. ४१७. ¹) नडत्वङ्ग । विच् इति भाषया. ४२६. ¹) रूपंकाश्चि supplied by $A_2$ in space left by $A_1$.

430 प्रभविष्णुर्निहन्त्वेषमैहिकीः सुखसंपदः । परलोकसुखस्याशामपि हन्तुं समीहते ॥४३०॥
वलीपलितयुक्तस्य नेदीयोमरणागमे । विहाय विजयक्षेत्रं कुत्र गन्तुं ममोचितम् ॥४३१॥
क्षपाकरकलामौलेः किल्बिषक्षपणक्षमा । द्वारोपकण्ठसंसेवोत्कण्ठा कुण्ठीभवेत्कथम् ॥४३२॥
पुत्रो लोकद्वयत्राता कस्यान्यस्येदृशो भवेत् । तीर्थादस्थापयन्मां यत्कुपथे मृतमिच्छति ॥४३३॥
प्रतिभात्यवगीतोयं प्रवादो मेद्य चेतसि । अनयान्यकुलोद्भूतो यदयं संप्रवेशितः ॥४३४॥
435 विसंवादिनमाकाराचारैर्बन्धुविरोधिनम् । पुत्रं पितुरसंदिग्धं आनीयादन्यरेतसम् ॥४३५॥
सुचिराविष्कृताकूतां त्यक्त्वा प्राणाय यन्त्रणाम् । एवं वदन्पतिस्तस्याश्चक्रे मर्मसु ताडनम् ॥४३६॥
गोत्रजस्य पुरः पुत्रोत्पत्तिगुह्ये प्रकाशिते । आमृष्टविप्रियालापा साभूदधिकलज्जिता ॥४३७॥
महणमस्य पुत्रो हि प्रज्ञास्त्राख्यस्य सोभवत् । विपन्नापत्ययोपात्तस्तयेत्यासीज्जनश्रुतिः ॥४३८॥
उत्सिक्तभाषितं भर्तुर्योषितो जितभर्तृकाः । आमन्यन्त्याङ्कुसंवृत्तशिरस्ताडनसंनिभम् ॥४३९॥
440 अतः सा सुदृढं प्रौढिसंस्कारपरुषं वचः । प्राकृतप्रमदेवोच्चैरित्युवाच रुषा पतिम् ॥४४०॥
गतश्रीस्तापसो मन्दो जातभाग्यविपर्ययः । वृथा वृद्धः क्व किं वाच्यमिति मूढो न वेत्त्ययम् ॥४४१॥
बाल्योत्थितस्य यस्यास्य नाभूत्प्रावरणं पुरा । लोको जानात्ययं किं न तेन मां प्राप्य हारितम् ॥४४२॥
स्वकुलस्त्रीसमुचितं यत्किंचिन्मामभाषथाः । क्रियते किं न कालोयं यत्प्रायश्चित्तसेवने ॥४४३॥
अकर्मण्यो गतश्रया देशात्पुत्रेण वारितः । पत्यापि त्यक्त इत्यस्मात्परित्यागाद्धि मे भयम् ॥४४४॥
445 कुलदोषादिवृत्तान्तगर्भोपालम्भनिर्भरैः । वचोभिर्व्यथितस्तस्यास्तस्थौ तूष्णीं यदा नृपः ॥४४५॥
तदा तस्यास्तनप्रान्तनिःसृतः प्रसरन्बहिः । निर्विकाराकृतेर्व्यक्तं ददृशे रक्तनिर्झरः ॥४४६॥
संभ्रान्तायां ततो राज्ञ्यामपश्यस्यक्तनो रुदन् । असिधेनुं गुहे तेन क्रुधा राज्ञा प्रवेशिताम् ॥४४७॥
ततोतिधीरो राजैव सं लज्जाचकितोन्वशात् । राज्ञो रक्तातिसरणं जातमित्युच्यतां बहिः ॥४४८॥
विधेया नारीणां तनयनिहिताशेषविभवाः कृतम्लानौ भृत्ये पुनरुदितविस्रम्भरभसाः ।
नयन्तो गण्यत्वं प्रसभमभियोगैर्लघुमतिं[1] नयत्यक्ताः क्ष्मापाः प्रलयमुपगच्छन्ति न चिरात् ॥४४९॥
450 नृपतिर्वाहितहयः शरदातपखेदितः । तृष्यन्निपीय धान्याम्बु[1] च्युतासृग्जात इत्यभूत् ॥ ४५०॥
गम्भीरै राजपुरुषैस्तथा वार्ता प्रवर्तिता । यथा नाबुद्ध वृत्तान्तमेतं कोपि बहिर्जनः ॥४५१॥ युग्मम् ॥
वत्सरे सप्तपञ्चाशे पौर्णमास्यां स कार्तिके[1] । विजयेशाग्रतो राजा जीवितेन व्ययुज्यत ॥४५२॥
पत्न्याः पुत्रस्य दौर्हृदैस्त्यक्तो राजा सुखोचितः । प्रसार्य पादौ निद्रातुं प्राप सोवसरं चिरात् ॥४५३॥
पुकोपासी न कस्मैचित्पुकोपास्यो न कश्चन । चक्रे सुखी विमन्युश्च मरणेन महामनाः ॥४५४॥
455 संग्रामराजदायादो न कस्यचिदिव प्रियः । अंशुकाच्छादितो भूमावनाथ इव सोस्वपत्[1] ॥४५५॥
न प्रियाक्रन्दितैः खिन्नश्च कुप्यन्नप्रियोक्तिभिः । सर्वत्यागी ययौ राजा दीर्घनिद्रारसज्ञताम् ॥४५६॥
दाक्षिण्योल्लङ्घनप्रायश्चित्तायेव स्वजनवत् । कृतज्ञया पतिः पत्न्या ततो निन्ये सनाथताम् ॥४५७॥

४४९. ¹) Thus A₂; A₁ °धोगं लघु°. ४५०. ¹) A₂ glosses धान्यं धनिका धान्यवत् इति भाषया। तत्तज्जु. ४५२. ¹) Thus corr. by A₂ from A₁ कार्त्तिके. ४५५. ¹) Thus corr. by A₂ from A₁ सोमपत्.

आराजपुत्रचण्डालं देयं प्रत्यहवेतनम् । ददौ स्वस्येव भृत्येभ्यः सा कर्तुमनृणं पतिम् ॥४५८॥
गृहीतवेतना भृत्याः कोशं सर्वं तया स्वयम् । पुरस्ताद्विजयेशस्य नृपः क्षेमाय याचिताः ॥४५९॥
पादन्यस्तशिराः पौत्रो हर्षार्पितकोशया । मूर्ध्न्याघ्राय कथितो मा पितुर्विश्वसीरिति ॥४६०॥ 460
उत्थितैव ततो भूत्वा स्वयमात्तलतां सती । प्रातिहार्यं व्यधाद्भर्तुः कारयन्त्यन्तमण्डनाम् ॥४६१॥
सादिनां शतमाविश्य तत्सुतस्यैव रक्षणे । सा पुनः शिबिकारूढमथ प्रास्थापयत्पतिम् ॥४६२॥
क्षपामेकां दिनार्धं च स्थित्वैवं पतिदेवता । प्रणम्य विजयेशानं युग्यारूढा विनिर्ययौ ॥४६३॥
निर्यान्तौ वीक्ष्य तौ प्रेततूर्यकल्लोलमिश्रितैः । लोकस्याक्रन्दतुमुलैर्भग्ना इव दिशोभवन् ॥४६४॥
विमानस्योत्पताकस्य परिष्कारेषु बिम्बिताः । प्रजा राज्ञोन्तिके रेजुरनुगन्तुमिवोद्यताः ॥४६५॥ 465
राज्ञां विशीर्णस्कन्धानां महल्लोलाः शिरोरुहाः । विमानस्थस्य नृपतेरवहंश्चामरश्रियम् ॥४६६॥
पश्यन्ती पश्चिमां सेवां सैन्यानां नृपतिप्रिया । अस्ताभिलाषिणि दिने प्रपेदे पितृकाननम् ॥४६७॥
दुस्त्यजात्सुतवात्सल्यादथवा केनापि हेतुना । सा बभूव क्षणे तस्मिंस्तनयालोकनोत्सुका ॥४६८॥
जानन्ती पवनोद्धूतं रजः सेनासमुत्थितम् । चकितोत्कण्ठिता साभूत्कलशागमनाशया ॥४६९॥
तस्मिन्क्षणे जनाः केचिदायाता नगराध्वना । अङ्ग किं कलशः प्राप्त इति पृष्टास्तया स्वयम् ॥४७०॥ 470
स तु पुत्रः क्षणे तस्मिन्धियाद्धर्मातुरन्तिकम् । दत्त्वा विभीषिकास्तास्ता निरुद्धो द्वैधकारिभिः ॥४७१॥
ततो गृहीतनैराश्या राज्ञी पुत्रावलोकने । सा प्रार्थयित्वा वैतस्तं वारि श्लोकमथापठत् ॥४७२॥
वैतस्तेन तु तोयेन जठरस्थेन ये मृताः । मोक्षं गच्छन्त्यसंदेहं ते यथा ब्रह्मवादिनः ॥४७३॥
उपनीतं वितस्ताम्बु पीत्वोपस्पृश्य चाथ सा । एवं शशाप पिशुनान्स्नेहसंक्षयकारिणः ॥४७४॥
जनितं प्राणहद्वैरं यैः पुत्रेण सहावयोः । सान्वयानां क्षयस्तेषां भूयात्परिमितैर्दिनैः ॥४७५॥ 475
तस्यास्तेनोपतप्तायाः शापेनाव्यभिचारिणा । क्षिप्रमेव जयानन्दजिन्दुराजादयो मृताः ॥४७६॥
चक्रे हलधरामस्य जानकीलीनशान्तये । परलोकं पणीकृत्य पुत्रया च शपथं सती ॥४७७॥
एवं विशुद्धशीलत्वं संप्रकाश्य शुचिस्मिता । कर्णीरथादवाप्झम्पां ज्वलिते जातवेदसि ॥४७८॥
अजायत नभो वह्निज्वालावलयमालितम् । तदागमोत्सवे दत्तसिन्दूरमिव निर्जरैः ॥४७९॥
साक्रन्दैर्न चटत्कारी दुःखोत्तप्तैर्न चोन्मनः । परमालेख्यलिखित इव जज्ञे शिखी जनैः ॥४८०॥ 480
गङ्गाधरष्टक्कबुद्धो युग्यवाहश्च दण्डकः । नावुद्दा मोनिका वल्गा चेति दास्यस्तदान्वयुः ॥४८१॥
बप्पटोद्भटयोः कुल्यौ सेनटक्षेमटावुभौ । भूपालवल्लभावास्तां वैराग्याद्विजयेश्वरे ॥४८२॥
भावा यन्न निसर्गभङ्गुरतरास्तिष्ठन्ति नैते चिरं चेतःकाचघटस्य तस्य घटते दीर्घोयमेको गुणः ।
यत्तस्मिन्निहितप्रकाशि न गलत्यायाति न म्लानतां धत्ते नापचयं चमत्कृतिवचो गीर्वाणगङ्गापयः ॥४८३॥
एकषष्टिमतिक्रम्य वर्षान्भूपतिरायुषः । सपत्नीकः पुरारातिगौरीसायुज्यमासदत् ॥४८४॥

---

४५९. ¹) A₂ gloss विश्वं. ४६१. ¹) उत्थि supplied by A₂ in space left by A₁.—²) A₂ gloss आत्ता गृहीता लता यया.—³) A₂ gloss हास्त्यस्तं. ४६६. ¹) A₂ gloss विशीर्णाः रुग्णाः स्कन्धाः अंसशिरांसि शिबिकावाहनार्थं यैः तेषां. ४६०. ¹) Thus corr. by A₂ from A₁ पवबन्धपथि°. ४६९. ¹) Thus corr. by A₂ from A₁ °गमाशया. ४८३. ¹) A₂ gloss चेतोरूपे काचघटे स्थिता इति प्रसिद्धेः.

485 अथास्थीनि समादाय चतुर्थे दिवसे तयोः । पुत्रास्तन्वङ्गराजस्य सर्वे गङ्गां प्रतस्थिरे ॥४८५॥
पैतामहेन कोशेन परिवारेण चान्वितः । पित्रा विरोधं जग्राह हर्षस्तु विजयेश्वरे ॥४८६॥
आये पिता पुरवरे[1] पिता श्रीविजयेश्वरे । तस्मिन्पुत्रस्तु तत्रासीत्पिता तु नगरान्तिके ॥४८७॥
ततोतिव्ययिनं पुत्रं दरिद्रो नीतिमान्पिता । अभ्यर्थ्यानर्थभीतश्च संधिं दूतैरयाचत ॥४८८॥
स तैरलङ्कृहायातैर्दत्तशिक्षो युक्तवादिभिः । राजपुत्रः समं पित्रा संधिं निन्ये कथंचन ॥४८९॥
490 रक्षां पैतामहे कोशे शरीरे चात्मजन्मने । प्रतिभूभाव जनकः कृतप्रत्ययदेवतः ॥४९०॥
नृपतिः पुत्रमानेतुं विशतो विजयेश्वरम् । दृष्टिः क्रुष्टैर्गृहैर्दग्धा श्रुतिश्च जनगर्हया ॥४९१॥
स पीतकोशः संगृह्य तनयं प्राविशत्पुरम् । कोशं चास्थापयन्मुद्रां दत्त्वा तदभिधाङ्किताम् ॥४९२॥
अत्रान्तरे तस्य राज्ञो धार्मिकी धीरजायत । दारिद्र्यच्छेदिनी धर्म्या धनबुद्धिश्च सर्वतः ॥४९३॥
तनयो नयनाख्यस्य कल्यः सेल्यपुरौकसः । कुटुम्बिनो जय्यकाख्यः क्रमाड्डामरतामगात् ॥४९४॥
495 स्वलोत्पत्तिः स दिग्देशविक्रीताश्वो वणिज्यया । संभृतार्थः शनैर्लुब्धो धनेशस्पर्धितां दधे[2] ॥४९५॥
साधं कोशं खनित्वा स नित्यं दीनारराशिभिः । पूरितायाः क्षितेः पृष्ठे बहून्व्रीहीनवापयत् ॥४९६॥
दीनारन्यसनं भृत्यैः कारयित्वा प्रतिक्षपम् । बहवो भेदभीतेन तेन गूढं निपातिताः ॥४९७॥
स भाङ्गिले लब्धुमिच्छन्बलेकस्मात्पलायिते । द्राक्षालतानिरुद्धाश्वो हतः केनापि पत्तिना ॥४९८॥
तदीयेनोपलब्धेन धनेन वसुधातलात् । पर्याप्तेनात्यजद्राजा यावदायुर्दरिद्रताम् ॥४९९॥
500 समुत्थ क्षाल्यमानेषु नदीतीरे[1]ष्वहर्निशम् । कलुषाम्भा बहून्मासान्वितस्ता समपद्यत ॥५००॥
शान्तोपभोगरहिताः काले क्लेशेन भूयसा । अन्यार्थमर्थान्रक्षन्ति चित्रं लुब्धा महाशयाः ॥५०१॥
प्राणान्धारयते निपीय मरुतः शेते तमोन्धे बिले संभोगे परदत्तमिच्छति पटं नमस्त्रपाशान्तये ।
विस्तार्येति कदर्यतामहिरयस्त्वन्यस्य हेतोर्निधीनान्यः कोपि परं परोपकृतिषु प्रौढोस्ति लुब्धं विना ॥५०२॥
अन्यैश्च बहुभिर्मार्गैर्नद्यः सिन्धुमिवाविशन् । नानार्थसंपदस्तास्तां[1] भाग्यभाजं महीभुजम् ॥५०३॥
अर्था भाग्योदये जन्तुं विशन्ति शतशः स्वयम् । दिग्भ्योभ्युपेत्य सर्वाभ्यः सायं तरुमिवाण्डजाः ॥५०४॥
स्रोतांसि प्रबलत्वमेत्य वसुधां मूलेषु पुष्णन्त्यधो व्योम्नोम्भः पतति त्यजन्ति हरितो वारि प्रणालीमुखैः ।
505 इत्थं शुष्कसरः पयोदसमये संपूर्यते सर्वतो भाग्यानामुदये विशन्ति शतशो द्वारैर्न कैः संपदः ॥५०५॥
जनरक्षणदाक्षिण्ये ततः[1] पितुरिवान्वहम्[2] । कुशला कलशस्यासीत्प्रजापुण्योदयैर्मतिः ॥५०६॥
स्वयं वणिगिवार्थानां गणनाकुशलोपि सः । विवेक्ता सत्पथत्यागे मुक्तहस्तः सदाभवत् ॥५०७॥
उपस्थितौ भाविनौ च पश्यन्नायव्ययौ स्वयम् । अन्तिकान्नात्यजद्भूर्जखटिकादि नियोगिवत् ॥५०८॥
तस्य स्वरूपमूल्येन रत्नादि क्रीणतः स्वयम् । नाशकन्वञ्चनां कर्तुं केपि विक्रयकारिणः ॥५०९॥
510 त्रिवर्गं सेवमानः स विभज्य समयं सुखी । मध्याह्नादूर्ध्वमभवद्दृश्यः सर्वकार्यिणाम् ॥५१०॥
तस्य स्वेषां परेषां च कृत्यमन्विष्यतश्चरैः । अज्ञातः स्वप्नवृत्तान्तः प्रजानामभवद्यदि ॥५११॥

---

४८७. [1]) Thus emended with G; A पुत्रवरे. ४९५. [1]) शस्प supplied by $A_2$ in space left by $A_1$.—[2]) Thus corr. by $A_2$ from $A_1$ धेत्तामवाप्. ५००. [1]) Emended; A नदीना°. ५०३. [1]) Thus corr. by $A_2$ from $A_1$ °स्तास्ता. ५०६. [1]) ततः supplied by $A_2$ in space left by $A_1$.—[2]) Thus corr. by $A_2$ from $A_1$ °वान्वितम्.

स्ववेश्मेव गृहस्थस्य व्यायतश्चास्य मण्डलम् । जनो जनपदे जातु न कश्चिद्व्यमस्पृहत् ॥५१२॥
कौलीनचकितो राजा कुर्वन्कण्टकशोधनम् । प्रकटं नात्यजद्दण्डं चौरेभ्योपि स जातु चित् ॥५१३॥
न तस्यार्थः कोपि नष्टो मन्त्रिणो यमयोजयन् । मन्त्रिणां स पुनश्चक्रे नष्टस्वार्थस्य योजनम् ॥५१४॥
विवाहयज्ञयात्रादिमहोत्सवशताकुलः । नित्यप्रहृष्टो निर्दैन्यस्तद्राज्ये ददृशे जनः[1] ॥५१५॥ 515
तेन नीतिविदाक्रान्ताः क्ष्माभुजः क्षित्यनन्तराः । आहाराचरणेप्यासंस्तदभ्यर्थाम्विनाक्षमाः ॥५१६॥
तन्वङ्गस्थस्थक्कनादींस्तीनायातान्दिगन्तरात्[1] । व्यथितैकानुजान्मल्लप्रमुखान्गुङ्गजानपि ॥५१७॥
अप्रीणयद्बन्धुभृत्यान्स भव्याभिर्विभूतिभिः । कलाभिरमृतार्द्राभिः सोमः[1] सुरपितॄनिव ॥५१८॥ युग्मम् ॥
अवाप्तपरिपाकोपि दौःशील्येन न भूपतिः । कुदैशिकोपदिष्टेन दुष्टाचारेण चोज्झितः ॥५१९॥
टक्केन बुल्लियाख्येन कन्यकाः समुपाहृताः । क्रीतास्तस्य तुरुष्केभ्यो[1] नानादिग्देशसंभवाः ॥५२०॥ 520
स ताभिः परदारैश्च रूपलोभादुपाहृतैः । अवरोधपुरंध्रीणां ह्रासप्रतिमढौकयत् ॥५२१॥
बह्वीः कामयमानस्य योषितः प्रतिवासरम् । मत्स्ययूषादिभिर्वृष्यैर्[1]नास्य पुष्टिरहीयत ॥५२२॥
महासमयपूजासु व्यग्रः स गुरुभिः समम् । महाचरूणामाहारं नीतिमुत्सृज्य चाकरोत् ॥५२३॥
एवं शबलकृत्येन पुरं तेन नवीकृतम् । निर्दग्धे विजयक्षेत्रे शिलावेश्म न[1] शूलिनः ॥५२४॥
विजयेशशिलावेश्ममौलावातपवारणम् । नृपोम्बरशिरश्चुम्बि जाम्बूनदमयं व्यधात् ॥५२५॥ 525
व्ययस्थितिं चानपायां व्यधत्त त्रिपुरेश्वरे । पिनाकिनश्च प्रासादं स स्वर्णामलसारकम् ॥५२६॥
ततः सत्कर्मकुशलश्चकार कलशेश्वरम् । निःसंख्यहाटकघटीपटलाङ्कशिलागृहम् ॥५२७॥
कलशेशोपरि छत्रं चिकीर्षोः काञ्चनाञ्चितम् । तुरुष्कदेशजः शिल्पी राज्ञोभ्यर्णमुपाययौ ॥५२८॥
सहस्रैर्भूरिभिर्हेमभस्मसिद्धिं वदन्कलाम् । स छादयन्निजां ताम्रे काञ्चनारोपणं विदन् ॥५२९॥
कानिचिद्दिवसान्यासीत्प्राप्नुवन्नृपसत्क्रियाम् । ततोतितीक्ष्णप्रज्ञेन नोनकाख्येन मन्त्रिणा ॥५३०॥ 530
अभ्यूह्य शिक्षितकलो विलक्षोगाद्यथागतम् । तच्च छत्रं ययौ सिद्धिमत्यल्पैरेव काञ्चनैः ॥५३१॥
अनन्तेशाभिधं बाणलिङ्गमन्याश्च भूपतिः । प्रतिष्ठा विविधाश्चक्रे स शक्राधिकवैभवः ॥५३२॥
नृपे सहजपालाख्ये शान्तिं यातेभ्यषिच्यत । ततः संग्रामपालाख्यो राजपुर्यां[1] तदात्मजः ॥५३३॥
राज्यं जिहीर्षुर्बालस्य पितृव्यस्तस्य भूपतेः । भेजे मदनपालाख्यो बलीयानुद्यमं महान् ॥५३४॥
तद्भयाच्छरणं प्रायान्नृपं साहायकार्थिनी । स्वसा संग्रामपालस्य[1] जस्सराजश्च ठक्कुरः ॥५३५॥ 535
कृतप्रसादो नृपतिः साहायककृते ददौ । तयोः पश्चाज्जयानन्दं भूरैर्बिज्जादिभिः समम् ॥५३६॥
तत्र विद्रावितामित्रः[1] स स्फूर्जन्क्रान्तमण्डलः । संग्रामपालामात्यानां कार्यान्ते शङ्कुतां* ययौ ॥५३७॥
काकुन्तो गमनं तस्य दत्त्वा तास्ता विभीषिकाः । ते त्रासमैच्छन्नाधातुं स वीरो न त्वकम्पत ॥५३८॥
मतिं राजपुरीयाणामसावेतामदादिति । शङ्कमानेन तेनाथ विज्जे मन्युरुपाहृतः ॥५३९॥

५१५. [1]) Thus corr. by $A_1$ from जनैः. ५१७. [1]) Doubtful; thus A. ५१८. [1]) नः supplied by $A_3$ in space left by $A_1$. ५२०. [1]) Thus $A_3$; $A_1$ तुरुष्केन. ५२२. [1]) $A_3$ gloss वृष्यैः वाजीकरणैः. $A_2$ quotes: वृष्यकल्पतरौ पारिभद्ररसेनैव हिङ्गुलं वाममाक्षकम् । मर्दयित्वा पारदस्तत्पातयेत्पूर्वयुक्तितः । योजयेत्सर्वयोगेषु तारकञ्चुकवर्जितम् ॥. ५२४. [1]) न supplied by $A_3$ in space left by $A_1$. ५३३. [1]) $A_3$ gloss राजविद् इति भाषया. ५३५. [1]) Thus corr. by $A_3$ from $A_1$ संग्रामराजस्य. ५३७. [1]) $A_3$ gloss जयानन्दः.—* Thus emended with G *sec. manu*; A शङ्कतां.

540 तैस्तत्र हस्तद्रविणैः प्रार्थितोथ महामतिः । रक्षापदेशात्स्वं सैन्यं स्थापयित्वा न्यवर्तत ॥५४०॥
एवं राजपुरीं तस्मिन्स्वीकृत्यान्तिकमागते । तुतोष कार्यमर्मज्ञः प्राज्ञः कलशभूपतिः ॥५४१॥
क्रमाद्राजायमानेषु बिज्जादिष्वथ पस्पृशे । आमयेन जयानन्दो दैवात्समयहेतुना ॥५४२॥
स्वास्थ्यवार्तोपलम्भाय भूपतिं गृहमागतम् । वाच्यमस्ति रहः किंचिदित्यूचे स कथान्तरे ॥५४३॥
निर्यातेष्वथ सर्वेषु किंचिन्नैवाब्रवीद्यदा । तदा ताम्बूलदित्साव्याजाद्बिज्जो विनिर्ययौ ॥५४४॥
545 आप्तेनोक्तोपि निर्गच्छन्किं प्रयासीति भूभुजा । मन्त्रिणा नैत्य स प्राज्ञो बहिरेव व्यलम्बत ॥५४५॥
जयानन्दोभ्यधाद्भूपमुक्त्वा राजपुरीकथाम् । व्यक्तं नास्त्येव ते राज्यं बिज्जे वृद्धिमुपागते ॥५४६॥[1]
आदीयमानाद्बिज्जेन कार्येभ्यो वेतनादपि । दर्शयामास गणनां बहुमूल्यां महीभुजे ॥५४७॥
प्राप्तः कलुषतां राजा प्रयातः स्वगृहांस्ततः । याचितो गमनानुज्ञां बिज्जेनेङ्गितवेदिना ॥५४८॥
निषेधमिव दाक्षिण्यलेशानिर्बन्धकारिणः । तस्यानुज्ञां ददौ गन्तुं सान्तस्तोषो महीपतिः ॥५४९॥
550 लब्धादेशो गृहान्गत्वा सर्वोपकरणैः समम् । प्रस्थाप्य सोग्रतो भ्रातॄनाप्रष्टुं नृपतिं ययौ ॥५५०॥
राजधर्मगभीरत्वक्रूरयोः स्वामिभृत्ययोः । काचिदेव क्षणे तस्मिन्नेष्टाभूदद्भुतावहा ॥५५१॥
न यत्प्रभुः प्रियं भृत्यं गमनात्स न्यवर्तयत् । उपालेभे समन्युश्च न यद्भृत्यः प्रियं प्रभुम् ॥५५२॥
सहोत्थितेन कतिचित्पदानि सह भूभुजा । चिरं कृत्वा कथां नीचैर्हसन्बिज्जो विनिर्ययौ ॥५५३॥
जिन्दुराजं हलधरो मुमूर्षुर्दूषयन्यथा । तथा बिज्जं जयानन्दः स व्यवारोपयत्पदात् ॥५५४॥
555 तल्लक्ष्मीमात्रशेषां क्ष्मां कृत्वा गच्छन्निबध्यताम् । कृतार्थो बिज्ज इत्युक्तिं नासहीन्मन्त्रिणां नृपः ॥५५५॥
निवर्तयिष्यति क्ष्माभृत्प्रियतं गमनादमुम् । इत्याशयान्वगाद्बिज्जं राजवर्जं जनोखिलः ॥५५६॥
आस्कन्दं शङ्कमानोस्माद्बिज्जाद्राजा बलोर्जितात् । नृगस्कन्देपि चकितो निर्निद्रः पञ्च यामिनीः ॥५५७॥
तस्मिञ्छूरपुरायाते[1] निवृत्तेष्वनुगन्तृषु । निवृत्तशङ्कस्तां शङ्कां प्रादुश्चक्रे स मन्त्रिणाम् ॥५५८॥
ते तदाकर्ण्य यं मन्त्रं बिज्जार्थहरणेब्रुवन् । तस्याविधाने भूभर्तुरमन्यन्त नयज्ञताम् ॥५५९॥
560 बिज्जादयस्तु निर्द्रोहा यं यं देशमशिश्रयन् । तत्र तत्रैव पूज्यत्वं रत्नानीव प्रपेदिरे ॥५६०॥
बिज्जोधिकं प्रभुत्वेपि देवतस्येव भक्तिमान् । पश्चात्कलशदेवस्य सत्यंकारः सदाभवत् ॥५६१॥
एवं निर्वास्य बिज्जादीनचिरावाप्तवैभवः । क्षिप्रं सूर्यमतीशापाज्जयानन्दः क्षयं ययौ ॥५६२॥
राज्ञो विरोधकृद्वक्तुं शापस्याव्यभिचारिताम् । प्रमयं जिन्दुराजोपि तस्मिन्नेव क्षणे ययौ ॥५६३॥
तेपि बिज्जादयः क्षिप्रमचिरावाप्तसंपदः । प्रापुः शापोचितं सर्वे प्रमयं गौडमण्डले ॥५६४॥
565 आकस्मिकेथ प्रमये[1] बिज्जः प्रमयमाययौ । सुदीर्घबन्धनक्लेशं प्रापुस्तदनुजा अपि ॥५६५॥
पलायितेषु कारायास्तेषु व्याजेन पाजकः[1] । हतस्तदनुजाः[2] शेषा भुक्तक्लेशाः क्षयं ययुः ॥५६६॥
द्विजास्तद्द्वैधकाराणां[1] नानशन्मदनादयः । अदीर्घेणैव कालेन दुरन्तैर्दैर्भविष्यते[2] ॥५६७॥
जयानन्दसहायोथ तत्पुत्रान्परिपालयन् । सर्वाधिकारी भूपेन वामनाख्यो व्यधीयत ॥५६८॥

---

५५१. 1) Thus corr. by later hand from A1 राज्य°. ५५८. 1) A2 gloss ढूरपुर. ५६५. 1) A2 gloss आकस्मिके प्रमये मारीवेष इत्यर्थः. ५६६. 1) Thus A1; A2 R G पाजका:.—2) Thus A1; A2 ततस्त°. ५६७. 1) Thus A1; A2 द्विजास्तु द्वैध°.—2) Thus corr. by A2 from A1 —र्हैस्तैर्भावि°.

यस्य तास्ता व्यवहृतीर्नीतिज्ञस्याद्भुतावहाः । वर्णयन्ति वयोवृद्धा गोष्ठीष्वद्यापि[1] धीमताम् ॥५६९॥
ग्रामानवन्तिस्वाम्यादिभोग्यानादस्य लुब्धधीः । राजा कलशगञ्जाख्यं कर्मस्थानं विनिर्ममे ॥५७०॥ 570
मन्त्रिणे नोनकायासौ धनोत्पादविवेकवान् । क्रौर्यभीतो न प्रादात्तं जनरक्षणदक्षिणः ॥५७१॥
मन्त्रिणो राजकलशापत्यान्यस्वन्तरङ्गताम् । लेभिरे क्ष्माभुजः पार्श्वे प्रशस्तकलशादयः ॥५७२॥
सुताः स्वाच्छन्द्यविवशा धीराः संध्यादिसंभयाः । युक्त्या निदधिरे राज्ञा निबद्धस्वाधिकारिणः ॥५७३॥
पुनर्मदनपालेन क्रान्ते राजपुरीपतौ । साहायकाय व्यसृजत्सेनान्यं बप्पटं नृपः ॥५७४॥
प्रतापैर्भूपतेस्तेन भृत्यांशेनापि[1] निर्जितः । बद्ध्वा मदनपालोपि कश्मीरान्संप्रवेशितः ॥५७५॥ 575
भ्राता वराहदेवस्य कन्दर्पाख्यो महीभुजा । कृतो द्वाराधिपो वीरो विदधे डामरक्षयम् ॥५७६॥
बभूव जिन्दुराजात्स शिक्षितो नयविक्रमी । भूम्यनन्तरसामन्तमुकुटस्पृष्टशासनः ॥५७७॥
स राजपुर्यां विजयी द्वारं परमकोपनः । क्षणे क्षणेत्यजद्राज्ञा प्रसाद्य माहितः स्वयम् ॥५७८॥
मदनः[1] क्षितिपालेन प्रापितः कम्पनेशताम् । लब्धप्रकर्षान्क्षौपादीन्डामरान्बहुशोवधीत् ॥५७९॥
सेवावशीकृतः श्येनपालं स[1] नगराधिपम् । चक्रे विजयसिंहाख्यं हताशेषमलिम्लुचम् ॥५८०॥ 580
कन्दर्पोदयसिंहाद्यैः[1] प्रहिते लोहरे सकृत् । राजा भुवनराजस्य दूरं निःसारणं व्यधात् ॥५८१॥
कीर्तिराजस्य तनयः स च नीलपुरप्रभोः । लब्ध्वा भुवनमत्याख्यां रिपोर्भिक्षाश्रयोभवत् ॥५८२॥[1]
कार्यप्रतिभवे कर्तुं प्रवृत्तिं माहितोभवत् । हृत्वा विजयसिंहाद्यो नृपेण नगरेशताम् ॥५८३॥
गुङ्गात्मजः स मल्लोथ तेन द्वारपतिः कृतः । राज्ञां मौलिमणिस्थाने स्वप्रतापमरोपयत् ॥५८४॥ युग्मम् ॥
शौर्यं निष्परिवारस्य पार्थस्योत्तरगोग्रहे[1] । उत्तरासंप्रवेशो[2] वा श्रुतं[3] मल्लस्य मानिनः ॥५८५॥ 585
पञ्चाशैस्तुरगैर्येन कृष्णां तीर्त्वा व्यपाहरत् । राज्यं वाजिगजैः सार्धमभयाख्यस्य भूभुजः ॥५८६॥
एवं वशीकृतभुवो भूपतेर्नयवेदिनः । सममेवाष्टभूपालास्त्रिषष्टेब्दे त्रिगम्पुरम् ॥५८७॥
कीर्तिर्न्यब्दपुराधीशश्चाम्पेयो भूभृदासटः । तुक्कात्मजस्तु कलशो वल्लापुरनरेश्वरः ॥५८८॥
राजा संग्रामपालाख्यः स च राजपुरीपतिः । उत्कर्षो लोहरोर्वीभृद्वीर्वशो मुद्गजो नृपः ॥५८९॥
गाम्भीरसीहः कान्देशः काष्ठवाटधराधिपः । श्रीमानुत्तमराजोपि राजानमुपतस्थिरे ॥५९०॥ तिलकम् ॥ 590
राजलोकः प्रवृद्धोपि घने जनपदेभ्रमन् । दुर्लक्ष्यो वार्षिकसरित्पूरो वारिनिधाविव ॥५९१॥
तस्मिन्क्षणे शिलीभूतवितस्तासलिले नृपैः । क्षीणक्षणेप्यसंक्षीणं सुखं तैरन्वभूयत ॥५९२॥
मनसापि हि भूपाला यत्ते किंचिदचिन्तयन् । प्राप्तमेव पुरेपश्यन्नामनेन तदाहृतम् ॥५९३॥
कौशलं मन्त्रिणस्तस्य रराजेतरदुर्लभम् । निमित्तं तदसंभ्रान्तो नित्यवद्योत्सवाहयत् ॥५९४॥
पार्थिवेष्वथ यातेषु मल्ले कार्यपराङ्मुखे । क्षितिपालेन कन्दर्पो द्वारं स्वीकारितः पुनः ॥५९५॥ 595
अभिमानधनो मन्त्री कृतारब्धैर्निजैर्धनैः । दुर्गं स स्वापिकं नाम युक्त्या दुर्ग्रहमग्रहीत् ॥५९६॥
स प्रविष्टोपि नगरं खिन्नः केनापि हेतुना । पार्थिवाभ्यर्थ्यमानोपि कार्यं नैवाग्रहीत्तदा ॥५९७॥

---

५६९. [1]) पि supplied by $A_2$. ५७५. [1]) Thus corr. by $A_3$ from $A_1$ °शेनानि. ५७९. [1]) $A_3$ gloss मदनपालः. ५८०. [1]) स supplied by $A_3$. ५८१. [1]) Thus corr. by $A_3$ from $A_1$ कन्दर्पोभ°. ५८२. [1]) Thus corr. by $A_3$ from $A_1$ °रिङ्खाश्रयी°. ५८५. [1]) $A_3$ gloss अर्जुनस्य.—[2]) $A_3$ gloss उत्तरो विराटपुत्रः.—[3]) Thus $A_1$. $A_3$ द्रुतं.

तदा प्रशस्तकलशो[1] नित्यं दूत्यं समाचरन् । तदुक्तिसक्तोक्तिसंततः संस्पृशत्यभिमानिताम् ॥५९८॥
निजभिक्षातिभूयस्त्वा भूरीन्संगृह्य शाखिनः । तत्पदे रत्नकलशं स्वभ्रातरमकारयत् ॥५९९॥
600 सोर्थैः क्रीतमथोप्यासीन्न[1] कन्दर्पसमः[2] क्वचित् । किं चित्रोल्लिखितः सिंहः सत्यसिंहक्रियां स्पृशेत् ॥६००॥
ततः क्रमेण भूभर्त्रा भृत्यरत्नं कथंचन । राजस्थानाधिकारे स नगरे याहितः पुनः ॥६०१॥
अतिताडनतश्चौरे विपन्नेऽथ कृपाकुलः । त्यक्त्वा तमप्यधीकारं विषण्णो जाह्नवीमगात्[1] ॥६०२॥
पटान्तकृतसंरोधस्ताडयित्वा करं प्रभोः । कोपावेशान्तरं यातस्तं प्रत्यास्ते[1] स्म मन्युमान् ॥६०३॥
अत्यन्तखेदितोप्यासीदानीतस्यान्तिकं पुनः । दर्पं हर्तुं नृपस्तस्य संनद्धो न तु जीवितम् ॥६०४॥
605 इत्थं पुरुषसिंहानां प्रौढदार्ढ्यो विलोकवान् । आरोहमवरोहं च सोन्तरज्ञः क्षमापतिः ॥६०५॥
उपाङ्गगीतव्यसनं नर्तकीसंग्रहादरः । देशान्तरोचितं राज्ञा तेनैवेह प्रवर्तितम् ॥६०६॥
ततो जयवनोपान्ते निरन्तरमहागृहम् । स्वनामाङ्कं पुरं कर्तुं प्रावर्तत विशांपतिः ॥६०७॥
महामहारप्रासादमहागृहपरंपराः । सन्तोयोपवनास्तत्र ययुः सिद्धिं सहस्रधा ॥६०८॥
अत्रान्तरे राजसूनुर्हर्षः सोत्कर्षपौरुषः । गुणैर्लेभे प्रकाशत्वमन्यभूपालदुर्लभैः ॥६०९॥
610 सोशेषदेशभाषाज्ञः सर्वभाषासु सत्कविः । कृत्स्नविद्यानिधिः प्राप ख्यातिं देशान्तरेष्वपि ॥६१०॥
लुब्धेन पित्रा संत्यक्ता जना नानादिगागताः । गुणशौर्योज्ज्वलास्तेन गृहीताः कृतवेतनाः ॥६११॥
अपर्याप्ते पितृकृते वेतने व्ययशालिनः । एकाहान्तरितं तस्य भोजनं त्यागिनोऽभवत् ॥६१२॥
पितरं गायन इव व्यक्तं गीतैः स रञ्जयन् । भर्तव्यभरणं चक्रे तद्दत्तैः पारितोषिकैः[1] ॥६१३॥
उद्गायति पुरस्तस्मिन्कदाचिदथ पार्थिवः । सभ्येषु प्रीयमाणेषु शौचायोत्थाय निर्ययौ ॥६१४॥
615 तेन प्रसङ्गभङ्गेन जाततेजोवधः सुधीः । क्षुभ्यन्[1]वैलक्ष्यकोपाभ्यां कुमारः[2] क्षितिमैक्षत ॥६१५॥
प्रभुर्वीतक्षान्तिः सुहृदतिशठः स्त्री परुषवाक्सुतो गर्वोन्नद्धः परिजन उदास्तप्रतिवचाः ।
इयान्सोढुं शक्यो ननु हृदयदाही परिकरो न तु श्रोतावज्ञालुलितनयनान्तं परिभवन् ॥६१६॥
पितुरेव तदा भृत्यो विश्वावट्टाभिधो विटः । शाधि राज्यं निहत्यैमं नर्मणेत्युवाच तम् ॥६१७॥
अधिक्षिपन्स तं रोषाज्ञानेनोक्तमसांप्रतम् । इत्यासन्नेन हसता धर्मटेनाप्यकथ्यत[1] ॥६१८॥
अन्ये भोगेच्छवश्छन्नाः कुमाराननुगाम्पितुः । स्नेहं प्रदर्श्य स्वीकुर्युर्वेश्या कामिसखीरिव[1] ॥६१९॥
620 पुनः सभां संप्रविष्टस्तं पिता पर्यतोषयत् । प्रीतिदायैस्ततस्तैस्तैः साधुवादैश्च मानिनाम् ॥६२०॥
अन्येद्युस्तु पितुः पार्श्वात्स भुक्त्वा स्वगृहान्गतः । अभ्येत्य विश्वावट्टेन तदेव जगदे रहः ॥६२१॥
उपपन्नं तदत्युक्त्वा तेनाभीक्ष्णं निषेधता । निर्बन्धमपि हस्तेन सोथ कोपादताड्यत ॥६२२॥
लब्धाभिघातं रुधिरं वमन्तं घ्राणवर्त्मना । तं वीक्ष्य सोभिजातोभूत्सदाक्षिण्यो नृपात्मजः ॥६२३॥
भृत्यैः प्रक्षालयन्नस्रं तस्येदृक्पाप्मनो भवेत् । उक्तेनापीति कथयन्स्मित्वा वासांस्यदापयत् ॥६२४॥

---

५९८. [1]) Emended; A R G °कलशं. ६००. [1]) Thus $A_1$; $A_2$ मीत?.—[2]) Thus corr. by later hand from $A_1$ कन्दर्पः समः. ६०२. [1]) जाह्न supplied by $A_2$ in space left by $A_1$. ६०३. [1]) Thus corr. by $A_2$ from $A_1$ प्रस्थास्ते. ६०४. [1]) Thus $A_1$; $A_2$ °खेदितस्त्वासीदा°. ६१३. [1]) Emended; A °तोपकैः. ६१५. [1]) Thus $A_1$; $A_2$ क्षुभ्यद्वै°.—[1]) Thus corr. by $A_2$ from $A_1$ कुमाराः. ६१८. [1]) Emended; A धर्मटेना°. ६१९. [1]) Thus $A_1$; $A_2$ कामी स°.

अनिच्छोरपि तस्येच्छा दानान्तेनान्वमीयत । दुःशीलेनान्यकामिन्याः स्मितमात्रादिव स्पृहा ॥६२५॥ 625

असकृत्कृतयत्नः स ततः कालेन भूयसा । तं प्रैरयत्तत्र कृत्ये मध्ये स्वीकृत्य धम्मटम् ॥६२६॥

स रोहद्रोहसंकल्पजन्मना पाप्मना श्रितः । संमन्त्र्य पितरं हन्तुं तीक्ष्णान्प्रायुङ्क्त सर्वतः ॥६२७॥

शश्वत्स गोचरीभूतस्तेषां स्नेहलवस्पृशाम् । न घातितः सूनुना च वर्जिता न च तत्कथा ॥६२८॥

आप्तत्वं तीक्ष्णवर्गेथ प्रतिभेदभयाद्गते । तां त्रिदशावह एवाशु वार्तां राज्ञे न्यवेदयत् ॥६२९॥

बुद्ध्वा तद्राजपुत्रस्तस्मिन्नहनि जातभीः । भोक्तुं नागात्पितुः पार्श्वमपि दूतैः कृतार्थनः ॥६३०॥ 630

सोपि तस्मिन्ननायाते तत्रार्थे शान्तसंशयः । दिने तत्र मनस्तापान्नाभुङ्क्त सपरिच्छदः ॥६३१॥

सभ्रातृकस्य प्राप्तस्य मातर्दुःखं न्यवेदयत् । सुचिरं थक्कनस्याङ्के शिरो विन्यस्य सोरुदत् ॥६३२॥

उक्त्वा च धम्मटोदन्तं वक्तुं तस्य समर्पणम् । विधेहीत्यभ्यधात्तापि तं भङ्गीभणितिक्रमैः ॥६३३॥

न कृताधिगमावावां कृत्यस्यास्येत्युदीर्य तम् । अभाषेतां भ्रातुरर्थे पुनस्तन्वङ्गनन्दनौ ॥६३४॥

त्वत्प्रसादबलाद्राजन्नापत्त्राणदीक्षितौ । यावावां तत्प्रवेशार्थं व्यक्ताहारं निशास्वपि ॥६३५॥ 635

कथं नु पृथिवीपाल प्राप्ते प्राणात्ययक्षणे । निर्दोषो वा सदोषो वा ताभ्यां संत्यज्यतेनुजः ॥६३६॥ युगलकम् ॥

स्वामिद्रोहापवादश्च भवेत्तद्रक्षणाद्ध्रुवम् । देशत्यागं तदुत्सृज्य शरणं नान्यदावयोः ॥६३७॥

इत्यादि संभाष्य तयोः पादन्यस्तोत्तमाङ्गयोः । रुदित्वा गमनानुज्ञां कथंचित्पार्थिवो ददौ ॥६३८॥

पथि कश्चिदमुं हन्यान्मध्यीकृत्येति धम्मटम् । तौ विनिर्जग्मतुर्देशात्ततः सबलवाहनौ ॥६३९॥

तन्वङ्गजेषु यातेषु विविक्तीकृतमन्दिरः । सुतमानीय नृपतिः सान्त्वयन्निदमब्रवीत् ॥६४०॥ 640

आसंसारं जगत्यस्मिन्सर्वतः ख्यातकीर्तिना । अनकेनेव जन्यस्यं श्रमिकल्पाद्यते जनैः ॥६४१॥

पुत्र शीतांशुनेवात्रिं दिग्द्वीपख्यातकीर्तिना । भवता तु सुपुत्रेण मां जानात्यखिलो जनः ॥६४२॥

स त्वं गुणवतामग्र्यो निरर्गलयशा भवन् । असाधुसेव्यमध्वानं वद कस्मान्निषेवसे ॥६४३॥

पैतामहं निजं चार्थं यत्न तुभ्यं समार्पयम् । तत्र हेतुमनाकर्ण्य नासूयां कर्तुमर्हसि ॥६४४॥

रिक्तः स्वेभ्यः परेभ्यश्च प्राप्नोत्यभिभवं नृपः । इति निर्ध्याय हि मया क्रियते कोशरक्षणम् ॥६४५॥ 645

पुरप्रतिष्ठां निष्पाद्य क्षिप्त्वा राज्यधुरं त्वयि । वाराणस्यां गमिष्यामि नन्दिक्षेत्रेथ वा पुनः ॥६४६॥

तद्राज्यकोशयोः स्वामी बुभुक्षुर्न चिराद्भवान् । अतितात्पर्यतः कस्मादनार्योचितमीहसे ॥६४७॥

संभाव्यते त्वयि न तद्यन्ममावेदितं खलैः । यथार्थकथनात्तस्मात्कौलीनं विनिवार्यताम् ॥६४८॥

विशुद्धये करोत्वेष स्वकृतस्याप्रतिश्रवम् । कोशादितीर्ष्यस्तद्राजा साभिप्रायं वचोभ्यधात् ॥६४९॥

अपलापवचोमात्रं निनीषुस्तस्य हेतुताम् । जगत्प्रत्यायने सोभूत्तस्मात्क्षान्तिसमुत्सुकः ॥६५०॥ 650

हर्षस्तु साधुवादैस्तत्पितुः संपूज्य भाषितम् । वक्ष्याम्याप्तमुखे तत्त्वमित्युक्त्वा निर्ययौ बहिः ॥६५१॥

सामान्यप्रेरणाद्देवा चिकीर्षाभूदिति ब्रुवन् । स पितृप्रहितं दूतं ह्रीतः स्वावसथं ययौ ॥६५२॥

---

६२५. ¹) Thus corr. by $A_1$ from $A_1$ दुःशीलान्य°. ६२७. ¹) ह supplied by $A_2$. ६३०. ¹) Thus corr. by $A_2$ from $A_1$ °पुत्रस्तस्त°. ६३१. ¹) $A_1$ तत्रार्थेऽशान्त°. ६३३. ¹) Emended; A धम्मटो°.—²) Emended; A युक्ता. ६३४. ¹) $A_2$ gloss धम्मटस्य. ६३५. ¹) यावावां तत्प्रवेशा supplied by $A_2$ in space left by $A_1$. ६३९. ¹) Emended; धम्मटम् supplied by $A_2$ in space left by $A_1$. ६४१. ¹) $A_4$ gloss पुत्रस्य. ६४४. ¹) $A_4$ gloss अनन्यदेवसम्बन्धिनं.—²) Emended with C; A समर्पयम्. ६४६. ¹) Thus R G C; A पुनः. ६५२. ¹) Emended; A सावसथं.

सुतं म्लानाननं वीक्ष्य पाणिभ्यां ताडयञ्छिरः । हा पुत्रेति वदन्राजा तस्यास्कन्दमदापयत् ॥६५३॥
हतेस्मिन्स्वशिरश्छिन्द्यामिति प्रोक्तवतः प्रभोः । निदेशाद्वेष्टयित्वैव तस्थुस्तद्वेश्म शस्त्रिणः ॥६५४॥
655 तीक्ष्णास्तु पिहितद्वाराः परिवार्य नृपात्मजम् । ऊचुः सुपरुषां वाचमेवं निश्चितमृत्यवः ॥६५५॥
अस्मान्घृणी प्रमादी च विरुद्धं कथा कारयन् । घातयित्वा दुराचार क्व जीवन्स्थातुमिच्छसि ॥६५६॥
रक्षिष्यति सुतं स त्वां स पिता रक्षितस्त्वया । ज्ञातेयं युवयोरस्ति वयमेव हताः पुनः ॥६५७॥
युध्यस्व मध्यगोस्माकं त्वां निहन्मोन्यथा वयम् । एवं सर्वप्रकारं ते व्यक्तं नास्त्येव जीवितम् ॥६५८॥
तां वार्तां भूपतेः श्रुत्वा व्याकुलस्याग्रतः स्थितः । हर्म्यान्तिकं दण्डकाख्यः प्रायान्निजमहत्तरः ॥६५९॥
660 तीक्ष्णैर्निजतया दत्तप्रवेशः स नृपात्मजम् । प्रहृत्योवाच मतिमानेनं सर्वान्विमोहयन् ॥६६०॥
क्षत्रियापुत्र जीवित्वा कल्पानल्पेतरानपि । कारणैरपि[1] गन्तव्यं नियमान्म्रियतेर्नृणाम् ॥६६१॥
तदेतस्मिन्समासन्ने मरणेव्यभिचारिणि । यदर्थं गृह्यते शस्त्रं स मानः पाल्यतां त्वया ॥६६२॥
कृतभुजः ख्यातयशा युवा सुक्षत्रियो भवान् । तदाहवविलम्बेन कार्यं किमिव पश्यसि ॥६६३॥
एतेषु सुसहायेषु मयि चाग्रेसरेधुना । विपत्तिर्विजयो वापि प्रतापिस्तव शोभते ॥६६४॥
665 तत्तिष्ठ नखकेशादियोजनं कारय द्रुतम् । वीरपट्टं बधानापि स्वःस्त्रीपरिणयस्रजम् ॥६६५॥
इत्युक्त्वा क्षुरकर्मार्थं राजपुत्रं स नापितम् । प्रावेशयत्पृच्छ्यमानस्तीक्ष्णैराभ्यन्तरं गृहम् ॥६६६॥
न्यस्तासिधेनुर्हर्षेण दत्तझम्पः क्षणात्स्वयम् । पश्चात्प्रविश्य[1] तद्वेश्म चक्रे सुनिहितार्गलम् ॥६६७॥
ततः स राजस्थानीयं तमारादब्रवीद्वचः । रक्षितो राजपुत्रोयं क्रियतां स्वोचितं त्वया ॥६६८॥
भूतग्रहादिभवमोषधिभिर्विरोधिजातं बलैः प्रहरणप्रभवं तनुत्रैः ।
निर्वाप्यते प्रतिभयं पृथिवीपतीनां सार्वत्रिकं तु रभसाद्भुवि बुद्धिवृद्धैः ॥६६९॥
670 तदन्तस्तुमुलं योधास्ततो राजकुलास्पदे । आरोढुमाययुर्वेश्महर्म्यादि प्रातिवेश्मकाः ॥६७०॥
तीक्ष्णा द्वारगृहस्थितं त्यक्त्वा नृपात्मजम् । यावन्निर्गन्तुमिच्छन्ति हन्यमाना युयुत्सवः ॥६७१॥
द्विजाः प्रसङ्गसांनिध्यान्मध्यपातं समाश्रिताः । तावद्विनिर्ययुर्वीरा निर्द्रोहा अभिमानिनः ॥६७२॥
ते निर्याताः सूर्यमतीगौरीशाश्रयिणो गृहात् । सदाशिवान्तिकं प्रापुर्घ्नन्तो युधि विरोधिनः ॥६७३॥
रक्ष्यमाणोपि भूभर्तुर्गिरा ज्ञातेयशालिनः । राजज्ञातिर्हतस्तेषु प्रथमं सहजाभिधः ॥६७४॥
675 द्विजस्तिमध्याभिधो वीरः पण्डितः शौर्यमण्डितः । रामदेवश्च केशी[1] च कर्णाटादिभटैर्हतः ॥६७५॥
केचित्त्यजन्तः शस्त्राणि स्वं घ्नन्तः केपि च स्वयम् । लेभिरे वधबन्धादि पापाः कापुरुषोचितम् ॥६७६॥
सितषष्ठ्यां सहस्यस्य चतुःषष्टे स वत्सरे । वैरं नीत्वा पितापुत्रौ विघ्नः कारितो द्विष्टैः ॥६७७॥
हठत्यागासक्तिः प्रिययुवतिसंस्मरणवचः खलासङ्गः पूर्वप्रणयपरिहारो जनयितुः ।
अमात्येन भ्रात्रा सममपरमात्राय कलहः कुमाराणां बुद्धिं पितरि विपरीतां प्रतनुते ॥६७८॥
एवं स खलसंगत्या कुमारो लब्धलाघवः । बन्धं कारागृहे प्रापदसुखानि सुखोचितः ॥६७९॥

---

६५५. [1]) $A_4$ gloss स्वकीया एव पूर्वं राजवधं प्रति प्रोत्साहिताः. ६६१. [1]) $A_2$ gloss कारणानि ब्रह्मादीनि पञ्च. ६६७. [1]) Fol. 166 of A ends with पश्चात्प्र; fol. 167 which ended with verse 688, is now lost. ६७५. [1]) Thus R; G केशव.

राज्ञी भुवनमत्यस्मिन्बद्धे माध्यस्थ्यसंविदि । स्थापिता मानिनी कण्ठच्छेदं कृत्वा जहावसून् ॥६८०॥ 680

रक्षिणो मन्त्रिणामाप्तांस्तस्य त्रिन्यस्य भूपतिः । प्राविशोत्कुपितान्भोगान्लुप्तस्नेहाद्दिने दिने ॥६८१॥

चक्रिकायामशक्तोऽयमिति संचिन्त्य भूभुजा । भृत्यः प्रयागनामास्य निजः पार्श्वान्न वारितः ॥६८२॥

नोनको हर्षमुद्दिश्य स्वैनान्यैश्च महीभुजम् । जीवितं लोचने वास्य कृष्येतामित्यभाषत ॥६८३॥

नृपः स शीलवैकल्ये पशुतुल्ये ह्रियं त्यजन् । रिपोरिव तनूजस्य चकमे कतिचित्प्रियाः ॥६८४॥

तासु श्वशुरवाल्लभ्यमवाप्य सुगलाभिधा । बभूव तुक्कभूभर्तुर्नप्त्री भर्तृवधार्थिनी ॥६८५॥ 685

संमन्त्र्य नोनकः सा च द्वौ सूदावश्वनान्तरे । रसं प्रदातुं हर्षस्य पापं प्रैरयतां ततः ॥६८६॥

अन्यसूदमुखाद्धातां प्रयागस्तामवाप्तवान् । प्रभुं तद्दाप्यमानान्नपरिहारमकारयत् ॥६८७॥

तेनान्नेन परीक्षार्थं दापितेनापजीवितौ । हर्षः श्वानौ निशम्याभून्निराशो निजजीविते ॥६८८॥

प्रयुक्तिं गूढदण्डस्य पितुरेव स तां विदन् । ततः सर्वाणि भोज्यानि स्पृष्ट्वैवोज्झीद्दिने दिने ॥६८९॥

प्रयागोपहृतेनासीत्परं खाद्येन सर्वदा । भोज्येन येन केनापि कुर्वञ्जीवितधारणम् ॥६९०॥ 690

अश्वस्याभोजनं भुक्त्वा राजा सूदैर्निवेदितम् । ततः प्रयागमानीय तत्र पप्रच्छ कारणम् ॥६९१॥

प्रयोजकौ च सूदौ च सोपलभ्य न्यवेदयत् । रसार्पणकथां कृत्स्नां तज्ज्ञानं च स्वयं प्रभोः ॥६९२॥

अथान्येष्वपि सूदेषु पित्रा दत्तेषु शङ्कितः । राजसूनुर्न बुभुजे प्रयागोपहृतं विना ॥६९३॥

स सर्वेषु विरुद्धेषु यद्यत्तत्स्यवाहयत् । मेने तत्तद्दिनं लब्धं शेषेष्वास्थापराङ्मुखः ॥६९४॥

अत्रान्तरे समुदभूदकस्मान्नाशसूचकः । अदृष्टपूर्वो भूभर्तुः सदाचारविपर्ययः ॥६९५॥ 695

उत्पाट्य ताम्रस्वामीत्याख्यं पूर्वं ताम्रमयं रविम् । स रीतिप्रतिमाः स्वैरं विहारेभ्योऽप्यपाहरत् ॥६९६॥

धनानि निरपत्यानामाहर्तुं व्यवसायिना । न्यवार्यतार्थमर्यादा क्रौर्याक्रान्तेन भूभुजा ॥६९७॥

ततोऽतिशापसंतापव्यञ्जकेनाञ्जसाभवत् । अतिसंभोगजातेन धातुक्षैण्येन सोऽर्दितः ॥६९८॥

कुम्भप्रतिष्ठासंभारं चिकीर्षोर्हरमन्दिरे । तस्यापतन्महाकालकुम्भे नासापुटादसृक् ॥६९९॥

आकस्मिकं दुर्निमित्तं तत्प्रतीकारसंविदा । न मनागप्यगाच्छान्तिं प्रवृद्धिं प्रत्युताययौ ॥७००॥ 700

असृक्स्रुत्यनुबन्धेन तेन ग्लपितसौष्ठवः । शनैः शय्याप्रणयितामन्त्यः स प्रत्यपद्यत ॥७०१॥

बलमांसकृतक्षैण्यमग्निमान्द्याशुपत्त्रैः । कलाशेषेण शशिना तद्वपुः साम्यमाययौ ॥७०२॥

राज्यं स दित्सुर्हर्षाय दृष्ट्वामात्यान्पराङ्मुखान् । ततोऽभिषेक्तुमुत्कर्षमानिन्ये लोहराचलात् ॥७०३॥

उच्चाश्चास्तेन सर्वे संविभक्ता मुमूर्षुणा । परमीर्ष्याविभेदेन न भुक्तास्तत्र भूजनः ॥७०४॥

कृत्वा धनार्पणं कुर्यां देशादस्य प्रवासनम् । इत्युक्त्वा हर्षमानेतुं तेनाप्रार्थ्यन्त मन्त्रिणः ॥७०५॥ 705

ते तु गोभृक्षिवार्यांश्चाष्टकुरांल्लोहराश्रितान् । त्रिन्यस्य रक्षिभावे समुत्कर्षाय न्यवेदयन् ॥७०६॥

स नाट्यमण्डपान्तेन निष्कृष्टः क्षामविग्रहः । निवेशितश्चतुःस्तम्भे बद्धा बान्धववर्जितः ॥७०७॥

अथोज्जिगमिषुप्राणो निःसामर्थ्यो विदन्नृपः । मुमूर्षुरभवत्तीर्थप्रस्थानाय कृतत्वरः ॥७०८॥

---

६८०. 1) Thus R G *sec. manu*; C G *prima manu* माध्यस्थ्य°. ६८५. 1) Emended; G R °भूभर्तेनप्तृभर्तृवधार्थिनी; C °भूभर्तृनप्तृभर्तृवधा°. ६८६. 1) Thus G C; R रसे. ६८८. 1) Thus emended with C; A R G तेनाश्वेन. ७०१. 1) Emended; A असृ. ७०६. 1) Emended with C; A गोभृत्रि°. ७०८. 1) Emended with C; A अथोज्जग°.

स आनन्दैवतक्रोधं ताम्रस्वामिविपाटनात् । इयेष शरणं कर्तुं मार्ताण्डं प्राणलब्धये ॥७०९॥

710 संत्यज्य विजयक्षेत्रमत एवापवर्गदम् । महीश्वरोऽपि प्रययौ तत्र श्वासवशंवदः ॥७१०॥

अधीकारप्राप्त्या तृणमिव विदन्विश्वमखिलं नियोगी जातार्तिर्नमति गृहदासीरपि रुदन् ।
नदन्मूर्खो ज्ञानी बहुगुरुपदेशाधिगमतः करोति प्राणान्ते शिशुरिव च किं किं न त्रिगुणम् ॥७११॥

तादृश्या कृपणप्रायसेव्यया क्लैव्यसंविदा । गुरूपदेशाहंकारस्तस्य हास्यत्वमाययौ ॥७१२॥

शुक्लायां मार्गशीर्षस्य तृतीयस्यां निशामुखे । तलादेवाभितो युग्यं भूभृन्मन्तुं विनिर्ययौ ॥७१३॥

स भेरीतूर्यनिर्घोषैर्जनाक्रन्दं तिरोदधत् । सामात्यान्तःपुरो नौभिः प्रतस्थे जलवर्त्मना ॥७१४॥

715 यामशेषे दिनेऽन्यस्मिन्प्राप्तस्य चरणान्तिके । मार्ताण्डस्य स्वजीवाप्त्यै सौवर्णीं प्रतिमां व्यधात् ॥७१५॥

भृत्यैरगणिताज्ञस्य दिदृक्षोर्ज्येष्ठमात्मजम् । औत्सुक्येनारतिस्तस्य व्यथितस्याधिकाभवत् ॥७१६॥

बहिर्हर्षकृतं गीतं गायनानां स गायताम् । विवृतद्वारविवरः शृणोति स्म विनिःश्वसन् ॥७१७॥

प्राणावसानसमये परिसंकुचन्ती स्वप्नप्रसङ्ग इव धावनशक्तिराशा ।
प्रादुर्भवा खलु रुजो मरणोद्भवाया मर्मव्यथां प्रथयते पृथिवीपतीनाम् ॥७१८॥

प्रजाज्येष्ठं तनूजं च संविभक्तुं कृतार्थनः । उत्कर्षं ग्राहयञ्शिक्षां बद्धजिह्वोऽभवत्ततः ॥७१९॥

720 अव्यक्तं वदतो हर्ष इति वाक्यं पुनः पुनः । निह्नोतुं नोनको भावं तस्यादर्शमढौकयत् ॥७२०॥

स तन्निवार्य विहसन्दष्टौष्ठः कम्पयञ्शिरः । जपन्किमपि सार्धे द्वे बद्धवागभवद्दिने ॥७२१॥

आसन्नप्राणनिर्याणः संज्ञयाहूय मन्त्रिणः । ततः स्वं तैरसंमूढैर्मार्ताण्डाग्रमनाययत् ॥७२२॥

वर्षानेकाब्दपञ्चाशद्भुक्तवान्स सितेऽहनि । मार्गस्य पञ्चषष्टेऽब्दे षष्ठ्यां निष्ठामथासदत् ॥७२३॥

सप्त मम्मनिकामुख्या देव्यः परिणयाहृताः । अवरुद्धापि जयमत्यभिधाना तमन्वगुः ॥७२४॥

725 प्रसादवित्तया तस्य पुनः कय्याभिधानया । अवरुद्धिकया कृत्वा स्त्रीजातिरपवित्रिता ॥७२५॥

सर्वावरोधप्राधान्यप्रदानं नास्मरद्यदि । मा स्मार्षीन्नाम भर्तुस्तदनुयाभिजनोज्झिता ॥७२६॥

संश्रित्य विजयक्षेत्रं क्रमाग्रामनियोगिनः । भेजे यस्त्वबहुद्धात्वमतो दुःखाकरोति नः ॥७२७॥

भूपालभोग्यं स्ववपुः सा भोगाभ्यासभासुरम् । निनाय ग्राम्यभोग्यत्वं धिक्कारीर्नीचचेतसः ॥७२८॥

उत्कर्षस्याभिषेकाय व्यग्रेष्वखिलमन्त्रिषु । अन्त्येष्टिमकरोत्प्राज्ञः कृतज्ञो वामनः परम् ॥७२९॥

730 घोषोऽभिषेकतूर्याणामेकतो गीतमङ्गलः । साक्रन्दः प्रेततूर्याणां नादोऽन्यत्र समुद्ययौ ॥७३०॥

जातः पद्मश्रियो देव्याः पुत्रः कलशभूभुजा । ततो विजयमल्लाख्यो भ्रातुर्वैमत्यमादधे ॥७३१॥

बददाद्धर्षदेवस्य पिता प्रत्यहवेतनम् । प्रतिशुभाव तस्मै स तदेवोत्कर्षभूपतिः ॥७३२॥

आश्वासाय च मध्यस्थान्ददौ सामन्तमन्त्रिणः । कय्यात्मजस्य चक्रे च जयराजस्य वेतनम् ॥७३३॥

अश्विष्यन्ति रुदत्य एव तरला गत्यन्तरं योषितो योगक्षेमकथां चितान्तिकगता एवात्मजाः कुर्वते ।
अन्येषां शतशोऽवसानसमये वार्तां विचार्येदृशीं स्त्रीपुत्रादिकृते कुकर्मभिरहो संचिन्वतेऽर्थं जडाः ॥७३४॥

---

७११. ¹) Emended with C; A °देवोधि°. ७२०. ¹) A, gloss हर्ष आनीयतामिति राज्ञो भावमभिप्रायं निह्नोतुं आदर्शो नोनकेनानीत इत्यर्थः हर्षः आदर्श इति पारसीभाषायामादर्श इत्यर्थः. ७२५. ¹) A, gloss उरस्का इति देशभाषया. ७२९. ¹) Emended with C; A अन्त्येष्टि°. ७११. ¹) ज्ञ supplied by A₂. ७१२. ¹) Emended; A तवैनो°.

प्रविवेश ततः श्रीमान्नगरं नृपतिर्नवः । न तु हर्षोदयाकाङ्क्षि हृदयं नगरौकसाम् ॥७३५॥ 735

तद्राज्यलाभदिवसो जनस्याभोगदूषितः । सत्यपि प्रत्यभासीव स रोगार्तैरिवोत्सवः ॥७३६॥

हर्षदेवस्तु पितरि प्रयाते मर्तुमातुरे । नवबद्धचतुःस्तम्भे न तस्मिन्नह्नि भुक्तवान् ॥७३७॥

सार्धभ्रष्टमियाध्वन्यमन्यस्मिन्नह्नि ठक्कुराः । ते शोकमूकं संप्रार्थ्य कथंचित्तमभोजयन् ॥७३८॥

राज्यं दातुं निजे देशे चक्रुश्चास्य प्रतिश्रवम् । राज्यहर्यं नायमर्हत्येक एवेति वादिनः ॥७३९॥

एवं मिलितचित्तस्तैर्विपर्क्ति श्रुतवान्पितुः । कृतोपवासः सोन्येद्युः श्रुश्रावोत्कर्षमागतम् ॥७४०॥ 740

बाष्पैः पित्रे प्रयच्छन्तं निर्वापसलिलाञ्जलीन् । तं दूतैरनुजो राजा स्नातुं प्रार्थयताथ सः ॥७४१॥

तस्य स्नानक्षणे राज्ञि सज्जे राज्याभिषेचने । घोषोऽभिषकतूर्याणामुदभूत्सजयध्वनिः ॥७४२॥

स तेन सुनिमित्तेन प्राप्तां मेने निमित्तवित् । विद्युद्योतेन जीमूतगर्जामिव नृपश्रियम् ॥७४३॥

ततः प्रभृत्युन्मुखता सुनिमित्तैरगृह्यत । तस्यात्यासन्नराज्यस्य भृत्यैरिव दिने दिने ॥७४४॥

स भोजनं कारयितुं दूतान्भ्रात्रा विसर्जितान् । देशान्निर्वासयतु मां राजा संत्यज्य बन्धनात् ॥७४५॥ 745

स्थातुमपत्यवस्थिरयों विदध्यां कोशसंविदम् । म्रियेन्यथा निरशनैः संदिश्येति व्यसर्जयत् ॥७४६॥

स तन्मिथ्या प्रतिश्रुत्य तं दूतैः प्रहितैस्ततः । कृतकोशं सान्त्वयित्वा राजा भोज्यमभोजयत् ॥७४७॥

नित्यं च श्वो विधास्ये तदर्थ्यमान इति ब्रुवन् । कालापहारं कुर्वाणः शङ्कां तस्योदपादयत् ॥७४८॥

विश्वासाय स्वताडङ्कपाणिं कृत्वा प्रयागकम् । पार्श्वं विजयमल्लस्य सोथ गूढं व्यसर्जयत् ॥७४९॥

तदेवोक्त्वा तमूचे स त्वां वृते दुःस्थितोग्रजः । कुमारे त्वयि राज्येस्मिन्भुच्यामी बन्धने वयम् ॥७५०॥ 750

संक्रान्तदुःखः संचिन्त्य चिरेणापि तमब्रवीत् । कार्यं कुर्यात्कथमिदं मद्गिरा नीतिमान्नृपः ॥७५१॥

तथाप्यस्मिन्यथाशक्ति यतिष्ये त्वद्विमोक्षणे । त्वया तु सावधानेन रक्षणीयं स्वजीवितम् ॥७५२॥

तं पार्श्वं हर्षदेवस्य संदिश्येति व्यसर्जयत् । उपायांश्चिन्तयन्नासीत्तस्य कार्यस्य सिद्धये ॥७५३॥

उत्कर्षः प्राप्तराज्यस्तु दैवतैरिव मोहितः । नादधे किंचिदारम्भं व्यवस्थापथनक्षमम् ॥७५४॥

समर्पिताधिकारोपि कन्दर्पादीन्स मन्त्रिणः । राज्यकृत्यं न पप्रच्छ विदधे स च न स्वयम् ॥७५५॥ 755

परिमातुं परीमाणं कोशसंचयवीक्षणे । परं क्ष्मापतेस्तस्य दिनकृत्यमजायत ॥७५६॥

कर्मणा निर्व्ययेनास्य चिन्त्यमानस्य येन वा । सुदीर्घदर्शी लोकोभूत्तेन लुब्धत्वनिश्चयी ॥७५७॥

सा तस्य लुब्धताख्यातिः समुत्राससप्रदायिनः । भूभर्तुः पितृपत्नीभिः स्वैरिणीभिः प्रवर्धिता ॥७५८॥

स श्रोत्रिय इवोत्कम्पी व्यवहारमितादायः । महाहृदयभोग्यानां प्रजानां नाभवत्प्रियः ॥७५९॥

ततो नियमितां वृत्तिं तस्माल्लुब्धाददनाप्नुवन् । कुप्यन्विजयमल्लोभूद्देशान्गन्तुं कृतोद्यमः ॥७६०॥ 760

स्वं रक्षितुं स मध्यस्थाननुव्रज्याकृतेखिलान् । प्रार्थयामास तेनापि सज्जास्तमनुवव्रजुः ॥७६१॥

लवणोत्से निशामेकां पुरान्निर्गत्य तस्थुषः । मध्यस्थसैन्यास्तस्यैवं योधाः पक्षमशिश्रयन् ॥७६२॥

---

७३७. 1) Thus corr. by $A_2$ from $A_1$ °स्मिन्. ७४५. 1) Thus corr. by $A_2$ from $A_1$ राज्यात्सन्त्य°. ७४६. 1) स्था supplied by $A_2$ in space left by $A_1$. ७४८. 1) Emended; A °दर्थमान. ७४९. 1) ताड supplied by $A_2$ in space left by $A_1$. ७५७. 1) येन वा supplied by $A_2$ in space left by $A_1$. ७५९. 1) $A_2$ gloss उत्कम्पी शासनसमये सकम्प इत्यर्थः. ७६१. 1) $A_4$ gloss हनुना. ७६२. 1) मध्यस्थ supplied by $A_2$ in space left by $A_1$. —2) Thus corr. by $A_2$ from $A_1$ °स्तस्या—.

हर्षे बद्धे त्वयि गते कृतकृत्यो भवेन्नृपः । तत्तं निष्कृष्य काराया गमनं तव सांप्रतम् ॥७६३॥
इति तैः प्रेर्यमाणः स राजसूनुरुदायुधैः । विनिवृत्याकरोद्यात्रां प्रत्यूषे नगरोन्मुखः ॥७६४॥
765 श्रुत्वा चिकीर्षितं तस्य व्यावृत्तस्य तथाविधम् । सहायाः समपद्यन्त कतिचिड्डामरा अपि ॥७६५॥
अकरोन्मधुरावर्तो हयसेनापतिः सुतम् । राजसूनुर्यियासुर्यं मध्यस्थानानुयात्रिकम् ॥७६६॥
नागाह्वयो द्रोहहीनो राजपक्षमसंत्यजन् । कैश्चित्सह हयारोहैः स पद्मपुरवर्त्मना ॥७६७॥
आगच्छन्नन्तिकं राज्ञो दुर्निमित्तहतत्वरः । न यावन्नगरं प्राप क्षिप्रकारी नृपात्मजः ॥७६८॥
शाकुनैराहितोत्साहः शालामोद्दीपिताग्निभिः । सैन्यैर्गृहान्दहंस्तावद्राजधानीमवेष्टयत् ॥७६९॥ चक्कलकम् ॥
770 समयाय विनिर्यातं त्यक्तोत्कर्षं[1] महीभुजम् । तत्पक्षं जयराजोपि राजसूनुरशिश्रियत् ॥७७०॥
हस्तस्थितौ राजपुत्रौ तस्याचिन्तयतां गतिम् । नवौ कवी व्यवहृतिं सिद्धवाचः कवेरिव ॥७७१॥
हर्षदेवे परित्यक्ते यास्याम इति वादिनः । स हस्तिमहिषादीनां शालाः सैन्यैरदाहयत् ॥७७२॥
त्यागमलयजीमूतो हर्षदेवोभिषिच्यताम् । लुब्धः खशो वणिक्प्रायो राज्यादेष निवार्यताम् ॥७७३॥
एवं वदन्तः सन्तोपि हर्षमेत्य पुरौकसः । पुष्पैः प्राच्छादयन्बद्धं तमोरिविवरार्पितैः ॥७७४॥
775 उत्पिञ्जे तत्र संजाते भग्नसैन्यस्य भूपतेः । संप्रेष्य ठक्कुरान्हर्षस्तटस्थं तद्बलं व्यधात् ॥७७५॥
इत्थं बद्धोपि तत्कृत्वा वैरिकार्याविरोधिनः[1] । संदेहवेपमानाङ्गस्ततस्तानेवमब्रवीत् ॥७७६॥
वर्तेथ संकटे दुष्टे तन्मां मुञ्चत बन्धनात् । न चेदाशु महीपालादनिष्टं नियमाद्भवेत् ॥ ७७७॥
इत्युच्यमानास्ते यावद्विमृशन्ति स्म तन्मुहुः । पादप्रहारा न्यपतंस्तावद्द्वारगृहाद्बहिः ॥७७८॥
उच्चचार स किं द्रोहः प्रक्रान्तोयं दुराशयैः । रे ठक्कुरा विवृणुत द्वारमित्युच्चकैर्वचः ॥७७९॥
780 ठक्कुरेष्वथ भीतेषु धैर्यादगणयन्भयम् । अकारयद्धर्षदेव एव द्वारमपावृतम् ॥७८०॥
नेत्रमात्रस्थितप्राणो ददर्श विशतस्ततः । लौहराञ्शस्त्रिणो हन्तुं प्राप्तान्षोडश वारिकान्[1] ॥७८१॥
ते हि छित्त्वोज्झिते हर्षशीर्षे सर्वमिदं क्षणात् । शाम्येदिह भयं मन्त्रं नोनकस्येति जल्पतः ॥७८२॥
उत्कर्षेणासकृच्छ्रुत्वा तं निहन्तुं विसर्जिताः । विमृश्य चोक्का गच्छन्तः कार्यशेषं विमुञ्चत ॥७८३॥
कदाचित्तेन कृत्यं स्यादहतेनेति तत्क्षणम् । निवार्य ठक्कुरान्रक्ष्यो हन्तव्यश्च यदोर्मिकाम् ॥७८४॥
785 इमां दद्यामभिज्ञानं यदा चेयं विसृज्यते । तदा तु बन्धनात्त्याज्य इत्युदीर्याङ्गुलीयकम् ॥७८५॥
पाणौ दर्शयता चोक्का विलम्बालम्बनं यतः । निवार्य ठक्कुरांस्तस्मिन्क्षिप्रं न प्राहरंस्ततः ॥७८६॥ कुलकम् ॥
स तु प्रत्येकमाहूय नामग्रहणपूर्वकम् । अजिग्रहत्तांस्ताम्बूलमप्युपावेशयत्पुरः ॥७८७॥
जहुस्ते कृतसत्कारास्ताम्बूलग्रहणक्षणे । ह्रीताः कराग्राच्छस्त्राणि प्रजिहीर्षां च मानसात् ॥७८८॥
धत्ते श्रियं सृजति कीर्तिमघं लुनीते मित्रत्वमानयति हन्त विरोधिनोपि ।
यात्यध्वभिः प्रतिपदं सुमनोनुकूलैर्गौः कामधुक्किमिव नापहरत्यनर्थम् ॥७८९॥
790 राजपुत्रः स तानूचे किं ह्रीता इव तिष्ठथ । निर्दोषाः सर्वथा प्रेष्याः स्वाम्यादेशानुपालने ॥७९०॥

---

७७०. [1]) Thus corr. by $A_2$ from $A_1$ त्यक्तोत्क°. ७७६. [1]) Emended; A वैरि--वि°; C वैरिकानवि°. ७८१. [1]) Thus A; R °वार्त्तिकान्.

विलम्बयतां तथाप्यत्र द्रष्टव्यं महदद्भुतम्[1] । वयोदेश्यवस्थानामन्यथात्वं[2] क्षणे क्षणे ॥७९१॥

द्विपद्वीपिव्याघ्रोरगतुरगादिभ्रमकृतो यथास्यां भिद्यन्ते दिवि किल न एवाम्बुदलवाः ।
तथा सौम्यक्रूरक्रमविकृतिभाजस्तनुभृतां क्षणानां नानात्वाचनु हृदि विकारोर्मय इमाः ॥७९२॥

क्षणानुवृत्तिं कुर्वाणास्तथाथाद्य स्थिता वयम् । तथा सन्तु भवन्तोऽपि कार्यान्तरदिदृक्षवः ॥७९३॥

अपि नैर्व्विधा एव वितन्वन्तो रसान्तरम् । आसन्नराज्यप्राप्तीनां राज्ञां स्युः प्राणसंशयाः ॥७९४॥

ग्रीष्मस्योष्मा व्रजति घनतां नूनमासन्नवृष्टेर्नैशं गाढीभवति तिमिरं संनिकृष्टप्रभातम् ।
जन्तोरेवं प्रसभविभवस्फारसंपत्प्रथारा[1]क्रामन्ती विपदुपचितोपद्रवोद्रेकमेति ॥७९५॥ 795

प्राणचारेण शकुनं निश्चित्येति वदंस्तताम् । आचचक्षे शुभोदर्काः[1] स्वोदन्तसदृशीः कथाः ॥७९६॥

कालं क्षेप्तुमुपन्यस्तशुद्धिव्यक्तीभवद्रसाम् । तेभ्यश्च कथयामास हरिश्चन्द्राश्रयां कथाम् ॥७९७॥

तद्ध्याने स्वरक्षायां बाह्यवार्तागवेषणे । व्यापृतत्वं गभीरस्य न तस्य समलक्ष्यत ॥७९८॥

अत्रान्तरे तमुद्दिश्य मते जाते नवे नवे । राजभिश्च काल्यार्थं[1] शतशोभूद्गतागतम् ॥७९९॥

उत्कर्षो भूमिपस्तस्य परित्यागं समन्यत । आदिदेशानुगांस्तांस्तान्भूरिशश्च प्रमापणे ॥८००॥ 800

अभिज्ञानोर्मिकादानं यथादेशो नु नास्मरत् । ते नोर्मिं तस्य दूतानामन्वतिष्ठन्त रक्षिणः ॥८०१॥

स तान्वन्ध्यश्रमान्वीक्ष्य स्मृत्वाभिज्ञानसंविदम् । सत्वात्मजं[1] राजपुत्रं भूराख्यं व्यसृजत्ततः ॥८०२॥

अभिज्ञानं वितरतस्तत्करे तस्य मुग्धतः । दैवयोगात्क्षणे तस्मिन्नूर्मिकाव्यत्ययोऽभवत् ॥८०३॥

यः[1] पानार्थमुपार्जितोन्यशिरसस्तेनैव सिन्धुप्रभुर्वृद्धक्षेत्रधराधवः स्वशिरसः पातं वरेणान्वभूत् ।
दिष्ट्या सैव गदा श्रुतायुधनृपं हन्ताश्वधीदाहवे यत्त्राणाय विगण्यते विधिवशात्तेनैव नाशो भवेत् ॥८०४॥

तथा चैकस्य विस्मृत्या व्यत्ययेनापरस्य च । अभिज्ञानस्य स नृपो नाशं प्रत्युत लब्धवान् ॥८०५॥ 805

आभिजन्येन[1] हर्षस्य ते क्षणादेव रक्षिणः । प्रपेदिरे क्षितीशित्वमुत्कर्षाज्ञाविरोधिनः ॥८०६॥

हारमाक्रान्तमुत्क्रोधो वधायायमुपागतः । इति निर्ध्याय ते भूरं हन्तुमैच्छन्नुदायुधाः ॥८०७॥

उद्घाटितारपुटा दृष्ट्वा तस्योर्मिकां करे । तेनैव साकं नृत्यन्तो[1] हर्षं समुपतस्थिरे ॥८०८॥

पादन्यस्तोत्तमाङ्गैस्तैर्निर्गच्छेत्यर्थितस्ततः । अविश्वसन्राजसूनुः क्षणमासीत्स चिन्तयन् ॥८०९॥

तस्मिन्क्षणे हर्षदेवं हतं ज्ञात्वा रणे स्थितः । क्रुध्यन्विजयमल्लोऽभूदधिकोद्रिक्तपौरुषः ॥८१०॥ 810

तं दग्धुमुद्यतं राजधानीं जीवति तेऽग्रजः[1] । अभिधायेति रुरुधुः कथंचित्पार्थिवानुगाः ॥८११॥

प्रत्ययार्थं ततस्तस्य राज्ञा हर्षवधूर्द्रुतम् । गृहीतभर्तृताडङ्का सुगला प्रैष्यतान्तिकम् ॥८१२॥

तां विलोक्यैव विरते वह्निदाहान्नृपात्मजे । राजा भयप्रतीकारं हर्षत्यागादमन्यत ॥८१३॥

गत्वामात्याः स्वयं नोनप्रशास्तकलशादयः । हर्षं निर्निगडं कृत्वा कारागारात्ततोऽत्यजन् ॥८१४॥

---

७९१. [1]) Thus corr. by later hand from $A_1$ °द्भुतान्.— [2]) देश्यवस्थ supplied by $A_2$ in space left by $A_1$. ७९५. [1]) Thus corr. by $A_1$ from °प्रतापम्; $A_2$ °प्रभाति. ७९६. [1]) Thus corr. by $A_2$ from $A_1$ शुभोद°. ७९९. [1]) $A_2$ gloss काली चमत्की. ८०२. [1]) Doubtful; thus A R G. ८०४. [1]) $A_2$ gloss यः पानार्थमिति एतद्वृत्तद्वयोपाख्यानं महाभारते द्रोणपर्वणि ज्ञेयम्. ८०६. [1]) $A_2$ gloss आभीजन् इति देशभाषया. ८०८. [1]) कं नृत्यन्तो supplied by $A_2$ in space left by $A_1$. ८११. [1]) Emended; A R G तेनुजः.

815 मन्त्रः स तेषां शोकेन वक्त्रात्कृतगतागतः । अन्त्यक्षणे श्वास इव प्रससार बहिश्चरन् ॥८१५॥

हर्षः प्रश्लाघ्यमानस्तु पौराणां पुष्पवृष्टिभिः । हयमारुह्य सामात्यो रणस्थं नृपमासदत् ॥८१६॥

अभिनन्द्यानुजो राजा तमूचे भ्रातरं रणात् । निवार्यागम्यतां कुर्मः प्राप्तकालं ततो वयम् ॥८१७॥

तथेति प्रस्थिते तस्मिंस्त्यक्त्वा तत्र रणाजिरम् । प्राविशन्मन्त्रिभिः सार्धं कोशं हेमादिसंभृतम् ॥८१८॥

उत्तीर्णं महतः कृच्छ्राद्धर्षदेवमुपस्थितम् । दृष्ट्वा विजयमल्लोभूत्प्रहर्षान्निष्क्रियः क्षणम् ॥८१९॥

820 ततो ववन्दे तत्पादौ स चोत्काम्यालिलिङ्ग तम् । तास्ताः कथास्तयोरासन्नुपकर्त्रुपकार्ययोः ॥८२०॥

व्यापादयैनमेवाद्य हर्षोत्कर्षं ततो नृपः । निष्कण्टकोसि भविनेत्याप्तस्योपांशु जल्पतः ॥८२१॥

ततो विजयमल्लेन नाग्रहेणादृतं वचः । ज्ञात्वेङ्गितज्ञो हर्षस्तत्ततस्तु चकितः क्षणम् ॥८२२॥ युग्मम् ॥

स्वदेहमामिषीभूतं स भ्रात्रोः श्येनयोरिव । निष्पन्नपक्षप्रतिमो ररक्षार्वागतश्चरन् ॥८२३॥

आसन्नाभ्रजलस्य दावविगमे विद्युद्भयं शाखिनो नक्रास्याद्गलतश्च मज्जनमयी शङ्का भवेद्वारिधौ[1] ।
भोक्तव्यस्य विधिः शुभस्य रभसात्स्वादुत्वनिष्पत्तये जन्तोः संतनुते निराकृतभियो भीत्यन्तरोत्पादनम् ॥८२४॥

825 तं हयभ्रमणव्याजाद्रक्षितुं निजजीवितम् । ज्ञातवार्ता निजाः केचित्पत्तयः पर्यवारयन् ॥८२५॥

साकं विजयमल्लेन ततः संमन्त्र्य स क्षणात् । चचाल विप्लवापायमाख्यातुं तं महीभुजे ॥८२६॥

अर्धं तद्वेश्मनः प्राप्तं विनिर्यान्तं नृपात्मजात् । ततो विजयसिंहस्तं संप्रवेशाद्व्यवारयत् ॥८२७॥

ऊचे च मरणात्तीर्णो मर्तुं विशसि किं पुनः । निष्पत्य गत्वोपविश त्यक्तशङ्को नृपासने ॥८२८॥

एवमुक्तवतस्तस्य भृत्यैः कोशादुपाहृते । सिंहासने हर्षदेवस्ततस्तूर्णमुपाविशत् ॥८२९॥

830 वैयात्यच्छादितानन्तप्रातिकूल्या तदन्तिके । उपाविशच्च सुगला महादेवीत्वसिद्धये ॥८३०॥

तस्याभिषेकशब्देन समधावन्त सर्वतः । रसितेनाम्बुवाहस्य चातका इव मन्त्रिणः ॥८३१॥

तद्वार्ताश्रवणेनार्तमुत्कर्षं मन्दिरात्ततः । धूर्तो विजयसिंहोपि कृष्ट्वान्यमनयद्गृहम् ॥८३२॥

आस्थानस्थस्य भूभर्तुरग्रेण स मितानुगः । नष्टश्रीर्ददृशे गच्छन्स्थिराः कस्य विभूतयः ॥८३३॥

तस्य वेश्मप्रविष्टस्य बहिर्विन्यस्य रक्षिणः । राज्ञो विजयसिंहस्तत्कृतं कार्यं न्यवेदयत् ॥८३४॥

835 कारायां संस्तुतान्राजपार्श्वमानीय ठक्कुरान् । तत्सैन्येप्रस्थितेत्याक्षीद्भयं विजयमल्लतः ॥८३५॥

सोप्यग्रजं प्राप्तराज्यं श्रुत्वा तत्सविधं व्रजन् । निन्ये संमान्य तद्भृत्यैः स्वामेव वसतिं क्षणात् ॥८३६॥

तत्सैन्यं स्वान्तिकं प्राप्तमथ वीक्ष्य क्षमापतिः । आनिनाय तमभ्यर्णं क्षणमात्रेण नीतिवित् ॥८३७॥

मह्यं प्राणाश्च राज्यं च त्वया दत्तमिति ब्रुवन् । स प्राञ्जलिस्तमकरोत्क्लेशसाफल्यदायिनम् ॥८३८॥

तस्य दैवानुकूल्येन नीत्येव सुप्रयुक्तया । तत्कालमेव तद्राज्यशय्यायां समुपाविशत् ॥८३९॥

840 कारागृहान्तःसंवीतान्येव वासांसि धारयन् । सिंहासनेन शुशुभे श्रीसांनिध्यान्नवो नृपः ॥८४०॥

तावत्साहससंरम्भपरिश्रान्तो दिनात्यये । कृतारोहोथ शय्यायां त्यक्तभार इवापतत् ॥८४१॥

---

८२०. [1]) त्काम्या supplied by A₂ in space left by A₁.—[2]) Emended with C; A °त्रुपकर्तृप°. ८२१. Thus A; perhaps °वित°?. ८२४. [1]) The same hand which has supplemented the marginal note of A₂ in i. 110, writes here: नक्रास्याद्गलतश्च मज्जनमयी शङ्का प्लवस्याम्बुधौ इत्यन्यादर्शे, with the gloss नक्रः जलमानविशेषः यो जलहस्तिनांपीरयति तन्मुखात्स्खलतोऽपि जलनिलयस्यापि मज्जनमयी शङ्का उडुपस्य स्यादित्यर्थः.

पश्यन्विषमतामेव सर्वतो विधुरात्मनाम् । न स निद्रासुखं तत्र नीतिमात्रोपि लब्धवान् ॥८४२॥
उत्कर्षो भुवि यद्वस्तु मन्ये पुष्कल्यमनिन्दितः । आशिषाम्भाक्षयो कर्ष नीचकेनेत्यकथ्यत ॥८४३॥
प्रातः प्रोक्तोपि यन्मन्त्रं तज्ज्ञाकार्षीर्महीपते । पतिताममनाद्यस्मादाशिषां शृणु संविदम् ॥८४४॥
मध्याशिषो बन्धमस्यं त्वं तमुत्क्षिप्तभोजिनाम् । यः प्रमांसार्पिता हस्ते स पुरस्तामर्पयिष्यति ॥८४५॥ 845
शरणं मरणादन्यदस्मादस्मिन्क्षणेस्ति किम् । स्वच्छायाबालामस्माकं तदप्यप्राप्यतां गतम् ॥८४६॥
अवसाद¹फलास्वादकालेत्यन्तमरुंतुदम् । बहोपालम्भपाण्डित्यं न विपक्षेषु शोभते ॥८४७॥
स्वचापायमनालोच्य न उपायः प्रवर्तितः । सर्वमेकपदे तेन मुहूर्तेनैव हारितम् ॥८४८॥
संस्थाप्यमानो दुर्नीत्या स्फुटयेव जरटः पटः । मत्युलोपक्रमोल्पोपि शतद्वारः प्रजायते ॥८४९॥
एवं श्रुत्वा स तन्मध्यान्निर्गत्याभ्यन्तरं गृहम् । अवरुद्धिकया सार्धं विवेश सहजाख्यया ॥८५०॥ 850
तत्र संध्यासमाधिस्थस्तिष्ठामीत्यभिधाय ताम् । क्षणं तिरस्करिण्यन्तरेकाक्येवाकरोत्स्थितिम् ॥८५१॥
निःशस्त्रेण गले क्षिप्त्वा पट्टच्छेदनकर्तरीम् । नाडीः प्राणहरास्तेन छिन्नाः छिन्नात्मना ततः ॥८५२॥
फणत्कारेण कर्तर्याश्च्युताया भुवि शङ्किता । अपश्यत्सहजा रक्तं श्च्योतज्जवनिकान्तरात् ॥८५३॥
सोथ लम्बशिरोनिर्यत्सान्द्रासृक्कलशे तदा । यथावमनभृङ्गान्तश्च्योतद्धातुरिवाचलः ॥८५४॥
तस्यास्तदाभीभीक्ष्णित्यं निर्व्यूढं येन योषिताम् । भर्तृप्रसादपात्राणामप्यापुर्वैस्तरां शिरः ॥८५५॥ 855
व्रजति रजनी त्यक्त्वा क्वापि क्षये क्षणदाकरं पदमुपगतस्यास्तं संध्या रवेरनुगच्छति ।
इति परिणतौ प्रेमण्युच्चावचे परिचिन्तिते कथय नियमान्निन्द्या वन्द्या न वा ह्यधिका स्त्रियः ॥८५६॥
कुलाचारपतिप्रेमसादृश्येप्यभवत्तदा । कथ्यासहजयोर्यस्मान्निन्द्या वन्द्या च पद्धतिः ॥८५७॥ युग्मम् ॥
सापि हि घुसदो वेश्मनर्तकी नाट्यमण्डपे । दृष्ट्वा तेनावरुद्धात्वं निन्ये राजवधूः पुरा ॥८५८॥
कान्ताकगैरिकास्यन्दकृतसान्द्राङ्गरागया । प्रेम्णो देह इवौज्ज्वल्यं भविष्यामि तयार्पितम् ॥८५९॥
हर्षदेवस्यापि पूर्वं वेश्यात्वे साभवत्प्रिया । अतस्तेनार्थ्यमानापि मरणान्न्यवर्तत ॥८६०॥ 860
चतुर्विंशाब्ददेशीयो दिनद्वाविंशती नृपः । मृतस्तिष्ठन्निशामेकां प्रातः सोक्रियताग्निसात् ॥८६१॥
तस्यावरोधलोलाक्ष्यो लोहराद्रिस्थिता अपि । कृशानुवर्त्मना काश्चित्पदवीं द्रुतमन्वयुः ॥८६२॥
शस्त्रं संस्थाप्यमानेषु तन्मन्त्रिषु नृपानुगैः । मुमूर्षुर्नोनकः शस्त्रं न तत्याज क्षणं यदा ॥८६३॥
विनास्मान्मन्त्रदो राज्ञः कोन्यः स्यादहितैरसौ । मोक्ष्यत्यस्मांस्ततः प्राणान्नोपेक्षिता विचारयन् ॥८६४॥
स्वयूथ्य एवेति यतः प्रशस्तकलशो वदन् । तदा संत्याजयामास स्वयं तच्च समर्पितम् ॥८६५॥ तिलकम् ॥ 865
नोनसिल्हारभट्टारप्रशस्तकलशादयः । बद्धाथ हर्षदेवेन कारागारं प्रवेशिताः ॥८६६॥
इत्येवमेकेनैवाह्ना तादृग्राजविपर्ययः । कृतश्च हर्षदेवेन दैवेनेव महाद्भुतः ॥८६७॥
यथाकथंचिद्व्युत्क्रान्ता बहवः पृथिवीभृतः । प्रतीतिविषमो मार्गः कष्टमापतितोधुना ॥८६८॥
सर्वोत्साहोदकक्षेत्रं सर्वानुल्लासदूतिका । सर्वव्यवस्थाजननी सर्वनीतिव्यपोहकृत् ॥८६९॥
उद्रिक्तशासनस्फूर्तिरुद्रिक्ताज्ञाक्षयक्षितिः । उद्रिक्तत्यागसंपत्तिरुद्रिक्ताहरणप्रथा ॥८७०॥ 870

८४७. ¹) अवसाद supplied by $A_2$ in space left by $A_1$.

कारुण्योत्सेकसुभगा हिंसोत्सेकभयंकरी । सत्कर्मोत्सेकललिता पापोत्सेककलङ्किता ॥८७१॥
स्पृहणीया च वर्ज्या च वन्द्या निन्द्या च सर्वतः । निषेव्या चोपहास्या च काम्या शोच्या च धीमताम् ॥८७२॥
आशास्या चापकीर्त्या च स्मर्त्या त्याज्या च मानसात् । हर्षराजप्रभा चर्चाकथा व्यावर्णविघ्नते ॥८७३॥ कुलकम् ॥
नूनं स तैजसैरेव ससृजे परमाणुभिः । कुतोन्यथाभून्मसवे दुष्प्रेक्ष्यो महतामपि ॥८७४॥
875 न मर्त्येषु न देवेषु तद्रूपो दृश्यते क्वचित् । दानवेन्द्रेषु स प्राज्ञैः परमुत्प्रेक्ष्यते यदि ॥८७५॥
प्रतिमार्कपरीमाणज्वलत्कुण्डलमण्डितः । उत्तुङ्गमुकुटानद्धविकटोष्णीषमण्डलः ॥८७६॥
मत्तसिंहविप्रेक्षी नीचश्मश्रुच्छटाञ्चितः । वृषस्कन्धो महाबाहुः श्यामलोहितविग्रहः ॥८७७॥
व्यूढवक्षाः क्षाममध्यो मेघघोषगभीरवाक् । सोमानुषाणामपि यत्प्रतिमाभङ्गकार्यभूत् ॥८७८॥ तिलकम् ॥
सिंहद्वारे महाघण्टाश्चतुर्दिक्कमबन्धयत् । ज्ञातुं विज्ञप्तिकामान्स प्राप्तांस्तद्घोषसंज्ञया ॥८७९॥
880 आर्तां च वाचमाकर्ण्य तेषां तृष्णानिवारणम् । प्रावृषेण्यः पयोवाहश्चातकानामिवाकरोत् ॥८८०॥
आप्तवचनो निर्हेमभूषणोल्पपरिच्छदः । ददृशे विगतो— —[1] न कश्चिद्राजमन्दिरे ॥८८१॥
सिंहद्वारे नरपतेर्लोकागमनसंमते । सर्वदेशाभियोभान्तमासंनाशीकृता इव ॥८८२॥
अपेतसंख्याः सौवर्णशृङ्खलाकटकाञ्चिताः । भ्रेमुर्मन्त्रिप्रतीहारमुख्याः क्ष्मापतिमन्दिरे ॥८८३॥
एवं स्फूर्जन्स नृपतिर्नवसाम्राज्यडम्बरः । अभूद्विजयमल्लस्य गुरोरिव मते स्थितः ॥८८४॥
885 आदीयमानवचसः कृतज्ञेन महीभुजा । तस्याभूत्पार्थिवस्येव सेवकैः संकटा सभा ॥८८५॥
स्वसेवकानवाप्तस्य रक्षन्संस्थाव्यतिक्रमम् । पित्र्येभ्य एव मन्त्रिभ्यः सोधिकारान्समर्पयत् ॥८८६॥
द्वारे चकार कन्दर्पं मदनं चापि कम्पने । अन्यान्विजयसिंहादीन्कर्तव्ये च निजे निजे ॥८८७॥
तेन प्रशस्तकलशप्रमुखाः प्राक्प्रमन्त्रिणः । अन्यास्ते संत्यज्य कार्येषु निजेष्वेव नियोजिताः ॥८८८॥
स्मृत्वापकारान्सुबहूनमात्यो नोनकः परम् । भावेयेण समं भ्रात्रा कोपाच्छूले विपादितः ॥८८९॥
890 काले काले तु कार्येषु संकटेषु महामतिम् । संस्मरन्स्वामिभक्तं तं पश्चात्तापेन पस्पृशे ॥८९०॥
योग्यः कृतापकारोपि कदाचिदुपयुज्यते । विहितागारदाहोपि शरणं भोज्यसिद्धये ॥८९१॥
संदर्शयेत्स्वभार्यायाः कर्णनासावकर्तनम् । विश्शाभट्टो[1] राजभृत्यैः शूलेनैव विपादितः ॥८९२॥
उदये संविभेजे स भृत्यान्कारविनिर्गतान् । मधौ प्रफुल्लः शाखीव भृङ्गान्भूविवरोत्थितान्[1] ॥८९३॥
राज्ञः क्षेमस्य यः पौत्रो वज्रजः स महीभुजा । सर्वामात्यप्रधानत्वं निन्ये सुज्ञः सहानुजः ॥८९४॥
895 राज्ञो याचादिसमये प्रेक्षकाणां पदे पदे । एक एकोभवन्मन्त्री महीपालभ्रमप्रदः ॥८९५॥
सर्वप्रतीहारपदाग्र्याधिपत्येधिरोपितः । जयराजोनुजस्तस्य जीविताद्धिकोभवत् ॥८९६॥
आज्ञावीचाभवत् भाबोरानृशंस्या - - - -[1] । धम्मटः सोपि ताम्बूलैर्भ्रातृपुत्रैः सहायवी ॥८९७॥

---

८७९. [1]) Thus corr. by $A_2$ from $A_1$ मघा°. ८८०. [1]) आर्ता and तृष्णा supplied by $A_2$ in space left by $A_1$. ८८१. [1]) $A_1$ indicates here a *lacuna* of two *aksharas*; C विगतोत्तापे; perhaps, विगतोद्वेगो (?). ८८३. [1]) Emended; A °नाशीनाशी°. ८८८. [1]) Thus corr. by $A_2$; $A_1$ - - - - सत्त्वज्य कार्येषु नियोजिताः. ८८९. [1]) Thus corr. by later hand from $A_1$ स्मृत्वाप°. ८९२. [1]) Thus A; perhaps, to be read विशाखाभट्टी; cf. vii. 617, 621, 630. ८९३. [1]) $A_2$ gloss मधौ वसन्ते भूविवरोत्थिता भृङ्गा नीलवर्णाः कृमि नामका प्रसिद्धाः ते अस्तावसन्धिनि वृक्षे सूक्ष्मेभ्यः भूविवरेभ्यः वसन्तसमये उत्तिष्ठन्ति शाखलोपरि लक्षार्थं ॥. ८९७. [1]) Here $A_1$ indicates a *lacuna*; C °भूपस्यादिपक्षणः.

संमान्य तं नरपतिः स्वकुले हारितायनम् । सभ्रातृपुत्रमासीत्स्वादिष्टेष्वेव सर्वदा ॥८९८॥
विभज्य भुञ्जतो राज्यं तस्यैवं प्रेरितः खलैः । क्रमाद्विजयमल्लोऽथ दुर्बुद्धिर्विकृतिं दधे ॥८९९॥
राज्यं प्राप्तः किमन्यस्मै जित्वेत्युक्तः स दुर्जनैः । तल्लिप्सुर्मन्त्रयामास वधं प्रथमजन्मनः ॥९००॥ 900
विजने मन्दिरे हन्यामिति संमन्त्र्य भूपतिः । यागं विधाय व्याजेन तेनागन्तुं निमन्त्रितः ॥९०१॥
मन्त्रे श्रुतिं गते राज्ञः स्रोधात्स्कन्दविशङ्कितः । आदिदेश स्वसैन्यानां द्रुतं संनहनोद्यमम् ॥९०२॥
संनद्धे राजसैन्ये च द्रुतं निर्गत्य भूपतेः । हता विजयमल्लेन मन्दुराश्वतुरंगमाः ॥९०३॥
संहरंस्तुरगान्वीक्ष्य प्रहरन्नृपतेर्बलम् । कुर्वन्महाहवं वीरो निर्ययौ सत्वरं पुरात् ॥९०४॥
आश्लिष्य पृष्ठं तिष्ठन्त्या जायया सहितो व्रजन् । स चकार तुरंगस्थः संग्राममतिमानुषम् ॥९०५॥ 905
धारासारैः क्षणे तस्मिन्नकालजलदोज्झितैः । विपर्यस्तेव पृथिवी सर्वतः समलक्ष्यत ॥९०६॥
झांकारमारुतारब्धभूरिभेरीरवे रणे । आसारेण द्युरेवासीच्छाद्यमानो नृपात्मजः ॥९०७॥
तं क्षीयमाणपृतनं यान्तं हन्तुं समुद्यताः । कर्माणि प्राक्कृतानीव न चण्डककृता जहुः ॥९०८॥
भग्नसेतुं पयोवेगैर्वितस्तासिन्धुसंगमम् । सजानिरन्तरङ्गोर्मीमवतीर्य स वाजिनः ॥९०९॥
सत्त्ववानकरोत्पत्न्या मज्जनं रिपुसंकटे । सिन्धुं प्रवृद्धामुत्तीर्य तुरंगोऽपि तमन्वगात् ॥९१०॥ 910
छिन्नां दृग्गोचराद्यातः स तमारुह्य वाजिनम् । दरदेशोन्मुखो वीरः प्रायाल्लहरवर्त्मना ॥९११॥
कन्दर्पहारपतिना सर्वतो रुद्धपद्धतिः । गिरीनुल्लङ्घ्य चाविक्षद्गिरिगुप्तां दरत्पुरीम् ॥९१२॥
दरदाभ्यर्चितं तत्र श्रीविद्याधर हिना । केचिन्निजाः परिजनाः शनकैस्तं प्रपेदिरे ॥९१३॥
श्रुत्वा स्वीकार्यमाणं च संरम्भं डामरादिभिः । प्रायुङ्क्त हर्षपृथ्वीभुगुपायांश्चकितोऽन्वहम् ॥९१४॥
तेषु यत्नेषु शीतर्तुं सोऽतिवाह्य दरत्पुरे । डामरैः प्रहितालापश्चैवे आयासमदान्मदात् ॥९१५॥ 915
उत्तीर्य संकटांस्तिष्ठन्मार्गान्तः पटमण्डपे । अकस्मादभवन्मार्गे हिमानीहतजीवितः ॥९१६॥
यदुल्लासाय संरम्भो धीरैर्विस्तार्यते महान् । कृत्यं छिनत्ति तद्दैवमत्यल्पेनैव वस्तुना ॥९१७॥
उन्मीलनं तिग्मरुचिः प्रयत्नाद्येषां सहस्रेण करैः करोति ।
उन्मूलयत्येककरेण तानि पद्मानि धाता कुपितो द्विपेन ॥९१८॥
द्वैराज्यशङ्कया कंचित्कालं संकुचितं ततः । भूयः प्रथयतो लग्नं राज्यं हर्षमहीभुजः ॥९१९॥
राजशब्दस्तदा सेहे न कुमाराधिरोपणम् । अत्युद्धततया तस्मिन्नतुल्येनान्यराजवत् ॥९२०॥ 920
सुशोभादायिभिर्भङ्गीः प्रावर्तयत मण्डले । निर्मत्सरो नरपतिः पुष्पर्तुरिव कानने ॥९२१॥
मुक्तकेशा निरुष्णीषा निष्कलाभरणाः पुरा । संत्यज्यैकं महीपालमभवन्निह देहिनः ॥९२२॥
धम्मिल्लमथनाथश्च मदनः कम्पनापतिः । अयानन्दोऽप्यमात्याश्चाविकाचोरकधारणात् ॥९२३॥

---

९०२. 1) धारकन्न supplied by $A_2$ in space left by $A_1$.—2) Emended; A °नोद्यतम्. ९०४. 1) संहर supplied by $A_2$ in space left by $A_1$. ९०८. 1) Thus A; perhaps, to be read प्राकृतानीव. ९०९. 1) सजानिर supplied by $A_2$ in space left by $A_1$.—2) Thus corr. by $A_2$ from $A_1$ °तरङ्गो°.—3) Thus corr. by $A_2$ from $A_1$ °तार्क. ९१०. 1) Thus corr. by $A_2$ from $A_1$ °वानका°.—2) त्वरन्त्या and तं supplied by $A_2$ in space left by $A_1$. ९११. 1) Thus corr. by $A_2$ from $A_1$ दरद्या°.—2) $A_1$ indicates a *lacuna*; C °धरशाहिना. ९१५. 1) आयात् supplied by $A_2$ in space left by $A_1$. ९१६. 1) Thus corr. by $A_2$ from $A_1$ कुरन°. ९१९. 1) प्रथयतो लग्नं राज्यं supplied by $A_2$ in space left by $A_1$.

अन्यभूपार्थिवक्रोधमविशेषेण मण्डले । तेन राज्योचितो वेषस्तत्र राज्ञा प्रवर्तितः ॥९२४॥कुलकम्॥

925 स केषांचिदमात्यानामाकल्पोल्लासशोभिनाम् । निर्मत्सरः स्वदासीभिरारात्रिकमकारयत् ॥९२५॥

दाक्षिणात्याभवद्भङ्गिः प्रिया तस्य विलासिनः । कर्णाटानुगुणष्टङ्कस्ततस्तेन प्रवर्तितः ॥९२६॥

लसत्तालीदलाः स्थूलचन्दनस्थाससुन्दराः । रेजुर्जनास्तदास्थाने ह्रस्वदीर्घासिधेनवः ॥९२७॥

स्वर्णकेतकपत्राङ्कजूटलम्बोर्जितस्रजः । चटुलातिलकाश्लिष्टविलोलतिलकाङ्कुराः ॥९२८॥

अपाङ्गभोगयोर्बद्धसंधयोऽञ्जनरेखया । निर्मीरङ्गिककेशान्तबद्धहेमोपवीतकाः ॥९२९॥

930 अधराम्बरपुच्छान्तैर्लम्बैश्चुम्बितभूतलाः । प्रच्छादितार्धदोर्लेखकञ्चुकाङ्कपयोधराः ॥९३०॥

कर्पूरोद्धूलनस्मेरा भ्रमन्त्यस्तरलभ्रुवः । मधुराश्रितपुंवेषां क्षपाकृष्णलवङ्गताम् ॥९३१॥ चक्कलकम् ॥

अन्योपजीव्यतां प्रापुस्तस्यार्थित्वेन मार्गणाः । विश्वाप्यायकतां मेघाः प्रणयेनेव वारिधेः ॥९३२॥

प्रसादैस्त्यागिनस्तस्य राज्ञः कनकवर्षिणः । समस्ता गायकगणाः पार्थिवस्पर्धितां ययुः ॥९३३॥

विद्वच्चूडामणिर्भूभृत्पण्डिताग्रसमण्डितान् । चकार युग्यतुरगच्छत्रादिप्रक्रियाभृतः ॥९३४॥

935 कश्मीरेभ्यो विनिर्यान्तं राज्ये कलशभूपतेः । विद्यापतिं यं कर्णाटश्चक्रे पर्माडिभूपतिः ॥९३५॥

प्रसर्पतः करटिभिः कर्णाटकटकान्तरे । राज्ञोऽग्रे ददृशे तुङ्गं यस्यैवातपवारणम् ॥९३६॥

त्यागिनं हर्षदेवं स श्रुत्वा सुकविबान्धवम् । बिल्हणो वञ्चनां मेने विभूतिं तावतीमपि ॥९३७॥

सौवर्णामलसाराढ्या राजधान्यो धरापतेः । अभ्रंलिहगृहा भेजिरे भुवनाद्भुताः ॥९३८॥

तदीये नन्दनवने द्रुमेभ्यो नो व्यधुः स्थितिम् । त्यागिना निर्जितास्तेन केवलं कल्पपादपाः ॥९३९॥

940 विविधाभिरभूद्यास्तु विहंगमृगजातिभिः । तेन व्याप्तदिगाभोगं चक्रे पम्पाभिधं सरः ॥९४०॥

सोऽभासीद्यावतीर्विद्यास्तासां नामापि निश्चितम् । वक्तुं नास्त्येव सामर्थ्यं व्यक्तं वाचस्पतेरपि ॥९४१॥

गीतमाकर्ण्यतेऽथापि तस्य वाग्गेयकारिणः । विपक्षैरपि पक्ष्माग्रलुठद्बाष्पोदबिन्दुभिः ॥९४२॥

स्वपतो दिनयामौ द्वौ सर्वकालं विलासिनः । दत्तस्थानस्य तस्यासीद्यामिनीषु प्रजागरः ॥९४३॥

तस्य दीपसहस्राङ्के स्थितस्यास्थानमण्डपे । विद्वद्गोष्ठीगीतनृत्तप्रस्तावेन क्षपा ययुः ॥९४४॥

945 कथान्ते शुश्रुवे तत्र पर्णचर्वणजः परम् । कान्ताधम्मिल्लशेफालीत्रुटिजन्मा च मर्मरः ॥९४५॥

वितानैः सपयोदेव साग्निचयेव दीपकैः । रुक्मदण्डैः सशम्पेव सधूमेवासिमण्डलैः ॥९४६॥

साप्सरा इव कान्ताभिः सनक्षत्रेव मन्त्रिभिः । सर्षिसंघेव विबुधैः सगन्धर्वेव गायनैः ॥९४७॥

नित्यसंकेतवसतिर्धनदस्य यमस्य च । एकं विहरणारण्यं दानस्य च भयस्य च ॥९४८॥

क्षपास्थानस्थितिस्तस्य राज्ञः शक्राधिकश्रियः । कस्य वाचस्पतेर्वाचा वक्तुं कार्त्स्न्येन शक्यते ॥९४९॥ चक्कलकम्॥

950 दैवक्रमेण राजतैथाढीव्यवहारस्तदा घनः । मण्डले विरलामुष्मिन्दीनारैस्ताम्रजैः पुनः ॥९५०॥

दण्डनायकतां प्राप्य सुज्जः सर्वोन्नतिं भजन् । तस्मिन्काले स्वभूलोभाक्षीणो मुष्टिपचः परम् ॥९५१॥

निजा जयवने सूर्यामूलके विजयेश्वरे । आख्यान्ति यस्य लुब्धत्वं निर्व्ययस्थितयो मठाः ॥९५२॥

---

९२८. ²) $A_2$ gloss ललाटलम्बलग्नकुङ्कुमवर्तुलतिलको मतः. ९३१. ¹) Emended ; A° शुभेषा. ९३५. ¹) Thus corr. by $A_2$ from $A_1$ °श्चे. ९३८. ¹) Thus corr. by later hand from $A_1$ सौवर्णामाल°.—²) राज्ञा supplied by $A_2$ in space left by $A_1$.

1140 ईषत्प्रागागतं शय्यां भूय एवोल्बणं नृपः । ज्ञात्वा मड्डवराज्यं स प्रययौ विजयेश्वरम् ॥११४०॥
मल्लराजतनूजानां निजा जिह्मेव दुर्जना । बभूव प्रभविष्णुत्वे व्यापद्यापातदूतिका ॥११४१॥
प्रायशश्चापतने काले भृत्यास्तितउवृत्तयः । दर्शयन्ति समुत्सार्य सारं दोषतुषग्रहम् ॥११४२॥
आ बाल्यात्संस्तुताश्शीलवश्यःपरुषभाषितैः । निर्गीर्णवैर्यशोराजो राज्ञि तस्मिन्व्यरज्यत ॥११४३॥
स दुर्गातिर्महासैन्ययुतोवन्तिपुरस्थितः । अभजत्तत उत्थाय प्रतिपक्षसमाश्रयम् ॥११४४॥

1145 वैरिपक्षगते तस्मिन्बलैः सर्वोत्तमैः समम् । विह्वलो विजयक्षेत्रात्पलायिष्ट महीपतिः ॥११४५॥
धिग्राज्यं यत्कृते सोपि सेहे प्राणाभिरक्षिषुः । मुष्णद्भिर्धीरचण्डालप्रायैः परिभवं पथि ॥११४६॥
माघे पलाय्य नगरं प्रविष्टः स वधाभिधे । भृत्ये द्रोग्धर्यशङ्किष्ट स्वेषामपि तनूरुहाम् ॥११४७॥
काश्मीरके[1] जनेशेषे निराशो[2] नितरां ततः । अकुन्यस्तोत्तमाङ्गोभूत्प्राज्ञिपक्षे क्षमापतिः ॥११४८॥
मुद्रिता रुद्रपालादिपूर्वराजात्मजप्रथा । प्रज्ञिना विक्रमत्यागनयाद्रोहादिभिर्गुणैः ॥११४९॥

1150 तेनैव वर्धितामुत्र देशे विशदकीर्तिना । कालदौरात्म्यलुलिता प्रतिष्ठा शाखाशाखयोः ॥११५०॥
अमन्त्रयत संगत्य यशोराजस्तु भिक्षुणा । नेच्छन्ति डामरा राज्यं तत्र विक्रमशङ्किताः ॥११५१॥
उत्पाद्य पुनरुत्पिञ्जं साधिष्ठानबला वयम् । राज्यं स्वयं ग्रहीष्यामो यास्यामो वा दिगन्तरम् ॥११५२॥
इति तैर्मन्त्रिते छुड्डां[1] हतां श्रुत्वा दरत्पुरात् । आगत्य मल्लकोष्ठोपि प्राविशत्स्वोपवेशनम् ॥११५३॥
वर्षोथ दुस्तरः ख्यात एकादशशतसंख्यया । सर्वभूतान्तकृल्लोके प्रावर्तत सुदारुणः ॥११५४॥

1155 वसन्ते डामराः सर्वे प्राग्वन्मार्गैर्निजैर्निजैः । आगत्य भूयो भूपालं नगरस्थमवेष्टयन् ॥११५५॥
धीरः सुस्सलदेवोपि पुनरासीद्दिवानिशम् । निःसीमसमरस्तोमारम्भसंरम्भभाजनम् ॥११५६॥
दाहलुण्ठनसंग्रामकर्मशौण्डैः स डामरैः । प्राग्विप्लवेभ्योप्यधिको विप्लवः पर्यवर्धत[1] ॥११५७॥
महासरित्पथे निर्निरोधे तस्थुर्विविक्षवः । नगरं ते यशोराजभिक्षुपृथ्वीहरादयः ॥११५८॥
ततः कतिषुचिद्युद्धाहेषु यातेषु संगरे । निजेनैव यशोराजः परकीयभ्रमाद्धतः ॥११५९॥

1160 कप्यात्मजेन हि समं विजयाख्येन सादिना । सौस्सलेन तु संग्रामे परावृत्तीः प्रदर्शयन् ॥११६०॥
विप्रलब्धैः सवर्णाश्वकवचावेक्षणाभिजैः । शूलायुधिभिरुद्दामैः शूलाघातैरहन्यत ॥११६१॥
भिक्षो राज्यं समर्थोयं दातुं हन्तुं ततश्च नः । भीत्वा तैर्डामरैरेव स घातित इति श्रुतिः ॥११६२॥
यथैव तेन विश्वस्तः स्वामी द्रोहेण वञ्चितः । तथैव प्राप विश्वस्तः क्षिप्रमेव वधं मृधे ॥११६३॥
पृथ्वीहरस्तत्र तत्र योधयित्वाथ डामरान् । क्षिप्तिकारोधसा भूयोभ्येत्य संग्राममग्रहीत् ॥११६४॥

1165 तत्राधिष्ठानयोधानां भिक्षुपक्षोपजीविनाम् । पौरुषं स्वपरोत्कर्षपरिभावि व्यभाव्यत ॥११६५॥
वह्निदानमहायोधसंहाराद्यैरुपद्रवैः । एकमेकमहस्तत्रानेहस्यासीद्द्व्याह्वम् ॥११६६॥
अतपत्तरणिस्तीक्ष्णमभीक्ष्णं भूरकम्पत । ववुर्द्रुमाद्रीन्भञ्जन्तो महोत्पातप्रभञ्जनाः ॥११६७॥
पवनोत्थापितैः पांसुकूटैर्दध्रे महोद्धतैः[1] । व्योम्नि प्रोत्तम्भनस्तम्भभङ्गिर्निर्घातदारिते ॥११६८॥

---

११४८. [1]) A काश्मीरिके.—[2]) Emended; A निराशो. ११५३. [1]) Emended with C; A °न्त्रितेच्छुड्डां. ११५७. [1]) Thus corr. by A₂ from A₁ - - - - भूत. ११६८. [1]) Thus A; G महोद्धृतैः.

ज्येष्ठस्य शुक्लैकादश्यां प्रवृत्तेथ महारणे । काष्ठीले डामरा वह्निमेकस्मिन्प्रददुर्गृहे ॥११६९॥
सोग्निर्वा मारुतोद्भूतः प्रसरन्वेश्मतोथ वा । जज्वालैकपदे कृत्स्नं नगरं निरवग्रहः ॥११७०॥ 1170
दृष्टस्तदानीमेतावन्नजम्बूह इवापतन्[1] । माक्षिकस्वामिनो धूमो बृहत्सेतौ यदुत्थितः ॥११७१॥
अथेन्द्रदेवीभवनविहारं सहसागमत् । ततो नगरमुज्ज्वालं क्षणात्सर्वमदृश्यत ॥११७२॥
न भूमिर्न दिशो न द्यौर्धूमध्वान्ते व्यभाव्यत । कुकुलामुखचर्माभो दृश्यादृश्योभवद्रविः ॥११७३॥
धूमान्धकारसंच्छन्नास्ततः प्रज्वलताग्निना । अपुनर्दर्शनायेव मुहुराविष्कृता गृहाः ॥११७४॥
वितस्ताद्दृश्यतोज्ज्वालवेश्माश्लिष्टतटद्वया । रक्ताक्तोभयधारेव कृतान्तस्यासिवल्लरी ॥११७५॥ 1175
ब्रह्माण्डोर्ध्वकवाटान्तसंस्पर्शोत्पतितोन्नतैः । ज्वालाकलापैः संवृद्धैर्हैमच्छत्रवनायितम् ॥११७६॥
उच्चावचैर्युतो ज्वालाशृङ्गैर्हैमाद्रिसंनिभः । वह्निर्धूमच्छलान्मूर्ध्नि बभाराम्बुधरावलिम् ॥११७७॥
आविर्भवन्तो[1] ज्वालाभ्यो गृहाश्चक्रुर्मुहुर्मुहुः । अदग्धा एते[2] इत्याशां विमुग्धगृहमेधिनाम् ॥११७८॥
ज्वलितैस्तापितजला[1] वितस्ता पतितैर्गृहैः । और्वोष्मवेदनाक्लेशं विवेद सरितां प्रभोः ॥११७९॥
दीप्तपक्षैः खगैः सार्धं ज्वलिता बालपल्लवाः । उद्यानद्रुमषण्डानां व्योमोड्डयनमादधुः ॥११८०॥ 1180
सुधासिताः सुरगृहा ज्वालासंवलिता व्यधुः । क्षयसंध्याम्बुदाश्लिष्टहिमाद्रिशिखरभ्रमम् ॥११८१॥
मज्जनायासनौसेतुकदम्बैः प्लोषशङ्कया । अपास्तैर्नगरस्यान्तर्यमुनैवोपि शून्यताम् ॥११८२॥
किमन्यन्मठदेवौकोगृहाट्टादिविवर्जितम् । नगरं क्षणमात्रेण दग्धारण्यमजायत ॥११८३॥
लोष्टावशेषे नगरे धूमश्यामो निरास्पदः । उच्चैरेको बृहद्बुद्धो दृष्टो दग्धद्रुमोपमः ॥११८४॥
सैन्येषु ज्वलितावासत्राणाय चलितेष्वथ । शतमात्रेण योधानां युतो भूभृदजायत ॥११८५॥ 1185
पारं गन्तुं वितस्ताया भिन्नसेतुं तमक्षमम् । लब्धरन्ध्रा द्विषोनन्ता निहन्तुं पर्यवारयन् ॥११८६॥
पुरं दग्धं स्वमुत्सन्नं[1] प्रजा नष्टाश्च चिन्तयन् । आसन्नं मरणं राजा निर्विण्णो बह्वमन्यत ॥११८७॥
प्रस्थातुमथ तं प्रत्यङ्मुखमाशङ्क्य विद्रुतम् । संज्ञितोन्यैः कमलियः क देवेत्यब्रवीद्वचः ॥११८८॥
संरम्भस्मितविद्योति चन्दनोल्लेखमाननम् । परिवर्त्य निरुद्धाश्वो धीरः स तमभाषत ॥११८९॥
तदद्य करवै भूमेः कृते हम्मीरसंगरे । चकार राजा भिञ्जो यस्तोभिमानी पितामहः ॥११९०॥ 1190
कुतस्त्योप्येष[1] दायादो यद्वातास्माकमस्मि वा । स हर्षदेवोपदश्यत्नः कार्यशेषं पलायितः ॥११९१॥
को नाम मानिनां पङ्क्तौ प्रविष्टोन्ते निजां भुवम् । असिक्तां स्वाङ्गरक्ताक्तां[1] व्याघ्रः कृत्तिमिवोज्झति ॥११९२॥
इत्युक्त्वोदञ्चयन्वल्गामुत्क्षिप्ताग्रमुखं हयम् । संस्प्रष्टुमिच्छुः[1] पाणिभ्यां कृपाणमुदनामयत् ॥११९३॥
ततो निगृह्य[1] वल्गायां वाजिनं लवराजजः । ऊचे भृत्येषु सत्स्वग्रे प्रवेशार्हो न भूभुजः ॥११९४॥
प्रहारविह्वलस्तिष्ठन्गृहादेकोभ्युपाययौ । संकटे तत्र भूभर्तुः[1] पृथ्वीपालोन्तिकं परम् ॥११९५॥ 1195
कौलपुत्र्यं स्तुवंस्तस्य वात्सल्यादेव भूपतिः । स्वस्यात्तनिष्क्रयां[1] मेने सेवाविष्कृत्युपक्रियाम् ॥११९६॥

---

११७१. [1]) Thus corr. by $A_1$ from °पतत्. ११७८. [1]) Emended with C; A °भवन्त्यो.—[2]) Emended; A एत. ११७९. [1]) Emended with C; A ज्वलितैर्°. ११८७. [1]) Emended; A स्वमुत्सन्नं. ११९१. [1]) Emended with C; A कुतस्त्येवैकोप; doubtful. ११९२. [1]) Emended with C; A स्वाङ्गरक्तां. ११९३. [1]) Emended; A संस्पृष्टुमिच्छुः; cf. viii. 1528 ११९४. [1]) Emended with C; A निर्गृह्य. ११९६. [1]) Emended with C; A स्वस्यात्तनिष्क्रियां.

अथ स्थितास्त्रिभिर्व्यूहैरहितास्तेकिरङ्शरान् । हन्तुं वामेन ते योधाः सर्वे वाहनदुर्मदाः ॥११९७॥
स प्रेरयंश्च तुरगं दैवात्तस्य च तादृशः । सहस्राण्यपि भूरीणि व्यधीयन्त विरोधिनाम्[1] ॥११९८॥
अल्पसैन्यो द्विषत्खड्गमण्डलप्रतिबिम्बितः । नृपः साहायकायातविश्वरूप इवाबभौ ॥११९९॥
1200 कलविङ्कानिव श्येनः कुरङ्गानिव केसरी । एको व्यद्रावयद्वीरानरीन्सुस्सलभूपतिः ॥१२००॥
निपत्य पत्तीन्रुन्धानान्खुराग्राण्यपि वाजिनाम् । प्राहरंस्ते हयारोहा व्यूहव्याहतरंहसः ॥१२०१॥
बिम्बितज्वलनज्वालाः सर्व एव महाभटाः । हन्तव्याश्च हताश्चासन्नसृक्स्रोतोरुणा इव ॥१२०२॥
स द्विषां कदनं कृत्वा दिनस्यान्ते न्यवर्तत । बाष्पायमाणोस्तकाशं[1] हव्याशेनोज्झितं पुरम् ॥१२०३॥
तादृशेप्यजिते तस्मिञ्जयाशागौरवं द्विषः । स चौज्झीद्रमणीयस्य विनाशाज्जीवितादरम् ॥१२०४॥
1205 आपन्स्वपक्षलंस्तिष्ठन्नसभश्च सौरिभिः । निर्गच्छन्नित्यमाहूतो न कैरुद्बाष्पमीक्षितः ॥१२०५॥
वह्निनिर्दग्धसर्वान्नसंभारे मण्डलेखिले । दुःसहः सहसैवाथ घोरो दुर्भिक्ष आययौ ॥१२०६॥
दीर्घविप्लवसंक्षीणसंचया डामरैर्बहिः । उत्सन्धोत्पत्तयो रुद्धसंचारा दग्धमन्दिराः ॥१२०७॥
अनाप्नुवन्तो विधुरे राज्ञि राजकुलागमम् । दुर्भिक्षे तत्र सामन्ता अपि क्षिप्रं विपेदिरे[1] ॥१२०८॥
वह्निनिष्ठ्यूतशेषाणि वेश्मान्यन्नाभिलाषिभिः । बुभुक्षार्तैर्जनैर्दग्धो ददाहाग्निर्दिने दिने ॥१२०९॥
1210 सरितां सेतवो वारिसंसेकोच्छूनविमर्दैः । दुर्गन्धाः कुणपै रुद्धमार्गैस्तीर्णास्तदा जनैः ॥१२१०॥
निर्मांसनरकङ्कालकपालशकलाकुला[1] । उवाह सर्वतः श्वेता क्षितिः कापालिकव्रतम् ॥१२११॥
कृच्छ्रसंचारिणोकीभुग्नश्यामक्षामोन्नतविग्रहाः । व्यभ्राम्यन्त बुभुक्षार्ता दग्धस्थाणुनिभा जनाः ॥१२१२॥
अथ प्रबन्धयुद्धेन दिनैः कापीषुणा क्षतः । पृथ्वीहरो मृत इति श्रुतिर्मिथ्यैव पप्रथे ॥१२१३॥
गाढप्रहारविवशे तस्मिन्प्रच्छादिते जनैः । तां वार्तां श्रुतवान्राजा ननन्दायुद्ध चोद्धतम् ॥१२१४॥
1215 धीरेव पुंश्चली व्याजौत्सुक्यसंदर्शनेन तम् । जयश्रीर्लोभयन्त्यासीन्न तु भेजे समुत्सुकम् ॥१२१५॥
एकान्तवामहृदयो विधिरानुकूल्यं मिथ्या प्रदर्श्य विशिनष्ट्यनुबन्धि दुःखम् ।
अन्धीकरोति भृशमभ्रमगं ज्वलन्तं भास्वन्महौषधिभिदे प्रकटय्य वज्रम् ॥१२१६॥
दीर्घदुःखानुभूत्यन्ते यदीयागमनोत्सवम् । तपःफलमिव क्ष्माभृत्काङ्क्षन्नासीन्मनोरथैः ॥१२१७॥
वात्सल्येनान्वितं प्रेम गौरवेण प्रियं वचः । औचित्येन च दाक्षिण्यं सापत्न्यमिव या दधे ॥१२१८॥
तस्योपकरणीभूतविभूतिर्गृहिणी प्रिया । तस्मिन्काले महादेवी विपेदे मेघमञ्जरी ॥१२१९॥तिलकम्[1]॥
1220 विनोदशून्यनिर्विण्णलोकयात्रं जगद्विदन्[1] । प्राणै राज्येन वा कृत्यं न स किंचिन्निरैक्षत ॥१२२०॥
सा भर्तुर्व्यसनोदन्तैः कृशा काश्मीरसंमुखी । औत्सुक्यात्त्वरयायासीच्छ्रान्ता फुल्लपुरान्तिके ॥१२२१॥
पूर्वं तद्दर्शनाशाया दुर्वार्तायास्ततोतिथिः । भवन्नतोधिकं राजा दुःखावेगेन पस्पृशे ॥१२२२॥
राज्ञीमज्ञातपारुष्यतयादूषितभक्तयः । अनुसस्रुश्चतस्रस्ताः परिवारवरस्त्रियः ॥१२२३॥
अप्रत्यक्षे क्षयेप्यस्या भक्त्युद्रिक्तास्त्वमत्यजन् । तेजो नामाभवत्सूदो वन्द्यो भृत्यान्तरेधिकम् ॥१२२४॥
1225 स ह्यसंनिहितोन्यस्मिन्नहन्यायातो निजं शिरः । तच्चितोपान्तकुड्येन भङ्क्त्वा प्राणाविशान्नदीम् ॥१२२५॥

११९७—११९८. [1]) The text in these two verses appears to be corrupt or incomplete. १२०३. [1]) Thus A. १२०८. [1]) Emended; A प्रपे°. १२११. [1]) Emended with C; A °कुला.. १२१९. [1]) $A_1$ writes here ३ instead of तिलकम्. १२२०. [1]) शून्य supplied by $A_2$ in space left by $A_1$.

आहवाह्वानसंरम्भैः शोकविस्मृतिकारिणः । राज्ञो द्विषः कार्यवशादुपकारित्वमाययुः ॥१२२६॥
स राज्यमथ निक्षेप्तुकामो निर्विण्णमानसः । व्युत्क्रान्तशैशवं पुत्रमानिन्ये लोहराचलात् ॥१२२७॥
मण्डलेश्वरतां प्रज्जेर्भ्रातृव्यं भागिकाभिधम् । नीत्वा च गुप्तिमकरोल्लोहरे कोशदेशयोः ॥१२२८॥
वराहमूलं संप्राप्तमथायातः प्रियं सुतम् । आश्लिष्य विषयो राजा बभूवानन्दशोकयोः ॥१२२९॥
राजसूनुस्त्रिभिर्वर्षैः प्रत्यायातः स्वमण्डलम् । स पश्यन्पितरं चान्तरसुस्थितमतप्यत ॥१२३०॥ 1230
खेदम्लानननो लोष्टावशेषं सोऽविशत्पुरम् । अम्बुलम्भाम्बुदो दावनिर्दग्धमिव काननम् ॥१२३१॥
राज्येऽभ्यषिञ्चदाषाढस्याद्येऽह्नि जनकोऽथ तम् । अवादीद्राज्यतन्त्रं च कृत्स्नमुक्त्वा सगद्गदः ॥१२३२॥
श्रान्ताः पितृपितृव्यास्ते न यां वोढुमशक्नुवन् । धुरमुद्वह तां वीर त्वयि भारोऽयमर्पितः ॥१२३३॥
साम्राज्यप्रक्रियामात्रपात्रं पुत्रं नृपो व्यधात् । न त्वार्पिपदधीकारं तस्मिन्दैवविमोहितः ॥१२३४॥
अभिषेकविधावेव राजसूनोः शमं ययुः । पुरोपरोधावमाहव्याधिचौराद्युपद्रवाः ॥१२३५॥ 1235
संपन्नसस्या च तथा देवी संववृते मही । दुर्भिक्षं श्रावणे मासि यथावत्प्रशमं ययौ ॥१२३६॥
अत्रान्तरे सिंहदेवो रणे कुर्वन्नरिक्षयम् । कर्णजपैर्जनयितुर्द्रोग्धायमिति सूचितः ॥१२३७॥
कोपादविमृशंस्तत्त्वं स बन्द्धुं तं व्यसर्जयत् । कृत्यात्मकं राजसूनुस्तत्तु प्रागेव बुद्धवान् ॥१२३८॥
कोपस्मितोत्कटस्याग्रे स तस्याप्रतिभोऽभवत् । निनाय रक्षामात्रेण पार्थिवाज्ञाममोघताम् ॥१२३९॥
अभुक्तवान्मनस्तापात्प्रत्ययोत्पत्तये पितुः । साकं तेन सुतोऽन्येद्युर्गन्तुं प्रावर्ततान्तिकम् ॥१२४०॥ 1240
आक्षेप्तुं शङ्कितोऽशक्य इति मत्वा स मन्त्रिभिः । मार्गाद्व्यवर्तयत तं पिता मिथ्या प्रसादयन् ॥१२४१॥
अन्तस्तु निश्चिकायेति प्रविश्यातर्कितागमः । बद्ध्वैनं स्थापयिष्यामि कारायामिति सोऽनिशम् ॥१२४२॥
धिग्राज्यं यत्कृते पुत्राः पितरश्चेतरेतरम् । शङ्कमाना न कुत्रापि सुखं रात्रिषु शेरते ॥१२४३॥
पुत्रपत्नीसुहृद्भृत्या येषां शङ्कानिकेतनम् । विस्रम्भभूर्भूपतीनां कस्तेषामिति वेत्ति कः ॥१२४४॥
साह्याभिधानप्रख्यातकुमारोपान्तवासिनः । खलपालस्य तनयः स्थानकाख्यस्य कस्यचित् ॥१२४५॥ 1245
शैशवे पाभुपाल्येन वर्धितो डामरोद्भवैः । गृहीतशस्त्रस्तत्स्थित्यं क्रमाट्टिक्कस्य लब्धवान् ॥१२४६॥
प्रथमाभ्यागतभृत्यात्सदृश्यो भूभर्तुराप्तताम् । प्रययावुत्पलो नाम वैरिविच्छेदमिच्छता ॥१२४७॥
स हि भिक्षाचरं टिक्कमथ व्यापादयेत्यमुम् । जगादाङ्गीकृतैश्वर्यदानष्टिक्कोपवेशने ॥१२४८॥
कृतप्रतिश्रवं तस्मिन्नर्थे तं च महर्द्धिभिः । दानैरुपाचरद्रञ्जपतिनाप्ययोजयत् ॥१२४९॥
भोगलोभप्रभुद्रोहचिन्तादोलायमानधीः । स कार्यं परिहार्यं वा न कृत्यं निश्चिकाय तत् ॥१२५०॥ 1250
प्रासोष्टापत्यमथान्यस्तद्वधूः कार्यतो नृपः । तस्याश्च प्राहिणोत्तस्यै पितेव प्रसवोचितम् ॥१२५१॥
सा तस्माद्युपचारस्य कारणं परिशङ्किता । पतिं पप्रच्छ निर्बन्धात्सोऽपि तस्यै न्यवर्णयत् ॥१२५२॥
न कार्यः स्वामिनो द्रोहः कृते वास्मिन्न सुस्सलः । त्वामेव शनकैर्हन्याद्द्रोग्धायमिति चिन्तयन् ॥१२५३॥
वरं स एव विश्वास्य व्यापाद्यस्तव चेद्वधः । अनेन स्वामिपुत्रादिकुटुम्बं स्याद्विभूतिभाक् ॥१२५४॥

---

१२३८. [1]) A °विमृशं°.—[2]) Emended; A बन्धुं. १२४४. [1]) Thus A. १२५१. [1]) Emended with C; A प्राहिणो°.

1255 भार्यवेति प्रेर्यमाणः स निश्चयविपर्यये । टिक्कं विदितवृत्तान्तं कृत्वा वड्डोद्यमः कृतः ॥१२५५॥

गतागतानि कुर्वाणे दुधुक्षावथ पार्थिवः । स पुत्र इव विश्वासं ययौ दैवविमोहितः ॥१२५६॥

विपर्यस्ता मतिः पुत्रे विश्वासो वैरिसंश्रिते । जायते क्षीणभाग्यानां को नाम न विपर्ययः ॥१२५७॥

वैधेयैः स्वार्थलोभान्धैर्यद्वानर्थसमागमः । सरघोपद्रवः क्षौद्रलुब्धैरिव न चिन्त्यते ॥१२५८॥

तं पीडितं प्रज्जिना च राज्ञा चावनतिं ततः । उत्पलोऽकारयट्टिक्कं नीत्वि चादापयस्तुतम् ॥१२५९॥

1260 राजाथ देवसरसं जितं संत्यज्य कार्तिके । वाहूकाख्यमगाद्ग्रामं खेरीविषयवर्तिनम् ॥१२६०॥

स कल्याणपुराभ्यर्णे रणैस्तैस्तैर्विलक्षताम् । भिक्षुकोष्ठेश्वरमुखानपि निन्ये महाभटान् ॥१२६१॥

मध्याद्भिक्षाचरादीनां सुज्जिः[1] काककुलोद्भवम् । जीवमाहं महावीरं युधि जग्राह शोभकम् ॥१२६२॥

भवकीयस्य कृत्वादौ विजयस्य पराभवम् । भूभुजा तद्गृहा दग्धाः कल्याणपुरवर्तिनः ॥१२६३॥

दग्धे वड्डोसके[1] भिक्षाचरो नष्टाभयो व्यधात् । त्यक्त्वा तां क्ष्मां शमालायां ग्रामे काकरुहे स्थितिम्[2] ॥१२६४॥

1265 अनुजो भवकीयस्य विजयस्य भयात्रृपम् । संश्रितस्तेन तुष्टेन बद्ध्वा कारागृहेऽर्पितः ॥१२६५॥

भूरिसैन्यानुगं शूरपुरे विन्यस्य रिल्हणम् । आस्कन्दाशङ्किनीं राजा चक्रे राजपुरीमपि ॥१२६६॥

इत्थमुद्दण्डया वृत्त्या खण्डितोद्दण्डडामरः । स्तोकावशेषं सोऽपश्यत्कर्तव्यमरिनिर्जयम् ॥१२६७॥

भिक्षाचरो लवन्याश्च शक्तिक्षयमुपागताः । विदेशगमनं भीता रिपौ बलिनि मेनिरे ॥१२६८॥

किमप्यभाग्यावतारैर्भिक्षुपक्षजुषां यतः । जीवतामप्यनुल्लासान्निर्जीवत्वमिवाययौ ॥१२६९॥

1270 स सोमपालकौटिल्यं स्मरन्कुर्यां हिमात्यये । श्मशानोर्वी राजपुरीमिति ध्यायन्व्यवर्तत ॥१२७०॥

शान्तप्रायस्वदेशोर्वीविग्रहस्य महीपतेः । तस्यार्गलान्तक्रमणप्रतीतिः समभाव्यत ॥१२७१॥

शतैकीयो योऽवशिष्टो विप्लवक्षपिते जने । वर्षं वर्षं स तद्राज्ये युगदीर्घं त्वमन्यत ॥१२७२॥

असुखवासदारिद्र्यप्रियनाशादिवैशसैः । स राज्यकालः सर्वस्य परितापावहो ऽभूत् ॥१२७३॥

नरः पौरुषनैष्ठुर्यशठत्वेन करोति किम् । विधातृवृत्तिवैचित्र्यपराधीनाश्च सिद्धिषु ॥१२७४॥[1]

पुरोभूतं कंचित्परिहरति राशिं तम इव व्यतीते कस्मिंश्चिद्धरिरिव विवृत्यास्यति दृशम् ।

1275 स्वमुत्प्लुत्यासन्नं क्वचन नृपतिं दर्दुर इव क्रमेत्सद्युर्दृष्टः स्फुटमिति गतीनामनियमः ॥१२७५॥

विश्वासनिहतांश्चिन्वन्सुस्सलादीन्पुरावसत् । नित्यं विकोशशङ्खो यः पुराविद्यो निशम्य च ॥१२७६॥

विदूर[1]थाविवृत्तान्तं नादात्केलिक्षणे क्षुवन् । स्त्रीषु संभुज्यमानाश्च[2] विश्वासविशदां दृशम् ॥१२७७॥

स बन्धाविव निर्बन्धाद्विशश्वास यदुत्पले । तत्र संभाव्यते केन दैवादन्यो विमोहकृत् ॥१२७८॥

टिक्कादयो भूमिपतेः सुज्जेर्वान्यतरे[1] हते । स्वां तुल्यकार्यकर्तारं विद्म इत्यूचुरुत्पलम् ॥१२७९॥

1280 सुज्जिर्न व्यश्वसीत्तस्मिन्स जिघांसुस्तु भूभुजम् । तत्र तत्राभवत्सज्जः प्रसङ्गं नासदत्पुनः ॥१२८०॥

प्रतिभुवविलम्बेन समन्योरथ भूपतेः । प्रत्ययोत्पत्तये देवसरसाजीविमात्मजम् ॥१२८१॥

---

१२५८. [1]) $A_2$ gloss सरघा मधुमक्षिका ( *Amara.* ii. 5. 26 ). १२६२. [1]) Emended ; A सुज्जि. १२६४. [1]) A वड्डोसके ; perhaps read वड्डोरसके. Cf. वाड्डोरस्स: viii. 1306.—[2]) Emended with C ; A स्थितं. १२७१. [1]) The last two *pâdas* have become in A partly illegible by an ink blot and have been repeated in the margin by the same hand which supplemented the gloss to i. 110. १२७४. [1]) Emended with C ; A °वैचित्र्य°. १२७७. [1]) Emended with C; A विदूरथा°. —[2]) Emended ; A °मानास्वाविश्वास°. १२७९. [1]) Emended ; A °न्यतमे.

व्याघ्रमश्वस्तराजादींस्तीक्ष्णांश्चात्मसमान्परान् । आदाय कार्यमेतैर्मे सिध्येदित्युक्तवान्नृपम् ॥१२८२॥
उचितेभ्योऽधिकं सेनाभ्यो गृहीतैः साहसक्षमैः । शतैः समं त्रिचतुरैः पत्तीनामेकशो ययौ ॥१२८३॥तिलकम्॥
समयान्वेषिणो हन्तुस्तस्यासन्नस्य सर्वदा । मिथ्याहारादिदानेन हन्तान्तःप्रीतिकार्यभूत् ॥१२८४॥
तुरंगं मन्दुराचक्रवर्त्याख्यं नगरस्थितम् । अस्वस्थमुज्ञापयितुं तुरगव्यसनी नृपः ॥१२८५॥ 1285
स लक्ष्मकप्रतीहारकट्याल्मप्रमुखान्निजान् । पार्श्वाद्विसृष्टवांनासीत्क्षणे तस्मिन्मितानुगः ॥१२८६॥
भृङ्गारो लक्ष्मकापत्यं निशम्याप्तैर्निवेदितम् । व्यधाच्छ्रुतिपथे राज्ञस्तदुत्पलचिकीर्षितम् ॥१२८७॥
विरुद्धे बन्धुधीर्दृष्टहिंसारम्भेऽपि संभवेत् । आसन्नजीवितान्तस्य जन्तोः सूनापशोरिव ॥१२८८॥
स शापो गान्धार्यास्तदपि सदृशो भाषितमृषेस्त उत्पाताश्चक्षुः स्वमपि तदभीमं प्रकटयत् ।
कुलान्तं तत्त्राणाक्षममकृत वैकुण्ठमपि तद्विदन्नप्यन्यत्वं क इव भवितव्यस्य कुरुताम् ॥१२८९॥
मिथ्यैतदित्यधिक्षिप्य क्षितिपालः प्रदर्शयन् । तमङ्गुल्योत्पलादींस्तानपस्थानेवमब्रवीत् ॥१२९०॥ 1290
द्रोग्धुः कुतोऽभवद्योगादनिच्छन्स्वास्थ्यमेव मे । त्वां दुष्टमुत्पलाचष्टे स्वेनान्यैर्वाथ चोदितः ॥१२९१॥
ते छादयन्तः स्मेरास्या धार्ष्ट्येन भयवैकृतम् । वक्ति देवो यदस्माभिर्वाच्यमित्येवमूचिरे ॥१२९२॥
निर्यातेष्वथ तेष्वीषत्साशङ्क इव निश्चलाम् । द्वाःस्थेनाकारयद्विद्वानन्तिके मुख्यशस्त्रिणः ॥१२९३॥
उन्मनाश्च किमप्यासीद्विनिःश्वस्य स चिन्तयन् । साश्रुश्च न रतिं लेभे नृत्तगीतादिदर्शने ॥१२९४॥
मेने वैदेशिकप्रायानाप्तानपि धृतभ्रमः । पुण्यक्षये विपतिषुर्वैमानिक इवाम्बरात् ॥१२९५॥ 1295
राजान्तरङ्गाः साशङ्काः प्रभौ शाठ्येन मोहिते । पूत्कारमैच्छन्दातारमन्यं केचिदचेतनाः ॥१२९६॥
अयमेव स कालस्य बलात्कवलनग्रहः । विदन्तोऽपि यदायान्ति जन्तवः कृत्यमूढताम् ॥१२९७॥
सर्वान्तरक्षणेष्वस्तत्रक्षुधो दिवसद्वयम् । उत्पलाद्याश्च साशङ्काः कथमप्यत्यवाहयन् ॥१२९८॥
रहः क्षणप्रार्थिनस्तांस्तृतीयेऽह्न्यब्रवीन्नृपः । स्नात्वा प्रत्यूषे तत्पूर्वं भोक्तुं यात मुहुर्गृहम् ॥१२९९॥
देवतार्चनपर्यन्तमवसायाह्निकं विधिम् । आजुहावोत्पलं दूतैर्मध्याह्ने च रहःस्थितः ॥१३००॥ 1300
कार्यसिद्धिं श्रद्दधानो वैजन्याद्राजसद्मनः । राज्ञोऽभ्यर्णे स साशङ्कं द्वाःस्थदत्तानुगोऽविशत् ॥१३०१॥
प्रावेशयद्द्वारि रुद्धं व्याघ्रं तदनुजं नृपः । शेषाणामपि भृत्यानामादिदेश बहिःस्थितिम् ॥१३०२॥
विलम्बमानेष्वाप्तेषु केषुचित्सदृशो वचः । सत्यं तस्योपयायास्तां सोऽत्र द्रोग्धा य इत्यपि ॥१३०३॥
ताम्बूलदायकः प्रौढवयास्तेनावरोधितः । सांधिविग्रहिको विद्याव्राहिलश्चान्तिके परम् ॥१३०४॥
दूती टिक्कस्यार्थदेवतिष्यवैद्याभिधावुभौ । तत्र प्रसङ्गादासातामज्ञातोत्पलसंविदौ ॥१३०५॥ 1305
वाडीरसः सुखराजाख्यो डामरो भिक्षुसंमतः । प्रयास्यति प्रभोर्दृष्टा पादौ तत्कार्यसिद्धये ॥१३०६॥
इत्युक्तवांस्तेष्वहःसु तं नृपं नातिदूरगम् । ससैन्यं डामरं चक्रे स्वस्य त्राणार्थमुत्पलः ॥१३०७॥
तथा चैनं तस्थिवांसं कृत्यमस्त्यमुनेति च । उक्त्वा प्रशस्तराजं तं पार्श्वं प्रावेशयद्द्रुतम् ॥१३०८॥
प्रविष्टो निर्जनं बाह्यमाकलय्य स मण्डपम् । अलक्ष्यमाणव्यापारो द्वारमर्गलितं व्यधात् ॥१३०९॥

१२८२. [1]) Emended; A °स्मसराम्परान्. १२८३. [1]) A₁ writes here ३ instead of तिलकम्. १२८६. [1]) Thus A₁; A₂ पक्ष्मक.°— [2]) वा supplied by A₂ in space left by A₁. १२८९. [1]) Emended; A प्रकटयन्. १३०१. [1]) Emended; A द्वास्थ. १३०५. [1]) Emended, A °स्यार्थदेवतिष्यवैद्य°; Cf. viii. 1543. १३०६. [1]) A वाळीरसः perhaps read वाडोरसः. Cf. वडोसके viii. 1264.—[2]) A सु × ख°. १३०७. [1]) A डमरं.

1310 नागार्द्रकेशां शीतालुतया प्रावारवेष्टितम् । कृत्वा कृत्स्नं वपुः कृष्टशस्त्रीकं विष्टरोपरि ॥१३१०॥
आसीनं वीक्ष्य नृपतिं प्रसङ्गो नेदृशो भवेत् । विज्ञप्तिं कुरु भूभर्तुरित्यूचे व्याघ्र उत्पलम् ॥१३११॥
स तया संज्ञया व्यग्रः पादप्रणतिकैतवात् । राज्ञोऽग्रमेत्य तच्छस्त्रीं विष्टरस्थामपाहरत् ॥१३१२॥
विक्रोशां[1] चाकरोत्पश्यंस्तां तयोर्भ्रान्तलोचनः । प्राह स्म हा धिक्किं द्रोह इति यावद्वचो नृपः ॥१३१३॥
प्राहरत्प्रथमं तावत्सव्ये पार्श्वे तयैव सः । तस्य प्रशस्तराजेन मूर्धनि प्रहृतं ततः ॥१३१४॥ युग्मम्[1] ॥
1315 व्याघ्रेणाथ क्षतं वक्षस्ताभ्यामेवासकृत्तदा । प्रहृतं तत्र स पुनः प्राहरत्स द्विरुत्पलः ॥१३१५॥
पूर्वमेव प्रहृत्या हि छिन्नपार्श्वास्थिमालया । मेने कृष्टान्त्रतन्त्रीकं स तं प्रोषितजीवितम् ॥१३१६॥
गत्वा तमोरिं पूत्कर्तुमिच्छन्व्याघ्रेण राहिलः । पृष्ठे कृताहतिश्छिन्ना नालिका नोज्झितोऽसुभिः ॥१३१७॥
ताम्बूलदायकस्त्यक्त्वा कङ्कोला[1]घउजको व्रजन् । दीनो निजेभ्यः कारुण्यादुत्पलेनैव रक्षितः ॥१३१८॥
अन्तः समुत्थिते क्षोभे बाह्यमण्डपवर्तिभिः । टिक्काद्यैः कृता लुण्ठिर्द्रोहगृह्यैरुदायुधैः ॥१३१९॥
1320 उत्पलो निहतो राज्ञेत्यथेत्य कटकस्थितैः । बहिःस्थान्हन्यमानांस्तान्समाश्वासयितुं ततः ॥१३२०॥
रक्तार्द्रशस्त्रं संदर्श्य तमोरेर्वपुरुत्पलः । ऊचे मया हतो राजा न त्याज्या तद्भूरिति ॥१३२१॥
तच्छ्रुत्वा दुःश्रवं राजभृत्याः क्वापि भयाद्ययुः । द्रोहानुगास्त्वङ्गनान्तर्लब्धोल्लासा व्यधुः स्थितिम् ॥१३२२॥
निर्यान्तो मण्डपात्तीक्ष्णा निजधुर्नागकाभिधम् । द्वाराविष्टं निष्कृष्टकृपाणीकं नृपानुगम् ॥१३२३॥
भूपालशय्यापालस्य[1] त्रैलोक्याख्यस्य सेवकः । निन्दन्द्रोहं टिक्काद्यैर्द्वाःस्थथैको[2] विपादितः[3] ॥१३२४॥
1325 उत्कृष्टं नष्टसत्त्वानां मध्ये राजानुजीविनाम् । सखेटकासिं धावन्तं भावुकान्वयभूषणम् ॥१३२५॥
दृष्ट्वा सहजपालाख्यं पार्श्वद्वारेण निर्ययुः । तीक्ष्णाः स त्वपतद्भूमौ तद्भृत्यप्रहतिक्षतः ॥१३२६॥
जाते कुकीर्तिकालुष्यपात्रे राजात्मजव्रजे । वैलक्ष्यक्षालनं सिद्धं तस्य स्वक्षतजैः परम् ॥१३२७॥
हतो[1] दौशिकसंबन्धिदेहो राजात्मव्रजमात् । विहाग्निजन्मा नोनाख्यस्तीक्ष्णपक्षैः पुरो गतः ॥१३२८॥
अक्षतान्व्रजतो वीक्ष्य तीक्ष्णान्प्रासान्तरोन्मुखान् । चित्रार्पिता इव क्रोधाबाधावन्तोऽपि शस्त्रिणः ॥१३२९॥
1330 राजवंश्या महीपालप्रीतिपात्रमथाययुः । स्थगयन्तोऽङ्गनं स्थूलकाया जनविवर्जितम् ॥१३३०॥
तांस्तान्कापुरुषान्हर्षदेवोदन्तात्प्रभृत्यलम् । स्मृत्वा च कीर्तयित्वा च कृतभारग्रहा इव ॥१३३१॥
जाता दुष्कृतसंस्पर्शात्खेदात्कर्तुं न शक्नुमः । पापात्पापीयसां येषां नामग्रहणसाहसम् ॥१३३२॥
अङ्गनान्मण्डपारूढं मन्वानाः पौरुषं महत् । पापिनः केऽपि तन्मुख्या ददृशुः स्वामिनं हतम् ॥१३३३॥
अधरेणास्त्रसंस्कारलेशावेशप्रकम्पिना । वदन्तं हन्तदष्टेन स्वान्तस्यान्तेऽनुतप्तताम् ॥१३३४॥
1335 वञ्चितः कथमेषोऽहमिति मामेति चिन्तया । निस्पन्दे जीवितान्तेऽपि तथैव दधतं दृशौ ॥१३३५॥
श्यामायमानं वाष्पेण व्रणवक्त्रैरुदञ्चता । अन्तःप्रशान्तामर्षाग्निशेषधूमलताश्रिया ॥१३३६॥
आननस्यास्फुटीभूतचन्दनोल्लेखकुङ्कुमम् । लक्ष्या लिखितस्येव घनक्षतजलाक्षया ॥१३३७॥
आह्वानाब्जजटीभूतकेशं नग्नं भुवि च्युतम् । पर्यस्तपाणिचरणं स्कन्धामालम्बिकन्धरम्[1] ॥१३३८॥

१३१३. [1]) Emended with C; A विक्रोशां. १३१४. [1]) $A_1$ writes here २ instead of युग्मम्. १३१८ [1]) Emended; A काकुला°. १३२४. [1]) Conjectural reading; A °शकथापालस्य.—[2]) Emended; A °ह्रांस्थथैकौ.—[3]) Emended; A स्वपादितः. १३२८. [1]) Emended; A हतवेशि°. १३३१. [1]) The first *páda* of this verse has been first omitted and subsequently supplied by $A_2$ in margin. १३३८. [1]) A कन्धरम्.

तं वीक्ष्य नोचितं किंचिदग्निरुद्धे नराधमाः । पैजन्यस्य फलं भुक्त्वेत्यावेगादधिचिक्षिपुः ॥१३३९॥
बद्धा तुरंगे युग्ये वा न तैर्नीतधितामिषात् । कर्तुं न वा पारितः स प्राणत्राणाय धाविते ॥१३४०॥ 1340
आस्तां विलम्बसाध्यं वा कर्मैतद्राष्ट्रदारुणात् । सज्जामि चामिषात्रेहमपि कश्चिन्न नाकरोत् ॥१३४१॥
राजवाजिनमेकैकं तेऽध्यारुह्य पलायिताः । निर्लुण्ठितस्तु कटको व्रजन्मार्गेषु डामरैः ॥१३४२॥
न पुत्रः पितरं पुत्रं पिता वा प्रत्यपालयन् । मृतं हतं लुण्ठितं वा प्रचलन्सहिमेऽध्वनि ॥१३४३॥
न कोपि शस्त्रभृत्सोभूत्स्मृत्वा मानोन्नतिं पथि । परैराक्षिप्यमाणो यः शस्त्रं वस्त्रं च नात्यजत् ॥१३४४॥
लवराजयशोराजद्विजौ व्यायामवेदिनौ । कान्दश्च राजा निहता वीरवृत्त्या ययुः परम् ॥१३४५॥ 1345
अदूरादुत्पलाद्यास्तु कटकं वीक्ष्य विद्रुतम् । प्रविष्टा वाहुवं[1] छित्त्वा शिरो निन्युर्महीपतेः ॥१३४६॥
गतेषु देवसरसं तेषु छिन्नशिरा नृपः । हतश्चौर इव प्राप ग्राम्याणां प्रेक्षणीयताम् ॥१३४७॥
एवं श्रीहर्षस्तृतीयाब्दामावास्यायां स फाल्गुने । पञ्चपञ्चाशतं वर्षाण्यायुषोतीतवान्हतः ॥१३४८॥
विलासशयनस्थस्य सिंहदेवस्य सा श्रुतौ । प्रेमाकथ्यनैत्य दुर्वार्ता धात्रेयेण व्यधीयत ॥१३४९॥
संभाव्यते योनुभावः[1] सशास्त्रस्याप्रियश्रुतौ । हतशास्त्रोपि तं प्राप स तदा पितृवत्सलः ॥१३५०॥ 1350
मोहलुप्तस्मृतिः स्मृत्वा चिरादुन्नतचेतनः । तद्दुःखाहतधृतिर्विललाप स्फुटास्फुटम् ॥१३५१॥
मदर्थं कुर्वता राज्यं प्रयत्नादपकण्टकम् । अधमे किं महाराज त्वयात्मा परिभावितः ॥१३५२॥
अद्वैतैः पश्यतः शत्रूनन्ते वैरविशुद्धये । अपि ते मानिनोगच्छंस्तात संभावनाभुवम् ॥१३५३॥
त्वया निवेदिते वैरे पिता भ्राता च ते दिवि । निर्मन्युः संप्रति त्वं नु वर्तसे मन्युदुःस्थितः ॥१३५४॥
अनरण्यकृपद्रोणजामदग्न्यादिषु स्पृहाम् । कुल्यक्षालितवैरेषु मा[1] कार्षीः कांचन क्षणम् ॥१३५५॥ 1355
शोच्यस्त्वदाश्रयो मन्युरहं शोधयिता नृप । दूये न तत्र यातं यत्त्रैलोक्यमभियोज्यताम् ॥१३५६॥
वात्सल्योत्पुलकस्मेरं स्निग्धोक्तिमधुरं मुखम् । मद्दर्शने यदासीत्ते तन्मे पुर इवाधुना ॥१३५७॥
इति चान्यच्च विलपन्गाम्भीर्यालक्ष्यवैकृतः । ह्रीशोकभयमूकान्स ददर्शामात्यान्पितुः पुरः ॥१३५८॥
आशिक्षयत यन्मन्युर्दाक्षिण्यं निरुरोध तत् । तथाप्येवं स तानूचे किंचिदाक्षेपकर्कशम् ॥१३५९॥
कोशैः सहंशतां वीक्ष्य कुर्वतः[1] सत्क्रियां गताः । धिग्भवन्तश्च शस्त्रं च तातस्यान्ते विपर्ययम् ॥१३६०॥ 1360
यन्मत्पितृवधे निहते[1] कृतमुष्टिपटजीविभिः । मान्यानां भवतां सिद्धं हा धिक्तदपि नाधुना ॥१३६१॥
इत्युपालम्भमानस्तान्हिरैरन्तिकमागतैः । द्विवैरमात्यैः कर्तव्यश्रुतवेद्यहितः कृतः ॥१३६२॥
प्रस्थानं लोहरे केचिद्रुरुः संत्यज्य मण्डलम् । त्वरां च तत्र राज्यन्ते वदन्तो भैक्षवं भयम् ॥१३६३॥
गर्गात्मजं पञ्चचन्द्रमालम्ब्यं[1] लहरस्थितम् । हैराज्याचरणायान्ये धीरप्राया बभाषिरे ॥१३६४॥
न हि स्वगृहवद्विक्षोर्भविक्षोर्भगरान्तरम् । अज्ञायि प्रत्यवस्थानं केनाप्यसति सुस्थले ॥१३६५॥ 1365
आत्मन्यसंभावनया तादृशां[1] मन्त्रिणां नृपः । सान्तःखेदं श्वो विधेयं द्रक्ष्यथेत्यब्रवीद्वचः ॥१३६६॥
कालापेक्षापरित्यक्तपितृव्यापत्तिदुःस्थितः । स कोशादिव्ययादिक्षद्रक्षिणस्त्राणदीक्षितान् ॥१३६७॥

---

१३४६. [1]) Thus A; cf. वाहुवं viii. 1459. १३४९. [1]) Emended; A वार्तेन. १३५०. [1]) नुभाव supplied by $A_2$ in space left by $A_1$. १३५५. [1]) Thus A. १३६०. [1]) Emended; A कुरुत:. १३६१. [1]) Emended with C; A न हते. १३६४. [1]) Emended; A °लम्ब्य. १३६६. [1]) तादृशां supplied by $A_2$ in space left by $A_1$.

इतश्चेतश्च संभ्राम्यमाणैः प्रोद्यद्बहुलस्वरम् । अन्योन्याख्यायिभिर्लोकैः पुरं मुखरतामगात् ॥१३६८॥
प्रनृत्तवेतालमालेव कालराज्याकुलेव च । बभूव सा यामवती सर्वभूतभयावहा ॥१३६९॥
1370 दीपैर्निर्वातनिष्कम्पैश्चिन्तास्तब्धैश्च मन्त्रिभिः । तिष्ठन्परिवृतो राजा स्वान्तरेवमचिन्तयत् ॥१३७०॥
निर्द्वारे सततमस्युपयाते शून्यवेश्मनि । तातोपि निहतः शून्ये मयि जीवत्यनाथवत् ॥१३७१॥
कष्टमेतावदाश्वासवैशसक्षालनावधि । कथं गोष्ठीषु शक्ष्यामि द्रष्टुं मानवतां मुखम् ॥१३७२॥
विरोधिवशवर्तिभ्यो देशेभ्यः सैन्यनायकाः[1] । सद्भिरेव दुर्लङ्घ्यैः कथमेष्यन्ति वर्त्मभिः ॥१३७३॥
इत्थं विमृशतस्तस्य[1] तत्तच्चिन्ताभिषङ्गिणः । ययौ भीतिमतो भीमा कथंचित्सा निशीथिनी[2] ॥१३७४॥
1375 प्रातश्चतुष्किकां पौरसमाश्वासाय निर्गतः । नष्टं कटकमन्वेष्टुं सोश्वारोहान्व्यसर्जयत् ॥१३७५॥
मार्गानद्रीसंचारैस्तुषारैर्विषमो क्षतान् । आश्लिष्टवसुधा मेघाः कर्तुं प्रारेभिरे ततः ॥१३७६॥
क्वापि प्रलब्धा सैन्यस्य मोक्षसैन्येषु[1] दूरतः । निवृत्तेषु नियुक्तेषु विमृश्य[2] नृपतिः क्षणम् ॥१३७७॥
वधवेनाहतं तत्तत्परित्यक्तं प्रभुणा । दत्तं चारीडिभतवतामभयं सागसामपि ॥१३७८॥
इत्याज्ञां भ्रमयामास पटहोद्घोषणैः पुरे । साशीर्घोषास्ततः पौरास्तत्रारज्यन्त सर्वतः ॥१३७९॥तिलकम्[1]॥
1380 अनन्तरनृपाचारवैधर्म्यौकारकलया । तया सोनया वृत्त्या फलं सद्योनुभावितः ॥१३८०॥
ज्ञातादप्यूनसंख्यैर्यः स्थितवाननुगैः समम् । अनुरागहृतैर्लोकैस्तत्कालं पर्यवार्यत ॥१३८१॥
मिथोकथावेदनं प्रीतिदायोपायः प्रभोः पुरः । भजंल्लोकस्याप्यमन्त्रिपदवीं लक्ष्मकोपहीत् ॥१३८२॥
राज्यं शम्यां नयत्येवं प्राज्ञे राज्ञि नयक्रमैः । याति मध्यं दिने भिक्षुर्विविक्षुः पुरमाययौ ॥१३८३॥
तस्य डामरपौराश्वारलुण्ठाकसंकुलः । अदृष्टपूर्वो ददृशे सैन्यव्यतिकरस्तदा ॥१३८४॥
1385 हतं श्रुत्वा रिपुं राज्योत्सुकः स नगरं व्रजन् । राजा काकात्मजेनेति तिलकेनाभ्यधीयत ॥१३८५॥
इतः समस्तविद्वेष्यः स दैवादपि सुस्सलः । कथं प्रकृतयो जग्मुर्गुणवर्त्म तदात्मजम् ॥१३८६॥
पुरप्रवेशो का राजंस्तस्मादेकमहत्त्वरा । एहि पद्मपुरं यामो मार्गं रोद्धुं विरोधिनाम् ॥१३८७॥
आगच्छन्तो महसैन्याः सुज्जिमुख्या महाभटाः । निहता यदि वा रुद्धास्तत्र सायुधवाहनाः ॥१३८८॥
प्रविष्टोसि ततो न्यस्तशस्त्रो द्विभैर्दिनैर्ध्रुवम् । नगरं नगरीकोभिः स्वयमभ्यर्थितागमः ॥१३८९॥
1390 अलमेतैर्भरन्मन्त्रैर्वदन्त इति चक्रिरे । स च कोष्ठेश्वराद्याश्च स्मेरास्तस्यावधीरणाम् ॥१३९०॥
राज्यं विदद्भिः संप्राप्तं[1] तांस्तान्व्याजनपङ्गकान् । श्रुतमर्थयमानैश्च विलम्बं कारितो निजैः ॥१३९१॥
अतो बहुहिमापातविवशाशेषसैनिकः । आससादनगरोपान्तं समयेन स तावता ॥१३९२॥
एतस्मिन्नन्तरे लब्धे निःसैन्यस्य ससैनिकः । गर्गात्मजः पञ्चचन्द्रो नृपतेः पार्श्वमाययौ ॥१३९३॥
हतस्वामिपरित्यागमन्युक्षालनकाङ्क्षिभिः । राजपुत्रैः समं सोथ वीरो योद्धुं विनिर्ययौ ॥१३९४॥
1395 असंभावनसंग्रामान्वीक्ष्य तान्भिक्षुसैनिकाः । यावत्प्रारेभिरे योद्धुं तावत्किमपि सर्वतः ॥१३९५॥
क्षणेनैव ययुर्भङ्गं तांस्तान्वीक्ष्य हताञ्जिजान् । न संस्तम्भयितुं शेकुः स्वचमूश्च पलायिनीः ॥१३९६॥

---

१३७३. [1]) Emended; A °नायकः. १३७४. [1]) A विमृषत°.—[2]) A निर्षीथिनी. १३७७. [1]) Thus A; perhaps read मोक्षसैन्येषु.—[2]) A विमृश्य. १३७९. [1]) $A_1$ writes here ३ instead of तिलकम्. १३९१. [1]) Emended; A संप्रासांस्तांस्ता°.

सेनानाथाश्च ये मुख्या भिक्षुपृथ्वीहरादयः । अदृष्टपूर्वं संत्रासं तेऽप्यशास्त्रिवशाययुः ॥१३९७॥
विद्रवन्तोऽनुयाताः स्युस्ते चेद्दूरं नृपानुगैः । तन्न्यूनमवशिष्येत क्षणादेव न किंचन ॥१३९८॥
वैमुख्यं तेषु यातेषु चिरात्सांमुख्यमाययौ । नवभूभृत्प्रभावेण नगरे विधुरे विधिः ॥१३९९॥
अन्यथा कल्पितो लोकैरन्यथा दैवयोगतः । इत्थं राज्ञोर्द्वयोरासीद्विजयाजयक्रमः ॥१४००॥ 1400
कांश्चिन्निपातयति बद्धपदं क्षणेन कांश्चित्परं पिपतिषुं नयति प्ररूढिम् ।
संकल्पनिर्विषयविभ्रतरानुभाव ओघोऽम्भसामिव तटं पुरुषं विधाता ॥१४०१॥
अथ तत्तद्भयस्थानश्रान्तः सुज्जिर्दिनात्यये । दावव्याप्ताद्रिनिष्क्रान्तो निःसहो हरिवाययौ ॥१४०२॥
मेधाचक्रपुरग्रामस्थितः श्रुत्वा हतं नृपम् । स हि संमन्त्र्य राज्यन्तर्नौस्थानावसत्परम् ॥१४०३॥
रिल्हणादीन्स्थिताञ्छूरपुरादौ सैन्यनायकान् । प्रतीक्षमाणस्तैः सार्कं निर्बाधं नगरेऽविशत् ॥१४०४॥
तमिस्रायां प्रत्यभिज्ञाकृते तेषामनश्वराम् । स्वावासपृष्ठे ज्वलतो दीपानस्थापयत्ततः ॥१४०५॥ 1405
वैमत्यात्ते तु पत्तीनां विद्रुतानां पृथक्पृथक् । निशि क्वापि परिभ्रष्टा न तत्कटकमाययुः ॥१४०६॥
प्रत्यूषे प्रचलंस्तैस्तैः पृष्ठलग्नैः स डामरैः । न मुहूर्तमपि त्यक्तः प्रहरद्भिरितस्ततः ॥१४०७॥
वृद्धस्त्रीबालभूयिष्ठान्सहप्रस्थायिनो जनान् । ययौ रक्षन्पुरः कृत्वा पशुपालः पशूनिव ॥१४०८॥
पञ्चाशत्या हयारोहैः सह व्यावृत्य तिष्ठता । कंचित्क्षणं तेन रक्षा तेषां कर्तुमशक्यत ॥१४०९॥
शाखाषण्डद्रुमव्यूहसंबाधेऽध्वन्यसाध्वसैः । बाध्यमानोऽरिभिर्लोकं सोऽत्याक्षीन्नु पदे पदे ॥१४१०॥ 1410
हतस्य स्वामिनः स्वामिसूनोश्च व्यसनस्थितेः । आनृण्याकाङ्क्षिणा तेन तत्र स्वात्मैव रक्षितः ॥१४११॥
येषां प्राणपरित्यागे निश्चयं बध्नतामपि । न योग्यकालापेक्षास्ति किं तैर्हैलपभूपमैः ॥१४१२॥
हन्तुं तं नष्टमायान्तं रुद्ध्वा पद्मपुरान्तिकम् । अवसन्डामराः क्रूराः खड्डूवीविषयौकसः ॥१४१३॥
खेरीतल्लालशाग्रामादुत्थाय पृथुसैनिकः । व्रजंस्तेनाययौ तत्र प्रसङ्गे श्रीवक्रः पथा ॥१४१४॥
तमनष्टानुगं सुज्जिरसाविति विशङ्किताः । निपत्य ते विदधिरे हतलुण्ठितसैनिकम् ॥१४१५॥ 1415
मेरुश्च सज्जनश्चाश्ववारौ तत्राहवे हतौ । क्षतो वहात्मजो मल्लो दिवसैर्यो व्यपद्यत ॥१४१६॥
उदीर्णविहितश्वभ्रवहत्सलिलसंकटम् । उदीपपूरवालाख्यं स्थानं तत्र क्षणेऽभवत् ॥१४१७॥
युद्ध्वा युद्ध्वा प्रचलतस्तत्र पद्मपुराद्बहिः । हतसैन्यस्य विशिखः श्रीवक्रस्याविशद्गलम् ॥१४१८॥
प्रहारविवशो नासौ सुज्जिर्ज्ञात्वेति डामरैः । स निर्लुण्ठ्य परित्यक्तः पूर्वमैत्र्यनुरोधतः ॥१४१९॥
लुण्ठितश्रीवक्रानीककोशभारप्रहानतैः । तैः कैश्चिच्चलितैरासीत्सुज्जेर्मार्गोऽनुपद्रवः ॥१४२०॥ 1420
प्रस्थिते पथिकेऽकस्माद्यन्त्रेऽपूत्सादयन्वने । आयुःशेषो मृगेन्द्रस्य विदध्यादध्वशोधनम् ॥१४२१॥
निःशस्त्रसैन्यो निर्यातः सुज्जिः पद्मपुरान्तरे । उदीपश्वभ्रसविधे संग्रामोऽशायि डामरैः ॥१४२२॥
पदातिकोशांशास्त्रादि मुष्णतः सोऽनवेक्ष्य तान् । तीर्त्वा श्वभ्रं वाजिगम्यां साश्ववारो भुवं ययौ ॥१४२३॥
ततः परं प्रशान्तारिभयं दूराद्विरोधिनः । भ्रूभङ्गतर्जनीकम्पकक्षालापैरतर्जयत् ॥१४२४॥

---

१३९८. ¹) Emended with C; A तन्नून°. १४०३. ¹) Emended; A मेधाचक्रे पुर°. १४१७. ¹) A₁ had written in margin a gloss of which only इति भाषया is now legible. १४२०. ¹) Emended; A लुण्ठितः श्री°. १४२३. ¹) A °कोष°.— ²) Emended with C; A सोनवीक्ष्य.

1425 संप्रस्तैश्छत्रमात्रं तैस्त्यक्तमादाय च द्रुतम् । प्रविश्य नगरं साश्रुर्नृपतेः पार्श्वमाययौ ॥१४२५॥
ज्यायसि भ्रातरीवार्यं तस्मिन्ग्रामे अहो नृपः । दुःखोष्णैरश्रुभिः सार्धं वैरिव्यापातसाध्वसम् ॥१४२६॥
महत्तमोमन्त्ववतुरानन्दस्तत्र वासरे । लोचनोद्धारकग्रामे डामरैः प्रचलन्हतः ॥१४२७॥
तत्तन्मकुल्यदण्डादिदुःसहायासकारणात् । स विपत्पतितो नाभूत्कस्यापि करुणावहः ॥१४२८॥
भासाभिधः सुज्जिभृत्यो लोकपुण्यात्पलायितः । भ्रान्तोवन्तिपुरे विश्वावन्तिस्वामिनोङ्गनम् ॥१४२९॥
1430 कम्पनोद्ग्राहकः क्षेमानन्दः स च तदन्तरे । अमर्षणैरवेष्टयेतां डामरैर्होलडोद्भवैः ॥१४३०॥
इन्दुराजोपि सेनानीः कुलराजकुलोद्भवः । टिक्कं तद्वेष्टितो ध्यानोड्डारे व्याजादशिश्रियत् ॥१४३१॥
पिञ्चदेवादयोन्येपि बहवः सैन्यनायकाः । अतिष्ठन्क्रमराज्यान्तर्डामरैः कृतवेष्टनाः ॥१४३२॥
पाते वनस्पतेः शाखा इव तन्नीडविच्युताः । इत्थं हताः क्षताधांसस्तत्र तत्र नृपानुगाः ॥१४३३॥
निष्पादत्रा हिमप्लुष्टचरणा नग्नविग्रहाः । क्षुत्क्षामा बहवोभूवन्मार्गेषु गलितासवः ॥१४३४॥
1435 न व्यलोक्यत मार्गेषु तदा नगरगामिषु । पलालच्छन्नदेहेभ्यो मानुषेभ्यः परः कश्चित् ॥१४३५॥
वासं विलासवासस्त्वं तेपि चित्ररथादयः । निन्युर्यैरचिरेणैव महामात्यैर्भवित्र्यते ॥१४३६॥
द्वितीयेपि दिने रुद्धसंचाराः पक्षिणामपि । तुषारवर्षिणो मेघा न मुहूर्तं व्यरंसिषुः ॥१४३७॥
वनपूर्वाभिधग्रामस्थितस्य कटकाद्भटान् । भिक्षोर्निक्षिप्य धन्योथ सिंहदेवमशिश्रियत् ॥१४३८॥
निशम्य कृतसत्कारं नृपं तदनुयायिनाम् । सर्वेपि भैक्षवास्तस्थुः सैनिका नगरोन्मुखाः ॥१४३९॥
1440 मन्दप्रतापे दायादे संग्रामावसरास्ततः । राज्यभ्रतको राजानमनुमन्तुं विनिर्ययुः ॥१४४०॥
परापातभयाच्छीतापाताच्च विवशैर्जनैः । न ता नेतुमशक्यन्त दूरस्थं पितृकाननम् ॥१४४१॥
चक्रिरे स्कन्दभवनोपान्ते देहांश्चिताभिसात् । ते सत्वरं ततस्तासामदूरे राजसद्मनः ॥१४४२॥
राज्ञी चम्पोद्भवा देवलेखा तरललेखया । स्वस्रा सहाविशद्वह्निं कपोलेखावधिर्विधेः ॥१४४३॥
गुणोज्ज्वला जज्जला —[1] मृता वल्लापुरोद्भवा । गग्गात्मजा राजलक्ष्मीरपि वह्नौ व्यलीयत ॥१४४४॥
1445 मत्वा हिमव्यपायान्ते राज्यरोधं निजप्रभोः । डामरा नवभूभर्तुर्हिमराजाभिधां व्यधुः ॥१४४५॥
ददर्श सौस्सलं मुण्डमथ भिक्षुरुपागतम् । गाढामर्षाभिसंदीप्तैर्दृक्पातैर्निर्दहन्निव ॥१४४६॥
कोष्ठेश्वरज्येष्ठपालादयस्तत्सत्क्रियोद्यताः । असहासन्नतां वैराद्भजता तेन वारिताः ॥१४४७॥
नगरं हिमवृष्ट्यन्ते स यियासुर्युयुत्सया । ताटस्थ्येनाहिताकृष्टान्भृत्याञ्ज्ञात्वाब्रवीद्वचः ॥१४४८॥
प्रसह्य प्राप्नुयां राज्यमिति पृथ्वीहरे सति । हते तु तस्मिन्दायादे विपन्नः[1] स्यां पतिर्भुवः ॥१४४९॥
1450 इत्यचिन्तयमेतत्तु दैवात्संजातमन्यथा । राज्यस्याशापि विरता हते प्रत्युत वैरिणि ॥१४५०॥
किं राज्येनाथ वा कृत्यं भोगमात्रोपयोगिना । जिगीषोरुचितं कस्य ममेवान्यस्य सेत्स्यति ॥१४५१॥
मुण्डं न्यपातयद्भूमौ यः पूर्वेषां पुरा मम । सिंहद्वारे मदीयेद्य तन्मुण्डं वर्तते लुठत् ॥१४५२॥
दश मासान्मदाप्तानां सुखच्छेदं व्यधत्त यः । तत्तदुःखं स तु मया दशाब्दाननुभावितः ॥१४५३॥

१४३०. [1]) Doubtful emendation; A कोद्ग्रीहकः.—[2]) Emended with C; A °रवेष्टयेत. १४३१. [1]) Emended; A °ड्डारं. १४३३. [1]) A क्षताधाधांसस्तत्र with diplography. १४३८. [1]) Emended; A °शिश्रयत्. १४४१. [1]) Thus $A_1$; corr. by later hand into नाशेषु°. १४४४. [1]) One *akshara* wanting; the *lacuna* not indicated in A; C supplements सा. १४४९. [1]) Emended; A विपर्णा, C °दायादे विपन्नः

एवं निर्व्यूढकर्तव्यतया नेष्याम्यबन्ध्यताम् । उपशान्तमनस्तापः सुस्थित्या शेषमायुषः ॥१४५४॥

इत्याप्युक्त्वा गतष्टिक्काभ्यर्णे तं प्रणतं व्यधात् । प्रीत्या स हेमघटिकश्वेतच्छत्रादिभाजनम् ॥१४५५॥ 1455

तद्विस्रम्भेण राज्याशापिशाच्योदितया पुनः । गृहीतोऽभ्येत्य शीतार्तैस्तस्थावन्तर्विचिन्तयन् ॥१४५६॥

अत्यन्तानुचितं चान्यद्ब्रुवन्त्यैः संविविक्षुभिः । रक्षितं रक्षिणो न्यस्य हतक्ष्माभृत्कलेवरम् ॥१४५७॥

विपक्षाश्रयणेऽप्यस्मिन्स्वामिनोऽन्ते किमीदृशी । दशा शरीरस्येत्यन्तः कृतघ्नत्वेन चिन्तयन् ॥१४५८॥

दिदृक्षाव्याजतः सज्जकाख्यो नगरशस्त्रभृत् । आयातो बाहुकं गोमृत्युर्दैर्जित्वाभिसाध्यधात् ॥१४५९॥तिलकम्॥

स भर्तुर्नवताहर्षाद्दारभ्यासादितच्छलैः । भूतैरधिष्ठितस्तिष्ठन्प्रजासंहारकार्यभूत् ॥१४६०॥ 1460

देवताधिष्ठिताविष्टदेहिवाक्यादिति श्रुतिः । भावितद्वधसंवादजनितप्रत्ययोदयी ॥१४६१॥

मदीयानन्यथात्वेन छेत्ता भ्रमयिता च यः । तन्मुण्डस्यास्य स पुमांल्लब्धः क्षमो मृतस्तथा ॥१४६२॥तिलकम्॥

भिक्षुः कापुरुषाचारहतौचित्यो व्यसर्जयत् । प्राचण्डाख्यालये मुण्डमथ राजपुरीं रिपोः ॥१४६३॥

उच्छलात्मजया तत्र देव्या सौभाग्यलेखया । नेतृन्पितृव्यमुण्डस्य जिघांसन्त्या निजानुगैः ॥१४६४॥

राजपुर्यामाकुलत्वं नीतायामाससाद तत् । तद्भर्तुः सोमपालस्य दूरस्थस्यान्तिकं चिरात् ॥१४६५॥युग्मम्॥ 1465

आदीनस्य मधुक्षैव्यमाव्यधर्मादिकर्मसु । तिरश्च इव शोच्यस्य नेयबुद्धेः खशप्रभोः ॥१४६६॥

सभ्यैरुच्चावचं तत्र कर्तव्यं परिचिन्तितम् । स्वोचितं व्यञ्जितौचित्यानौचित्यं निरवग्रहैः ॥१४६७॥

नागपालस्तु सौभ्रात्रं लब्ध्वा भ्रातुः स्थितोऽन्तिके । सेहे मुण्डाश्लेषस्य नोपकर्तुर्विमाननाम् ॥१४६८॥

सुदीर्घदर्शिनोऽप्यन्ते कश्मीरेभ्यः पराभवम् । विशङ्क्योचुः सर्वथेदं सत्कार्यं वः शिरः प्रभोः ॥१४६९॥

क्रियते येन नियतेरन्यथात्वं सनाथताम् । विनिहतस्य हरेर्दृष्टाः कुर्वन्तो यत्र जम्बुकाः ॥१४७०॥ 1470

तद्वोपालपुरे कालागुरुचन्दनदारुभिः । काष्ठैर्नीतं शिरो निन्ये वीतिहोत्रेऽथ शत्रुभिः ॥१४७१॥

यथा प्राप्तिभ्रंशा धरणिपतिभावस्य विविधा यथा ह्रासोल्लासा अपि समरसीमासु बहुशः ।

यथा तत्तद्दीर्घव्यसनविनिपातानुभवनं तथा दृष्टस्तस्य प्रमयसमयोऽप्यद्भुततरः ॥१४७२॥

कस्यापरस्य तस्येव लेभिरे वह्निसत्क्रियाम् । एकत्रेतरगात्राणि मुण्डमन्यत्र मण्डले ॥१४७३॥

टिक्कादयोऽथ नगरं यान्तोऽवन्तिपुराध्वना । तत्र हन्तुं व्यलम्बन्त भासादीन्पूर्ववेष्टितान् ॥१४७४॥

युद्धाग्न्युद्दीपनमात्रप्रहारच्छेदकारिभिः । न ते जेतुमशक्यन्त तैः प्रयत्नपरैरपि ॥१४७५॥ 1475

स्थितैर्महाश्मप्राकारगुप्ते सुरगृहाङ्गने । तैर्हन्यमानास्ते स्थातुं गन्तुं वा नाभवन्क्षमाः ॥१४७६॥

एवं प्रासविलम्बेषु तेषु लब्धान्तरः सुधीः । स्वीचकार प्रदानेन खडूवीडामरान्नृपः ॥१४७७॥

गृहीतनीविना तेषां सुज्जिः प्रायोजि सत्वरम् । तेन भासादिमोक्षाय पञ्चचन्द्रादिभिः समम् ॥१४७८॥

प्रापावन्तिपुरं यावन्न स तावत्तदभगान् । कव्यात्मजादीनालोक्य भङ्गं टिक्कादयो ययुः ॥१४७९॥

देवागाराद्विनिर्याता भासाद्यास्ते च विद्विषाम् । भग्नानामनुगान्हत्वा सुज्जेरन्तिकमाययुः ॥१४८०॥ 1480

---

१४५६. [1]) Emended with C; A शीर्तार्तै°. १४५९. [1]) Thus A; cf. बाहुकं viii. 1846. — [2]) $A_1$ writes here ३ instead of तिलकम्. १४६२. [1]) $A_1$ writes here ३ instead of तिलकम्. १४६५. [1]) $A_1$ writes here २ instead of युग्मम्. १४६६. [1]) Emended; A आदीनास्य. १४७०. [1]) Emended with C; A के. १४७३. [1]) Emended with C; A एकत्रैतरगा°.

लब्धप्रतापे नगरं प्रविष्टे कम्पनापतौ । आययाविन्दुराजोपि टिक्कं संत्यज्य सानुगः ॥१४८१॥
चक्रे चित्ररथश्रीवभासादीनपि भूपतिः । पादाग्रहारखेर्यादिकर्मस्थानाधिकारिणः ॥१४८२॥
यथापूर्वमधीकारानजहत्सुज्जिरप्यभूत् । प्रतीहारमुखप्रेक्षी का कथेतरमन्त्रिणाम् ॥१४८३॥
प्रतीहारोपि निःसीमडामरग्रामसंमतः । तत्रैव शक्तिकां कुर्वन्नगाद्राज्ञः प्रतीक्ष्यताम् ॥१४८४॥
1485 स नासीदस्य दस्यूहे कोपि तत्सेरणेन यः । नाशिभिर्यद्रूपं नो वा बभूवाभयणोन्मुखः ॥१४८५॥
निह्नुतेशिस्यसद्धास्फूर्तिधूर्तो महीपतिः । आहारमप्यनासाद्य तन्मतं न न्यषेवत ॥१४८६॥
इत्थं नगरमात्रान्तर्लब्धपादप्रसारिकः । सोवर्तिष्ट समासन्नफलं कन्दलयन्नयम् ॥१४८७॥
संघट्याखिलान्भिक्षुर्डामरान्विजयेश्वरे । अथाध्यष्टादधिष्ठानं जिघृक्षुः शिशिरात्यये ॥१४८८॥
अदृष्टपूर्वं स्वयमूचकैक्यं वीक्ष्य डामराः । भिक्षोर्हस्तगतं राज्यं मत्वाशङ्किषताथ ते ॥१४८९॥
1490 एकैकस्यैव धीशौर्यमिश्रामिश्रादि दृष्टवान् । नोत्तिष्ठेत्प्राप्तराज्यः किमास्कन्देषु गृहान्तरात् ॥१४९०॥
इति संमन्त्र्य ते राज्यं सोमपालाय दित्सवः । दूताभिगूढं प्राहिण्वन्सोपि दूतं व्यसर्जयत् ॥१४९१॥
आकाराचारवैकृत्यैः पशुतुल्यस्य तस्य तैः । राज्यभोगा अभङ्गा नो भविष्यन्तीत्यचिन्त्यत ॥१४९२॥
भोगलोभोज्झितौचित्यदस्युसंघविकीर्षितम् । देशोत्र पापात्पापीयो दैवात्र समपादि तत् ॥१४९३॥
दास्येप्ययोग्यो यो राज्ये स इत्यास्तां नृपान्यतः । शक्येत पातुं देशोयं किमीषदपि तादृशा ॥१४९४॥
शालीन्पलालपुरुषोवति यः कृशानुदग्धाननघटकपेटकभीतिदानैः ।
1495 शातुं स काननतरून्विहितो विदध्यात्किं तत्र भञ्जनकृतां वनकुञ्जराणाम् ॥१४९५॥
भिक्षोर्नैदिष्ठतां दिदृक्षुदिव्याजास्ततोऽभजन् । तद्दूतो डामरान्गूढं नीविदानोद्यतान्व्यधात् ॥१४९६॥
वैशाखेथ कृतारम्भस्तदा संभावितत्वरः । निर्गत्य नगरात्सुज्जिर्गम्भीरातीरमाययौ ॥१४९७॥
तस्याभियोगः श्लाघ्योभूद्योद्धुं यत्समवायिनः । एकाकी तावतो वीराननूरीकृत्य स निर्ययौ ॥१४९८॥
अन्तःपाते साहसानां प्राज्ञुतं तद्विधेर्वशात् । जीयते लक्षमेकेन लक्षेणैकोथ वा युधि ॥१४९९॥
1500 पारं तरीतुं निःसेतोः सरितोपारयन्नसौ । पारे परस्मिन्नहितानपश्यच्छरवर्षिणः ॥१५००॥
द्विवा निशाः स ते चासंस्तस्याः सिन्धोस्तटद्वये । रुद्धाः संनाहिनोन्योन्यरन्ध्रावेक्षणदीक्षिताः ॥१५०१॥
अथावन्तिपुराग्रीभिरानीताभिरबन्धयत् । सेतुं साश्वोतरत्सुज्जिरादाय तरणीं स्वयम् ॥१५०२॥
तरन्तमेव तं दृष्ट्वा योधैः कतिपयैः समम् । द्विषच्चमूर्महल्लोला द्रुमालीवाभवच्चला ॥१५०३॥
दृष्टं मुहूर्तवेलावदारूढः स च यत्तटम् । बद्ध्वा सेतुस्तीर्णाश्च योधा भग्नाश्च विद्विषः ॥१५०४॥
1505 न खड्गी न हयारोहो नापि शूली न चापभृत् । व्यावृत्य प्रेक्षितुं कश्चिदशकद्विद्रुताद्बलात् ॥१५०५॥
निबद्धश्लथशैथिल्यात्लोलपल्ययने हये । कोष्ठेश्वरस्याश्ववारा व्यलम्बन्तान्तरे क्षणम् ॥१५०६॥
निर्यन्त्र्यं तेपि पर्याणं सुज्जौ पश्चात्प्रधाविते । वात्योद्धूतं रजश्चक्रमिव क्षिप्रं तिरोदधुः ॥१५०७॥
हतलुण्ठितविध्वस्तध्वजिनीका विरोधिनः । श्यामोत्तारादिषु ग्रामेष्वमिलन्खण्डशो गताः ॥१५०८॥

१४८५. ¹) Emended with C; A नाशिभयद्रूपं. १४८८. ¹) Emended; A भिक्षून्डा°.—²) Emended; A अथाधिष्ठ°; C अथातिष्ठ°. १४९०. ¹) Conjectural reading; A एकैकस्योपधीशौर्य°. १४९३. ¹) Emended; पापीये. १५०३. ¹) Emended with C; A °वीक्षण°. १५०५. ¹) Emended with C; A प्रेक्षितुः. १५०७. ¹) Emended; A निर्वन्त्य; C निर्वत्य.

विजयेशागमं तीर्त्वा वितस्तासेतुमग्रगः[1] । भासोपि दस्यून्विदधे पलायनपरायणान् ॥१५०९॥
उषित्वा विजयक्षेत्रे तदान्येद्युरुपागते । कम्पनेशे[1] ययुस्त्यक्त्वा ध्यानोड्डारं विरोधिनः ॥१५१०॥ 1510
तत्र स्थित्वा दिनैः कैश्चित्स देवसरसोन्मुखः । शिबिरे भेदनिर्यातैरेत्य ठिक्कस्य गोत्रिभिः ॥१५११॥
जयराजयशोराजौ तन्मुख्यौ भोजकात्मजौ । प्रविश्य देवसरसं व्यधाड्डिक्कोपवेशने ॥१५१२॥
ययुर्विनष्टसंघातास्तस्मिन्पथात्प्रधाविते । भिक्ष्वादयः शूरपुरं स्वोर्वीं कोष्ठेश्वरादयः ॥१५१३॥
गर्हां महाभये सोमपालदूतः पलायितः । दास्याः सुतेन प्रहितः कुत्रास्मीति प्रभोर्व्यधात् ॥१५१४॥
स हि तादृङ्महारम्भक्षोभसाध्योत्थतीक्ष्णताम् । तस्य सिंहीस्पृहाक्रान्तगोमायुवदमन्यत ॥१५१५॥ 1515
प्रमादात्स्वामिनो राज्यं चिरं नष्टं मितैर्दिनैः । सुज्जिः प्रसाद्य प्रददावेवं सं स्वामिसूनवे ॥१५१६॥
शमालादीनपि व्यूढान्दानोपायेन डामरान् । पौरांश्च भिक्ष्वाश्रयिणो राजाभ्येतुं प्रचक्रमे ॥१५१७॥
राज्ञः परीक्ष्य सामर्थ्यमथ कुर्मो यथोचितम् । इति सर्वाभिसारेण तं संमन्त्र्य रणं दधुः ॥१५१८॥
रजोजवनिकालक्ष्यभटीघनटताण्डवः । दामोदरेभूत्संग्रामः स वीरग्रामघस्मरः ॥१५१९॥
कोष्ठेश्वरवशं यातं रक्षता पितरं क्षतम् । लब्धाः सहजपालेन श्लाघाः प्रकृतिभिः समम् ॥१५२०॥ 1520
श्रमस्तत्राविशेषोभूद्राज्ञो भिक्षाचरस्य च । भिक्षुस्त्वहम्यसंवेद्यं विवेदात्मपराजयम् ॥१५२१॥
ततः प्रभृति यः प्रातः स न सायमदृश्यत । योद्धा वा न परेद्युः स सैनिको भैक्षवे बले ॥१५२२॥
एवं त्यक्त्वा परान्पौरडामरेषु नृपान्तिकम् । प्रयात्सु लाभसत्कारान्मुदितान्प्राप्नुवत्सु च ॥१५२३॥
काप्यहंपूर्विकोत्तस्थौ मनुजेश्वरकोष्ठयोः । प्रयातुं पार्थिवाभ्यर्णं लाभसौख्याभिलाषिणोः ॥१५२४॥
ज्ञात्वाथ तत्काकरुहाद्गृहीतस्वपरिच्छदः । देशान्तरोन्मुखो भिक्षुराषाढे मास्यथाचलत् ॥१५२५॥ 1525
अनुयाद्भिः स दाक्षिण्यशेषाद्विहितसान्त्वनैः । तदार्थैर्डामरैः क्रुध्यन्न निरोद्धुमपार्यत ॥१५२६॥
अकरोत्स्वैरिणीसूनुतया शीलबहिष्कृतः । अतिरूपेषु दारेषु तस्य कोष्ठेश्वरः स्पृहाम् ॥१५२७॥
सटां हरेः फणारत्नमहेर्ज्वालां हविर्भुजः । बालां च तस्य संस्प्रष्टुं[1] को मशान्तस्य शक्नुयात् ॥१५२८॥
समं सौस्सलिना बद्धसंधिराश्रयकाङ्क्षिणः । सोमपालः स्वविषये नादात्तस्य प्रतिश्रयम् ॥१५२९॥
उद्वेजितः प्राणहरैः प्रयत्नैस्तस्य सर्वतः । तद्देशं[1] दुर्गममहीसीमान्तं सुल्हरीं ययौ ॥१५३०॥ 1530
त्रिगर्तेषु दया शीलं चम्पायां मद्रमण्डले । त्यागो दार्वाभिसारेषु मैत्री नामर्त्यधर्मिणाम् ॥१५३१॥
पीडयेत्त्यक्तभीर्भूभृद्दूरस्थे त्वयि डामरान् । त्वामेवाभ्यर्थ्य राजानं ततः कुर्युः क्रमेण ते ॥१५३२॥
क्ष्मां तद्ग्रामोर्थयितुं सांप्रतं नरवर्मणः । मन्त्रिभिर्युक्तमित्युक्तमपि मन्त्रं न चाग्रहीत् ॥१५३३॥
प्रसाल्पपरिवारोस्मद्गृह इत्यथ गूढतः । श्वशुरमार्यमां तस्य भृत्याः पार्श्वादथाचलन् ॥१५३४॥
प्रावर्ततात्र नगरे त्रिशङ्किविभ्रमोज्ज्वलैः । सुलभसुलभे काले वरयात्रेव डामरैः ॥१५३५॥ 1535
वीक्ष्याश्वच्चतुरंगैरेकैकं पार्थिवाधिकम् । सुस्सलक्ष्मापतेर्धैर्ये नैष्ठुर्यं तुष्टुवुर्जनाः ॥१५३६॥
औदार्याकारतारुण्यवेषसौन्दर्यमन्दिरम् । कोष्ठेश्वरोपि कं स्त्रीणां प्रययौ प्रेक्षणीयताम् ॥१५३७॥

---

१५०९. [1]) Thus corr. by $A_1$ from °ग्रगः. १५१०. [1]) Emended; A कम्पनेशं. १५१९. [1]) Emended with C; A °जवनिका लक्ष्य°. १५२८. [1]) Emended with C; A संमर्द्दुं; cf. viii. 1193. १५३०. [1]) Emended with C; A तद्देश°.

प्रशान्तविप्लवे देशे यथावृत्सववाद्यताम् । विशङ्कुरिलवन्यौघतूर्यघोषो[1] दिवानिशम् ॥१५३८॥
क्षीराद्या लक्ष्मकेणापि सर्वे मडवराज्यतः । आनीताः पार्थिवाभ्यर्णे सैन्यार्णवभयंकराः ॥१५३९॥
1540 अपि भूपालवाल्लभ्यादभूद्राजोपजीविनाम् । प्रतीहारगृहद्वारप्रवेशो बहुमानकृत् ॥१५४०॥
लवन्यलुण्ठितग्रामतया दुर्भिक्षदुःसहः । व्ययोत्तरङ्गः कालोभूत्स राज्ञो धनदप्रियः ॥१५४१॥
डामरेभ्यो नृपः पारास्संगृह्णन्कृतवेतनः । निनायाभ्यन्तरं वृद्धिं बाह्यं चापत्रयं जनम् ॥१५४२॥
तिळ्यवैश्यार्घदेवाद्या ज्ञातयो जनकद्रुहाम् । राजद्रोहोचिता राज्ञा विपत्तिमनुभाविताः ॥१५४३॥
मासैश्चतुर्भिः स पितृप्रयाणादनन्तरम् । अनन्यशासनं राष्ट्रं स्वमेव समपादयत् ॥१५४४॥
1545 निर्धाम नगरं पौराः सर्वसामर्थ्यवर्जिताः । अनन्तं राष्ट्रमाकीर्णं डामरैः पार्थिवोपमैः ॥१५४५॥
बद्धमूलो नातिदूरे सर्वभारसहो रिपुः । सबाह्याभ्यन्तरा मन्त्रिसामन्ता वैरिसंश्रिताः ॥१५४६॥
मन्त्रोपदेशो[1] वृद्धस्य नैकस्यापि नृपास्पदे । अधर्मबहलाः सर्वे भृत्या द्रोहैकवृत्तयः ॥१५४७॥
राज्यारम्भे बभूवेयं या सामग्र्यस्य भूपतेः । सा स्मर्तव्यान्तराज्ञातुं प्रत्युदन्तं विवेक्तृभिः ॥१५४८॥
प्रागप्रसक्तात्तदिदं गुणग्रामोपवर्णनम् । वक्ष्यमाणं सुबहुशोऽप्यत्र लेशात्प्रदर्श्यते ॥१५४९॥
1550 पूर्वापरानुसंधानबन्ध्यैर्दृष्टान्तसंकथाः । नाबुद्धातिगभीराणां शक्या रसयितुं गुणाः ॥१५५०॥
प्रत्यक्षस्य गुणाज्ञो विचिन्वन्तो यथास्थितान् । अनीर्ष्यस्य भविष्यामो विवेकस्यानृणा वयम् ॥१५५१॥
स्थितस्य तत्त्वविज्ञाने नान्यस्य हि पटुर्जनः । अमानुषानुभावस्य राज्ञः किं पुनरीदृशः ॥१५५२॥
हितानां दाराणां सदृशसुखदुःखस्य सुहृदः कवेः सोल्लेखस्य प्रियसकललोकस्य नृपतेः ।
स्थितानां कोप्यत्र व्यवहितविवेकः स्वकुकृतैरसामान्यं ज्ञातुं सुभगमनुभावं न कुशलः ॥१५५३॥
भवेत्प्रागप्रसरणा परिणामेथ वा मतिः । कथं सर्वस्याद्भुतायां निष्ठायां गुणदोषयोः ॥१५५४॥
1555 सन्त्येवास्यापि विषमाः स्वभावा दोषतां जनः । येषां विपाकभव्यत्वमजानन्गणयत्ययम् ॥१५५५॥
विकासः केषांचिन्नयनविषमैर्विद्युदुदयैः परेषामुद्भूतिः श्रवणकटुभिर्दीर्घरसितैः ।
न चेष्टा काप्यन्योपकृतिपरिहीना जलमुचो जडो वर्षादन्यं गणयति गुणं नास्य तु जनः ॥१५५६॥
गुणांल्लोकोत्तराञ्छृण्वन्नस्यानुभवगोचरान् । भविता पूर्वभूपालकृत्ये सप्रत्ययो जनः ॥१५५७॥
अनुच्छलन्नपि स्थानाद्भूभङ्गेन[1] चकार सः । विलोलांल्लोमकम्पेन दिङ्नाग इव भूधरान् ॥१५५८॥
विदग्धग्राहिनीवृन्दा गूढं यत्नयसंभवम् । वहन्ति तापं भूपाला और्वाग्निमिव सिन्धवः ॥१५५९॥
1560 भूमिभृद्भास्वतस्तस्य तेजसाप्यायितो गतः । पूर्वराजयशश्चन्द्रो भुवनेऽत्रप्रकाशताम् ॥१५६०॥
यो यस्तं पश्यति स्वात्मसंमुखं स स सर्वतः । जानात्यवक्रोल्लिखितं देवबिम्बमिवेश्वरम् ॥१५६१॥
स्थिरप्रसादो दत्ते यत्तदादत्ते न स क्वचित् । भयं पुनः प्रणमतां दत्तं हरति विद्विषाम् ॥१५६२॥
कृष्टासेः प्रतिबिम्बं स्वं हित्वा नान्योस्य संमुखः । नापरः प्रतिशब्दाच्च गर्जतः प्रतिगर्जति ॥१५६३॥
तस्य नातिशितं कोपे प्रसादे निशितं पुनः । धत्ते तीक्ष्णैकधारस्य तरवारेस्तुलां वचः ॥१५६४॥

१५३८. [1]) Doubtful emendation; A °घोषा ; G °विप्लवी देशे and °घोषाविवा°. १५४२. [1]) Thus A ; C पौरास्त°
१५४३. [1]) Cf. तुलो टिक्कस्यार्घदेवतिळ्यवैश्या° (A) viii. 1305. १५४५. [1]) Thus $A_1$; R C निवासम°, as apparently corr. by later hand in A. १५४७. [1]) Conjectural emendation ; A मन्त्रोपदेशवृद्धस्य. १५५०. [1]) दृष्टान्त supplied by $A_3$ in space left by $A_1$. १५५८. [1]) Emended with C ; A °भूमङ्क्म.

तस्याकुजन्मनो नित्याम्लानलक्ष्मीविकासिनः । प्रभवन्स्वाश्रिताः कल्पशाखिनः पल्लवा इव ॥१५६५॥

राज्ञि गाम्भीर्यदुर्लक्ष्यमाहात्म्यप्रभविष्णुताम् । विवेद मन्त्रिणां लोकः सिषेवे तांश्च सर्वतः ॥१५६६॥

प्रकटस्तु प्रतीहारो न विषेहेऽन्यमन्त्रिणाम् । पार्श्वद्रुमाणामेषाश्वत्थोपधिस्तम्भ इवोन्नतिम् ॥१५६७॥

तस्योत्पाटयतः सर्वांस्तृणानीवावहेलया । स्फूर्जञ्जनकसिंहोऽभूदशक्योन्मूलनः परम् ॥१५६८॥

आ बाल्यात्संस्तुतो राज्ञः स कृत्स्नव्यवहारवित् । अधृष्यस्तरुणीभूततनयो ह्यास सर्वतः ॥१५६९॥

अद्वैधं यौनसंबन्धादिच्छतस्तत्सुतो मदात् । कुड्डाभिधस्तस्य ततः कृतावज्ञोऽतनोत्त्रपाम् ॥१५७०॥

रन्ध्रान्वेषी स तद्रोषादुपजापैः क्षणे क्षणे । सद्मनी जनके यत्नान्नृपं द्वेषमजिग्रहत् ॥१५७१॥

राज्ञस्तुल्यवयःस्थौ हि जननीगाढसंस्तवात् । राज्यकाले हि सोत्सेकावास्तां तदवकाशदौ ॥१५७२॥

तुरंगयोग्योपस्कारयानाहारादि राजवत् । अकालज्ञावकुरुतां राजधान्यन्तरेव तौ ॥१५७३॥

सह छत्रवृन्दैः समशीर्षिका प्रभोर्न युज्यते मानसमुन्नतेः क्वचित् ।
भिनत्त्यनेकैर्दर्दुरवृन्दलङ्घनं सरोजषण्डस्य महाविडम्बना ॥१५७४॥

तद्भित्तिलाभसंरूढपैशुनालेख्यकल्पनाः । तद्वर्गेऽप्यखिले चक्रुस्तद्द्विषः कलुषं नृपम् ॥१५७५॥

अथ राजा विजयिनं सत्कर्तुं कम्पनापतिम् । कृतज्ञः श्रावणे मासि जगाम विजयेश्वरम् ॥१५७६॥

अत्रान्तरे पिञ्छदेवादागच्छन्गिरिगह्वरे । प्राप शूरपुरद्रङ्गाधीश्वरादुत्पलो वधम् ॥१५७७॥

पुष्याणनाडादुत्पिञ्छकृतये पुनरागतः । द्रङ्गाधिपेन गुटिकान्वेषिणा स न्यपात्यत ॥१५७८॥

क्षितौ निपतितः पार्श्वप्राप्तमेकं द्विषद्भटम् । मुमूर्षुर्विशिखाविद्धजानुमर्मापि सोऽवधीत् ॥१५७९॥

प्रत्यावृत्तस्य सत्कृत्य कम्पनेशं महीपतेः । द्वार्येवन्तिपुरस्थस्य द्रङ्गेशोऽरिशिरो व्यधात् ॥१५८०॥

स दृढग्राहिकामुष्टिरुद्वहन्मुण्डमुद्गरः । चक्रे तस्य दृढामर्षशोकशङ्कुविपाटनम् ॥१५८१॥

आद्यायामेव यात्रायां जातारातिक्षयो जनैः । स निःशेषिताशेषकण्टकानामगण्यत ॥१५८२॥

तस्मिन्प्रविष्टे नगरं विद्रुताः केऽपि सागसः । प्रापुर्जनकसिंहाद्याः केऽपि कारागृहस्थितिम् ॥१५८३॥

कैश्चित्पलायितैः शङ्कां ग्राहिताः पृथिवीपतेः । ततः कोष्ठेश्वरमुखाः प्रातिलोम्यं प्रपेदिरे ॥१५८४॥

ग्रामाल्लां निर्गतः श्रीमान्कार्त्तिकेऽथ कृती नृपः । तत्र तत्राशुहद्ग्रामं संग्रामेऽयममबाधत ॥१५८५॥

यत्र सुस्सलभूपाद्याः प्रापुर्भङ्गमनापताम् । तं हाडिग्राममदहत्सुज्जिरूर्जितविक्रमः ॥१५८६॥

महीभुजा पीड्यमानैराहूतः कोष्ठकादिभिः । अथ भिक्षाचरो राज्यगृध्नुर्भूयोऽप्युपाययौ ॥१५८७॥

एकेनाह्ना योजनानि प्रोल्लङ्घ्य दश पञ्च च । शिलिकाकोट्टनामानं गिरिग्राममवाप सः ॥१५८८॥

क्षुत्पिपासाकुमारातिभीतिमार्गश्रमोद्भवम् । क्लेशं नाजीगणन्मानी धावितः स जिगीषया ॥१५८९॥

कार्यमायाति वैमुख्यं जिगीषोर्विधुरे विधौ । प्रस्थितस्य पुरोवाते रथस्येव ध्वजांशुकम् ॥१५९०॥

आरम्भमात्रमपि कस्यचिदेव सिद्ध्यै कश्चित्प्रयत्नपरमोऽप्यफलप्रयासः ।
मन्थाद्रिणामृतमवाप्युदधेर्मुहूर्तात्सक्तिं चिराद्विदधता न हिमाद्रिजेन ॥१५९१॥

---

१५७९. a) Emended; A मृगी. १५८०. [1]) Emended with C; A °पुरस्थस्व. १५८१. [1]) Emended; A विपाटनम. १५८४. [1]) Emended with C; A कैश्चित्प°.

भ्रष्टा सरित्स्ववसतेर्जलधिप्रवेशे वेलोर्मिवेल्लनवशेन विवर्तमाना ।
मिथ्यैव यच्छति धियं पुनरुद्गतेति नोत्थानमस्ति तु विधिव्यपरोपितानाम् ॥१५९२॥
तस्य तावन्महायत्नकठोरस्योदयक्षणे । सिद्धेर्विबन्धो विधिना विधुरेण व्यधीयत ॥१५९३॥
आयातं तमबुद्धा तु तस्मिन्नेव क्षणेभ्यगात् । पृथ्वीहरानुजः प्राप्तभङ्गः कृताञ्जलिर्नृपम् ॥१५९४॥
1595 कोष्ठेश्वरः स चावेत्य संप्राप्तं तमनिष्ठताम् । कृत्याक्षमौ ततः सर्पाविव मन्त्रनियन्त्रितौ ॥१५९५॥
ताभ्यां स्थानेश सोन्यस्मिंस्त्याजितोध्वपरिभ्रमम् । कार्कोटद्रङ्गमार्गेण निर्गतः सुल्हरीं ययौ ॥१५९६॥
आसीच्च तत्र प्रोद्दण्डदर्पकण्डूलदोर्द्रुमः । ऊष्मायमाणः कश्मीराक्रान्तिसंततचिन्तया ॥१५९७॥
उदीपसलिलस्येव तस्य रन्ध्रगवेषिणः । पुरं प्रविष्टो राजापि प्रतीकारमचिन्तयत् ॥१५९८॥
अद्वितीयस्त्वमात्येषु प्रतीहारो महोद्यताम् । सुज्जेरसहमानोभूच्छलान्वेषणतत्परः ॥१५९९॥
1600 आययावथ विस्रम्भावष्टम्भं वल्गतः प्रभोः । धन्यात्मजः पूतमूर्तिर्जाह्नवीजलमज्जनात् ॥१६००॥
तदाद्याः संस्तुता राज्ञश्चिरसंभाविताास्ततः । अनाप्नुवन्तोभीकारान्पर्यतप्यन्त चिन्तया ॥१६०१॥
कुर्वाणे कार्यतस्तस्मिन्भरं पित्र्येषु मन्त्रिषु । कालप्रतीक्षाक्षमतामुहुस्ते गहनाशयाः ॥१६०२॥
प्रतीहारस्तु दुर्लक्ष्यसुज्जिनिर्लोठनोद्यतः । अप्रियानपि तान्प्रीत्या जयाहोयोपयोगिनः ॥१६०३॥
व्यतीतेष्वथ मासेषु केषुचिद्दैवयोगतः । अकस्मादभवद्भूभृत्स्फीतलूतामयातुरः ॥१६०४॥
1605 विस्फोटशोफातीसारवह्निमान्द्याद्युपद्रवैः । संदिग्धाभ्युदये तस्मिन्देशः पर्याकुलोभवत् ॥१६०५॥
इत्थं स्थितः कुलस्यैकभर्तुः स्वामी बली रिपुः । तत्पक्षा डामरा राष्ट्रं दुष्टमेव व्यचिन्तयन् ॥१६०६॥
आयत्यां च तदात्वे च हितकृत्यं विचारयन् । राज्ञः श्रीगुणलेखाया जातमेकसुतं शिशुम् ॥१६०७॥
पञ्चाब्ददेश्यं पर्मारिंड सुज्जिर्भूमिपतिं तदा । चिकीर्षुर्मन्त्रयामास मातुलेनास्य गार्गिणा ॥१६०८॥
इत्थं भूतस्य दुधुक्षुः ससूनुः सुज्जिरद्य ते । पञ्चचन्द्रादिभिः सार्धं युक्त्या मन्त्रयतेनिशम् ॥१६०९॥
1610 लब्धरन्ध्रः प्रतीहारो धन्याद्याश्च तदीरिताः । इत्यवोचंस्ततो भूपं स तथेत्यग्रहीच्च तत् ॥१६१०॥
पूर्वप्रजासृज इवाद्भुतवस्तुतत्त्वव्यावर्णनेन कुतुकं जनयन्ति तज्ज्ञाः ।
बाला इवाल्पमतिहार्यधियश्च सन्ति प्रायो नृपा नियमभून्यमनोनुभावाः ॥१६११॥
शौचस्थाने कृतवसतिभिः स्त्रीव्यवायालये वा निःशस्त्रो यच्छलनकुशलैर्मानसं संप्रविश्य ।
नीतो भूतैरिव विवशतां निर्भरं गर्भचेटैर्भद्रं भूपालकथमिव ततः स्यादवष्टब्धचेष्टात् ॥१६१२॥
निर्हेतु प्रहसन्विटः प्रविशति क्षोणीपतेरन्तिकं प्रीत्युत्फुल्लदृगेष किं किमिति तं पृच्छत्यनच्छाशयम् ।
ब्रूते किंचिदसौ कचानथ कचन्सत्रैकर्षं मानिनां मानप्राणगुणेषु यत्सरभसं दम्भोलिपातायते ॥१६१३॥
सविभ्रमगतागतः किमपि भाषमाणः भृशं प्रभोर्वलितलोचनं जगदवज्ञयालोकयन् ।
निजस्य मुखविक्रियाप्रणयताडनाद्यैर्विदन्ननुग्रहमिवाहितं नृपतिवल्लभो दुःसहः ॥१६१४॥
1615 अपि जातु स दृश्येत निःसंक्षोभमतिर्नृपः । यो यन्त्रपुत्रक इव व्यक्तं धूर्तैर्न नर्त्यते ॥१६१५॥

१५९४. ¹) Here one *akshara* is wanting in A; तु supplemented with C. १६०२. ¹) Emended; A °क्षमतां मुहुस्ते. १६०३. ¹) Thus corr. by A₁ from कुलेस्वै°. १६०८. ¹) Emended; A गर्गिणा. १६११. ¹) Emended; A °स्त्र.— ²) Emended with C; A °सत्वं व्या°.

यतो भृत्यान्तराज्ञानाज्जातः सर्वस्वसंक्षयः । तत्प्रमादुष्कृते राज्ञां हा धिक्क्वापि शाम्यति ॥१६१६॥
सुज्जिरारोग्यमन्वेष्टुमागच्छन्पूर्ववत्प्रभोः । विन्यस्तरक्षिणः पश्यन्नविश्वासमखिद्यत ॥१६१७॥
दाक्षिण्यं वामतां यातमाशये प्रतिबिम्बितम् । दर्पणस्येव राज्ञः स विभाव्याभूत्पराङ्मुखः ॥१६१८॥
तस्मिन्राजगृहे खेदान्मन्दीकृतगतागते । नृपतेस्तद्गतां प्रीतिं निःशेषां जह्रिरे खलाः[1] ॥१६१९॥
भृत्यः सुज्जेर्धिन्नरथोप्यास्थानद्विजभूः शठः । प्रातिलोम्यावहैर्भर्तुर्मन्त्रैरासीच्छ्रियोन्तकृत् ॥१६२०॥ 1620
नीरोगे राज्ञि दृष्टः स दिष्टवृद्धयै नृपास्पदे । वज्रवर्षी विनिर्याय प्रार्थनार्थी गृहान्ययौ ॥१६२१॥
न तं प्रासादयद्राजा विशालबलवाहनः । आक्रम्योसौ[1] कथं नः[2] स्यादित्युपायं त्वचिन्तयत् ॥१६२२॥
त्यज्येत हतकार्योसौ निराशैरनुजीविभिः । मत्वेति तदधीकारानन्येभ्यस्तूर्णमार्पयत् ॥१६२३॥
राजस्थानात्स्वजं धन्यमुदयं कम्पनादपि । अजिमहद्वारपतिः खेरीकार्ये च रिल्हणम् ॥१६२४॥
हृताधिकारे प्रव्यक्तवैकृते नृपतौ ततः । अल्पावशेषानुचरः सुज्जिरासीद्विशङ्कितः ॥१६२५॥ 1625
विमानितः पुराद्गङ्गायात्रामुद्दिश्य मानवान् । सोथ सुस्सलभूभर्तुरस्थीन्यादाय निर्ययौ ॥१६२६॥
औत्सुक्यात्प्रार्थनाकाङ्क्षी राजधान्यन्तिके स सः । निर्गच्छन्राजपुरुषैर्न राज्ञा वान्वरुध्यत ॥१६२७॥
तन्निर्वासनगर्वस्य स्थापनायानुयात्रिके । प्रतीहारस्तस्य गुप्त्यै कोशादेः स्वात्मजं व्यधात् ॥१६२८॥
निग्रहानुग्रहावस्मदायत्ताविति रक्षिणम् । पुत्रं प्रादाल्लक्ष्मको म इति ध्यायन्स विव्यथे ॥१६२९॥
निवृत्तो लक्ष्मको द्वारात्पर्णोत्सं शनकैर्गतः । अध्यारोपयदद्रोहो भागिकं लोहराचलात् ॥१६३०॥ 1630
प्रतीहारविसृष्टाय धात्रेयाय महीभुजः । प्रेमाभिधाय तत्कोष्ठाधीकारं च समार्पयत्[1] ॥१६३१॥
उत्खाय लोहरत्यागाच्छङ्काशङ्कुं महीपतेः । स ग्रीष्मविषमं कालं राजपुर्यामलङ्घयत् ॥१६३२॥
अमात्यकन्दुकव्रातपातनोत्पातनक्षमः । आयत्तडामरः प्राप प्रथां कामपि लक्ष्मकः ॥१६३३॥
द्वारेथाकारयत्सुज्जिप्रतिमल्लविधित्सया । कृष्यमाणो राजवंश्यपौरुषं राजमङ्गलम् ॥१६३४॥
अनन्यदेशजः सुज्जेः[1] भूरी मत्कोशपोषितः[2] । कीर्तिमेष हरेद्ध्यावितीर्ष्याकलुषो हि सः[3] ॥१६३५॥ 1635
खड्गग्राहिसहायः स क्षुण्णः पर्यटितुं पथि । निःशुल्कखशोपहास्यश्च तेन कार्यार्पणात्कृतः ॥१६३६॥
कर्तुं पदव्यां योग्यानामयोग्यान्प्रभवेन्न कः । तेषां गुणैस्तान्संयोक्तुं न शक्यं कारणैरपि ॥१६३७॥
पदे श्रीखण्डस्यानुचितमुचिते वर्ष्मणि निजे वृषाङ्कः प्रक्षेप्तुं प्रभवति चिताभस्म रभसात् ।
न तस्यैवेच्छायत्तत्रिजगदुदयापायघटनोप्यसौ तद्गन्धेन स्फुटमिह पटुः[1] संघटयितुम् ॥१६३८॥
तस्मिन्सुज्जिप्रतिस्पर्धामप्रौढे वोढुमक्षमे । दूतानसृजदानेतुं सज्जपालं दिगन्तरात् ॥१६३९॥
निर्वीरे मण्डले द्वेष्योप्यवापत्कार्यगौरवात् । कोष्ठेश्वरो नरपतेर्नितरामन्तरङ्गताम् ॥१६४०॥ 1640
प्रीतिदायैस्तोष्यमाणस्तैस्तैस्तुष्टेन भूभुजा । विस्रब्धो नगरे तस्थौ सोपि लूतामयातुरः ॥१६४१॥

---

१६१९. 1) Emended; A जह्रिरेखिलाः. १६२२. 1) Emended; A आक्रम्यासौ.—2) Thus corr. in A from न. १६२४. 1) Emended; A धान्य°. १६२५. 1) Emended; A हिता°. १६२९. 1) Conjectural reading; A °कोष; R C °कोप. १६३१. 1) Emended; A समर्पयत्. १६३३. 1) Thus A1; A2 °पातनोत्थापनक्षमः. १६३५. 1) Thus A1; A2 सुज्जिः.—2) Thus corr. by A2 from A1 मत्कोश°.—3) Thus corr. by A2 from A1 स्पर्धामेष वहे — — विती°. १६३८. 1) पटुः supplied by A2 in space left by A1.

एवं डमरकदम्बैक्यं राज्ञि कुर्वति कार्यतः । चालकैः सोमपालाद्यैः सुज्जिर्जानिन्येथ वैकृतम् ॥१६४२॥
प्रतिज्ञाय लतामात्रसाध्यं कश्मीरनिर्जयम् । सोमपालाय तद्राज्यं सोऽङ्गीचक्रे च मानितः ॥१६४३॥
प्रतिशुश्राव तस्मै च भागिनेयीं स कन्यकाम् । धीमानत्रान्तरे सामदाने प्रयुयुजे नृपः ॥१६४४॥
1645 द्वौ तावल्पाशयौ राजकन्ययोः स्वीक्रियां तदा । रभसाद्यावकुर्वाणावदत्तामन्तरं द्विषाम् ॥१६४५॥
उपायैर्जयसिंहस्य शकुनैश्च निरीक्षितैः । प्रेरितः सोमपालोथ सुज्जेर्मन्दादरोऽभवत् ॥१६४६॥
स्वयमेत्य प्रतीहारस्तत्र राजपुरीपतिम् । सीमान्तर्भुवमानिन्ये कन्यकोद्वाहसिद्धये ॥१६४७॥
जातां कल्हनिकाख्यायां महादेव्यां महीपतेः । उपयेमे नृपसुतां सोमोम्बापुत्रिकाभिधाम् ॥१६४८॥
याते तस्मिन्कृतोद्वाहे नागलेखाभिधां सुधीः । तत्स्वस्रेयीं[1] प्रतीहारो भूभुजे प्रत्यपादयत् ॥१६४९॥
1650 इत्थं राष्ट्रद्वये बद्धसंधौ निरवकाशताम् । प्राप्तः प्रतस्थे हेमन्ते सुज्जिस्त्रिपथगोन्मुखः ॥१६५०॥
जालंधरे संघटितो ज्येष्ठपालो निनाय तम् । गाढावमाननिर्नष्टसौष्ठवं भिक्षुपक्षताम् ॥१६५१॥
त्वयि भिक्षाचरे चैकसैन्यनायकतां गते । नोपेन्द्रो वा महेन्द्रो वा समर्थौ प्रत्यवस्थितौ ॥१६५२॥
राज्यप्रदस्य ते यच्च चक्रे राजा विमाननाम् । तस्थुषो यच्च विषये प्रतिकुर्मस्तयोर्द्वयोः ॥१६५३॥
इति संप्रेरितस्तेन देङ्गपालान्तिकस्थितेः । यियासुः सोन्तिकं भिक्षोर्भागिकेन न्यषिध्यत ॥१६५४॥
1655 अनिक्षिप्तवतोस्थीनि स्वामिनो जाह्नवीजले[1] । न युक्तमेतत्ते कृत्यमित्यावेगादशासि[2] च ॥१६५५॥
स्नात्वा पुनर्वामेष्यामि पार्श्वं व इति निश्चयम् । स पीतकोशः कृत्वास्य ययौ प्रस्तुतसिद्धये ॥१६५६॥
प्रतीहारकरन्यस्तसर्वभारस्तु भूपतिः । मन्दाक्रान्तितया राज्यमसुस्थितममन्यत ॥१६५७॥
यो यो हि व्यपहीर्षत्तं संधाय सविधस्थितः । तमन्वहं प्रतीहारः सानुग्रहमिवैक्षत ॥१६५८॥
प्रगल्भमाने शास्त्यैर्वमुदयः कम्पनापतिः । अवधीच्छद्मना द्रमं प्रकटं कालियात्मजम् ॥१६५९॥
1660 अविश्वासोल्बणान्सर्वलावन्यानथ लक्ष्मकः । निर्मर्यादान्कम्पनेशर्मापत्सान्त्वमजिग्रहन् ॥१६६०॥
स्नात्वाभ्येष्यति गङ्गायां यावत्सुज्जिर्विसृष्टव्रताम् । यावत्कथं मया नेया कश्मीरा इति चिन्तयन् ॥१६६१॥
तावन्मार्गान्तरव्याप्त्या राज्ञो विज्ञाय डामरान् । भिन्नान्भिक्षाचरो विक्षद्विषल्लाटां हिमागमे ॥१६६२॥
मण्डलस्यान्तरे तस्य विविक्षो रुद्धडामरः । प्रतीहारो हिमर्तुश्च निषेद्धा समपद्यत ॥१६६३॥
स टिक्केन पितृद्रोहादेकान्तद्वेषिणा रिपोः । आनीतः संमतैर्दत्ताप्यायः सर्वैश्च डामरैः ॥१६६४॥
1665 प्रतीक्षमाणो राज्याप्तिहेतुं सुज्जिसमागमम् । निर्भयाष्टिक्कजामातुर्भागिकस्य खशप्रभोः ॥१६६५॥
बाणशालाभिधे दुर्गे वसन्नल्पोच्छ्रितावपि । तूर्णैर्विभेदमनयन्सर्वं डामरमण्डलम् ॥१६६६॥
प्रमोदं सुहृदां त्रासं द्विषां च विसृजन्पुरः । व्यावर्तताथ गङ्गायाः सुज्जिर्विहितमज्जनः ॥१६६७॥
पूर्वविप्रकृते भिक्षावस्मिन्नथाभेदमागते । यथामुष्य महीभर्तुस्तथास्माकं भयं भवेत् ॥१६६८॥
ध्यात्वेति सिंहदेवेन प्रार्थितो व्याजमादधे । सुज्जिस्वीकरणोद्योगे सोमपालो भयाकुलः ॥१६६९॥
1670 सुज्जिर्जालंधरं प्राप्तः प्रातर्भिक्षाचरान्तिकम् । यावद्यास्यति तं सायं तद्दूतस्तावदासदत् ॥१६७०॥

---

१६४९. [1]) Emended with C; A स्वस्रेयी. १६५५. [1]) These two *pâdas* have been twice written by A₀.— [2]) Emended with C; A °शाधि. १६५९. [1]) Thus A; perhaps read शास्त्यैवमु°.

प्रेरितो ज्येष्ठपालेन निषिद्धो भागिकेन च । विरराम स तस्योक्त्या विपक्षाश्रयणग्रहात् ॥१६७१॥
मार्गे देशान्तरोपान्तं तत्र भूपोऽपनेष्यति । त्वं च दास्यत्यधीकारं मन्मुखप्रहितार्थनः ॥१६७२॥
इति दूतमुखेनोक्तः सोमपालेन चान्वहम् । विपक्षौत्सुक्यमुत्सार्य तद्देशाभिमुखो ययौ ॥१६७३॥
उदयः कम्पनाधीशो वैशाखे तीर्णसंकटः । खशान्वितेन संग्रामे प्रत्यपद्यत भिक्षुणा ॥१६७४॥
प्राक्तस्युष्यल्पपृतने जाते पृथुबले ततः । तस्मिन्कोट्टान्तरं भिक्षुः प्राविशत्प्राप्तवेष्टनः ॥१६७५॥ 1675
राजाथ विजयक्षेत्रं निर्यातः प्रत्यपूरयत् । कम्पनेशस्य कटकं तास्ताः संप्रेषयंश्चमूः[1] ॥१६७६॥
यन्त्रोपलशरासारविविधायुधवर्षिणी । दुर्गस्थितैर्नृपचमूः प्रत्ययोध्यश्मवर्षिभिः[1] ॥१६७७॥
पतत्स्वश्मसु भिक्षोश्च नामलक्ष्मसु पत्रिषु । ग्रहीतुं दुर्गमाजाजसेना दीर्घापि नाशकत् ॥१६७८॥
दिनैरभ्यधिके मासमात्रे यातेऽग्रहीत्ततः । विदार्य मूलं दुर्गस्य धन्यैः खाताम्बु संभृतम् ॥१६७९॥
दुर्गभाजो बलासाध्या राज्युपायपरे धियम् । जाततद्वैरिबाधेच्छा धनलुब्धामदर्शयन् ॥१६८०॥ 1680
विससर्ज प्रतीहारमथ तद्वस्तुसिद्धये । राज्ञा[1] डामरसामन्तमन्त्रिराजात्मजैः समम् ॥१६८१॥
कोष्ठेश्वरत्रिल्लकाद्याः कृच्छ्रस्थस्य[1] विमोक्षणम् । करिष्यामो वयं भिक्षोरिति बुद्ध्वा तमन्वयुः ॥१६८२॥
पश्यन्संकटशैलाग्रादधः कोट्टं मिमोक्षति । जितं मेने प्रतीहारो वीक्ष्यानन्ताः स्ववाहिनीः ॥१६८३॥
पूर्वस्थितैः प्रतीहारानुगैश्चान्यत्र वासरे । अयोधि सर्वसैन्यस्य बलात्कोट्टं जिघृक्षुभिः ॥१६८४॥
ते तावन्तोऽप्यश्मवृष्ट्या तथा तैः प्रतिचक्रिरे । नास्तीदं विक्रमेणेति यथागृह्णन्विनिश्चयम् ॥१६८५॥ 1685
क्षीरदेहद्रुमाग्रेभ्यो न्यपतन्नश्मभिर्हताः । निर्यद्रक्तौघसरघाः शीर्षभ्रमरगोलकाः ॥१६८६॥
कोष्ठेश्वरस्य गूढत्वं निर्व्यूढं तत्र किंचन । स्वस्य भिक्षोर्लवन्यानामन्येषां च विनाशकृत् ॥१६८७॥
नास्त्यत्र मत्समो वीर इत्येतावत्प्रसिद्धये । स ह्युग्रोद्धतं भिक्षोर्यत्प्राणक्षयकार्यभूत् ॥१६८८॥
बुभुक्षूणां खशानां स संकटे धैर्यमादधे । कोष्ठेश्वरोऽस्मि चाभिज्ञो तद्वश्या डामराः परे ॥१६८९॥
यदेतद्दृश्यते भूरि सैन्यमस्मद्धिताय तत् । पर्यवस्येदिति वदन्समभाव्यन्यथा च तत् ॥१६९०॥ 1690
विश्रम्भभूरमुष्यारिर्येन कोष्ठेश्वरोऽप्यसौ । अन्येषु तत्र कैवास्थेत्यथ ते निश्चयं दधुः ॥१६९१॥
भूभृत्पितृद्रुहः[1] कार्यवशेन स्वोपवेशने । अङ्गीकृताधिकारस्तु धीमांष्टिक्कस्य लक्ष्मकः ॥१६९२॥
खशाधीशं महाग्रामस्वर्णादित्यागसंभयात् । स्वीकृत्य भिक्षुदुधुक्षाबद्धकक्ष्यमकारयत् ॥१६९३॥
आनन्दाख्यः खशाधीशस्यालः कृतगतागतः । नीत्वा टिक्कं प्रतीहाराभ्यर्णं भूयोऽप्यरोपयत् ॥१६९४॥
प्रतीहारस्य टिक्केन सैक्यं वीक्ष्य डामरैः । निःसंशयं हतोऽज्ञायि भिक्षुः कोष्ठेश्वरादिभिः ॥१६९५॥ 1695
संरब्धास्तद्विमोक्षाय प्राहिण्वंस्ते खशान्तिकम् । दूतानूरीकृतस्वर्णदाना भूरिधनैः समम् ॥१६९६॥
खशस्तु दध्यावुत्कोचं[1] गृहीत्वास्माभिरुज्झितः । जानाति रक्षितान्प्राणान्भिक्षुः कोष्ठेश्वरादिभिः ॥१६९७॥
समन्युः ग्रामराज्योऽथ देङ्कपालोऽथ दूरगः । हन्यान्मां जयसिंहस्तद्रक्ष्यः पक्ष्यः प्रयत्नतः ॥१६९८॥
मत्वेति तेन प्रत्युक्ता भिक्षुं[1] शौचस्थितं गृहात् । विपाद्यातः फलहकं निर्गच्छेत्यूचिरेऽपि ते ॥१६९९॥

---

१६७६. [1]) Emended; A संप्रेषयन्नमूः. १६७७. [1]) Emended; A प्रत्य॰; C प्रत्यया°; cf. viii. 1624. १६८१. [1]) Emended; A राज्ञां. १६८२. [1]) Thus corr. by A₂ from A₁ कृच्छ्रासस्य. १६९२. [1]) Emended; A °द्रुद्रु°. १६९७. [1]) Emended with R; A दध्याशु°. १६९९. [1]) Emended; A भिक्षुणो°

1700 स स्वमेध्योपलिप्ताङ्गः श्वेताचस्करवर्त्मना । यात इत्ययशो लोके प्रापन्मानी न निर्ययौ ॥१७००॥
कोष्ठेश्वरोभ्यककुत्स्थः सैन्यक्षोभेच्छयाक्षिपत् । रुक्षं कालविदा प्राक्के प्रतीहारेण सान्त्वितः ॥१७०१॥
भीतौ खशाद्यैर्दत्तायामा प्रत्यूषादगृह्यत । व्यवसायः प्रतीहारमुख्यैर्भिक्षुप्रमापणे ॥१७०२॥
गच्छन्निरागच्छंश्च राजा दूतैः प्रतिक्षणम् । अन्विष्यन्विजयक्षेत्रे वार्तां पर्याकुलोभवत् ॥१७०३॥
तावन्निराहवैस्तैस्तैः साहसे दश वत्सरान्[1] । कृतयत्नस्य साध्योभून्न यो वृद्धमहीभुजः ॥१७०४॥
1705 डिम्बो राजानुगा डिम्बास्तस्य भिक्षोः प्रमापणम् । साध्यमेते हि मन्यन्ते हन्त किं केन संगतम् ॥१७०५॥
विहस्य नीयते वित्तं खशैरस्य क्षणादमी । भग्ना नूनं प्रयास्यन्ति मुषिताश्चाखिलाः परैः ॥१७०६॥
पृथग्भूतः कोष्ठकोयं त्रिल्लकोस्यैव बान्धवः । एते भिक्षाचरोच्छिष्टपुष्टा आभ्यन्तरा अपि ॥१७०७॥
को नूतनोत्र संग्रामो यो राज्ञः साधयेद्धितम् । सामग्री नूनमायाता सेयमस्यैव सिद्धये ॥१७०८॥
इत्यूचुः शिबिरे यावज्जनास्तावदवेष्ट्यत । कटकैर्मन्त्रिणां दुर्गं विकोशायुधवाहिभिः ॥१७०९॥
1710 एकाकी चिरसंक्लिष्टो हन्तव्यस्तत्कृतेखिलैः । हा धिक्परिकरो बद्धो निर्लज्जैः सर्वशस्त्रिभिः ॥१७१०॥
त एवेत्यूचुरासीच्च कचच्छस्त्रोर्मिनिर्मलः । स्फुरद्योधाक्षिशफरो निःशब्दः सैन्यसागरः ॥१७११॥
श्योनोड्डीयेत वा सैन्यं लङ्घयेद्वा मृगप्लुतैः । दुष्टाभ्रवृष्टिरिव वा निखिलांस्ताडयेत्समम् ॥१७१२॥
साश्चर्यशौर्यः पर्यन्ते स्वीकुर्वन्भिक्षुरायुधम् । संभ्रान्तश्चकितश्चासीदित्यन्तश्चिन्तयञ्जनः ॥१७१३॥
एतावन्मन्त्रिणां सिद्धमथ प्रत्यूहसंभवः । तच्छान्तिः कार्यसिद्धिश्च प्रतापैर्नृपतेरभूत् ॥१७१४॥
1715 सैन्ये भिक्षाचरापातं पश्यत्यूर्ध्वार्पितेक्षणे । कोष्ठान्निष्कृष्टशस्त्रीकः पुमानेको विनिर्ययौ ॥१७१५॥
रुदतीभिः परीतस्य नारीभिस्तस्य चिक्षिपुः । पृष्ठे केपि वपुर्लोलकौसुम्भाधरवाससः ॥१७१६॥
बद्धः पलायमानोत्र सोयं भिक्षुरिति ब्रुवन् । उन्मुखः स जनोश्रौषीद्धिक्कृतमथ निर्गतम् ॥१७१७॥
स हि[1] भिक्षोः कृतद्रोहतुमुले प्रस्तुतो[2] वधम् । तस्माद्राजानुगेभ्यो वा स्वस्याशङ्क्य विनिर्ययौ ॥१७१८॥
अद्रोहोस्मीति लोकस्य प्रत्ययाय चकर्ष च । कृपाणीमुदरं हन्तुं रुध्यमाणो निजानुगैः ॥१७१९॥
1720 सानुगस्त्यक्तमार्गां स विलङ्घ्य नृपवाहिनीम् । अद्रिप्रस्रवणोपान्ते नातिदूरेभ्युपाविशत् ॥१७२०॥
उच्छूनसंधिरसंप्राप्तैरम्भोभिर्दुर्गनिर्गतः । मायां प्रयोक्तुं प्रारेभे प्रेरितः सोन्यडामरैः ॥१७२१॥
संजातं लम्बमानार्कमहस्तद्रक्ष्यतां क्षणम् । भिक्षुः क्षपायामास्कन्दमपनेष्यन्ति डामराः ॥१७२२॥
इति तद्वाचिकास्तीक्ष्णा नीतिविभिर्मन्त्रिणां समम् । खशीस्त्यजन्निर्दयवदो न्यरुध्यन्ताहतक्षवः[1] ॥१७२३॥
ततः किलकिलारावमुखरैः करतालिकाः । योधैर्ददद्भिः सचिवा व्यगृह्यन्ताकुलाशयाः ॥१७२४॥
1725 मुक्ताः स्वामिद्रुहः कृच्छ्रगता राज्यं प्रसाधितुम् । द्विषतो मन्त्रिभिः स्वार्थो[1] दत्त्वार्थान्को नु साधितः ॥१७२५॥
राजकार्ये च भावी च लम्बमानेथ लक्ष्मकः । किमेतदिति तं नीचैः खशास्यालमभाषत ॥१७२६॥
सोभ्यधात्कुम्भदास्यापि रोद्धुं शक्यं चिकीर्षितम् । खशानां प्रत्यवस्थाता कथं तत्रास्त्यसंनिधिः ॥१७२७॥
स हन्तुं वैपरीत्यं तं खशानां स्वं प्रजेत्यथ । उक्त्वा व्यसृजदानन्दं प्रहसे चान्यमन्त्रिभिः ॥१७२८॥

---

१७०४. [1]) Emended; A °वत्सत्व. १७१८. [1]) Emended; A सह.—[2]) Thus A; perhaps read कृतद्रोहस्तुमुले प्रस्तुते.
१७२३. [1]) Emended with C; A न्यरुध्यन्ता°. १७२५. [1]) Emended; A स्वार्था.

अदूरदर्शिना राज्ञा विपलाटाध्वपाततः । देङ्गपालगृहा – –¹रम्भः समभाव्यत ॥१७२९॥

अतः प्रधानकोष्ठेशास्खलः समगृह्यत । मार्गेचार्यैरेतदर्थं प्रमता दीर्घवागुराम् ॥१७३०॥ 1730

संक्षोभावसरे क्षत्ता ततो निःसंभ्रमोऽभवत् । शिक्षितं पक्षिणमिव स्वकं प्राप्यं विवेद तम् ॥१७३१॥

स तानूचे न हास्यं मे नष्टे कार्येऽत्र साहसम् । सर्वनाशो हतेऽमुष्मिन्खशस्वालेऽपि किं भवेत् ॥१७३२॥

अकुण्ठया भाग्यशक्त्या राज्ञः स्यालः खशस्य सः । सर्वाभियन्त्र्य दुर्गाप्तावीक्ष्णादीनाजुहाव तान् ॥१७३३॥

दस्यूनामसवः कण्ठे संदेहं मन्त्रिणां धियः । स्वःस्त्रीणां प्रीतयः काष्ठां तीक्ष्णाश्चारुरुहुर्गिरिम् ॥१७३४॥

स चर्मकौपीनपटीबन्धस्तस्त्राभिधाङ्कितैः । इषुभिः स्वामिवत्स्वस्य व्यापनं सर्वतो युधि ॥१७३५॥ 1735

स ताम्बूलाधरः सक्तिः सा केशाहमभूद्वोजने । याभूदनुमुमूर्षूणां भिक्षुराजोपजीविनाम् ॥१७३६॥

निशितान्ते ततस्तस्मिन्स तेषां संन्यवर्तत । कोष्ठेश्वरादिशिबिरं तूर्णं शरणमीयुषाम् ॥१७३७॥ तिलकम्॥

एकैकशो लक्ष्मकेण मुक्त्या स्वैः प्रेरितैर्भटैः । टिक्कः स्वं वीक्ष्य वलितं निष्ककर्ताङ्गुलिं भयात् ॥१७३८॥

खशैरस्मिन्नवसरे स पलायनशङ्किभिः । रक्ष्यमाणस्तेष्वहःसु मनस्तापादभुक्तवान् ॥१७३९॥

वीरस्वाम्यन्तिलम्बेन तीक्ष्णानामाहवोत्सुकः । तस्थौ भिक्षाचरः स्वान्तमक्षवत्या विनोदयन् ॥१७४०॥ 1740

हर्म्यप्राङ्गणमायाते तीक्ष्णलोके युयुत्सया । उत्तिष्ठता तेन दायः स्तोकघोषः समाप्यत ॥१७४१॥

दीव्यतः कान्तया साकं कामिनः सुहृदागमे । प्रत्युत्थातोरिव क्षोभो नान्तस्तस्य व्यजृम्भत ॥१७४२॥

किमद्यापि वधेन स्याद्बहूनामिति चिन्तयन् । स विहाय शरावापं सासिधेनुर्विनिर्ययौ ॥१७४३॥

सुदीर्घश्चिन्तागलितायामश्यामलिभिः कचैः । पश्चाद्विभ्रत्पताकाङ्कमिव वीरपटाञ्चलैः ॥१७४४॥

गण्डताण्डविनाच्छिन्नशङ्खताडङ्करोचिषा । चन्द्रनोल्लेखकान्त्या च द्योतिताहंक्रियास्मितम् ॥१७४५॥ 1745

विशीर्णं चित्रचार्यन्ते विपर्यस्ताङ्गिनाडनम् । द्योतयन्नमिवालातैः शास्त्रीनेत्राधरांशुकैः ॥१७४६॥

कौसुम्भाधरवासोभवद्धौताधराञ्चलैः । लोलैर्वीररसं बद्धसटाटोपमिवांसयोः ॥१७४७॥

शृङ्गनःपाणिपादैक्यत्रासप्रचुरचारिभिः । चरन्तं मण्डलैश्चित्रैर्लघुचित्रस्थिरक्रमैः ॥१७४८॥

औचित्यस्योचितां चर्यामलंकारमहंकृतेः । अभिमानविभूतीनां नित्योत्सेकमनत्ययम् ॥१७४९॥

अलक्षिताक्षिप्रपातं स सर्वोऽप्युन्मुखो जनः । विचरन्तं तमैक्षिष्ट भिक्षुमध्ये विरोधिनाम् ॥१७५०॥ 1750

राजबीजी प्रधोर्नमा तं प्रवीरः कुमारियः । भ्रातापि ज्येष्ठपालस्य निर्यातो रक्तिकोऽन्वगात् ॥१७५१॥

हर्म्यान्निर्गतोऽन्वतैस्तैस्तैर्विशतः परिपन्थिनः । दरोधकः शरासारैर्गार्गिको भिक्षुसंभितः ॥१७५२॥

ते धावन्तो व्यभाव्यन्त शरैस्तच्चापनिर्गतैः । वर्षोपलैः पुरोवातप्रेरितैरिव दन्तिनः ॥१७५३॥

स रोद्धा प्रतियोधानां पापैः क्षिप्राश्मभिः खशैः । क्षताङ्गो प्रमचापश्च चिरेण विमुखीकृतः ॥१७५४॥

तस्मिन्प्रचलिते मार्गैः प्रविश्योद्यान्नपैर्भटाः । ते च भिक्षाचरादीनां सर्वे गोचरमाययुः ॥१७५५॥ 1755

भिक्षोरेकं क्षणालक्ष्यधैर्यं पार्श्वभूतायुधम् । अधावत्तूर्णमादाय शूलमेको वृकव्रटः ॥१७५६॥

---

१७२९. ¹) A₁ omits here two *aksharas* without indicating the *lacuna*; C देङ्गपालगृहारम्भारम्भः; perhaps read °गृहा-अर्णारम्भः. १७३०. ¹) Thus A; C स समगृह्यत. १७३६. ¹) Emended with C; A राजोपजी°. १७३७. ¹) Emended; A तेषां सन्यव°.—²) A₁ writes here ३ instead of तिलकम्. १७४२. ¹) Emended with C; A दीव्यन्तः. १७४९. ¹) चर्या supplied by A₂ in space left by A₁. १७५३. ¹) Emended; A व्यभा°.

तस्य प्रहरतः शूलं भिक्षुराश्रितवत्सलः । शिल्पापहस्तेनावेगात्केशपाशमगाह धावितः ॥१७५७॥
प्रजहार कृपाण्या च निर्वल्गणे पतिष्यति । तस्मिन्मार्दरतां भूयसी कुमारियरक्षिकौ ॥१७५८॥
निर्विभागैर्हते तस्मिन्निविधायुधवाहिभिः । विरोधियोधैः संनद्धैस्त्रयो युयुधिरेथ ते ॥१७५९॥
1760 अजायन्त विचित्राश्च शस्त्रसंचासिताहिताः । कोटराजगरापालसरबीषा इव द्रुमाः ॥१७६०॥
अथाकुर्वन्नस्तान्हन्तुं खड्गशूलादिभिर्द्विषः । अपसृत्य शरासारैस्ततो दूरादवाकिरन् ॥१७६१॥
भिक्षाचरमृगेन्द्रस्य भञ्जतः शरपञ्जरान् । ततो हर्म्यास्थशैर्मुक्ताः पुष्टाः पाषाणवृष्टयः ॥१७६२॥
धावतस्तस्य घोराश्मवृष्टिकुट्टितवर्ष्मणः । निममज्ज यकृत्पिण्डं भञ्जन्पार्श्वे शिलीमुखः ॥१७६३॥
क्रान्त्वा त्रीणि पदान्याशु स पपात दिशान्क्षितेः । ततश्चिरप्ररूढं द्रु कम्पं विहितपतां हरन् ॥१७६४॥
1765 कुमारियोपि बाणेन विद्धवक्षुणवर्मना । प्रणितोप्यपतद्भर्तुः पादोपान्तेपजीवितः ॥१७६५॥
रक्षिकस्तु शरेणैव विद्धो मर्मणि विह्वलः । सजीविनोपि निर्जीव इव भूमावुपाविशत् ॥१७६६॥
महाकुलीनैः सहितो हतो भिक्षुरशोभत । यथावभुमः शिखरैः पुष्पितैरिव पादपैः ॥१७६७॥
द्रुवतो राजचक्रस्य मध्ये हर्षनृपात्मनः । नावमानस्य मानस्य त्वभूद्भिक्षो[2]ः परं पदम् ॥१७६८॥
विधाता नित्यविधुरस्तेनान्तेप्यभिमानितः । अकुण्ठेन ध्रुवं चक्रे गृहीतात्मपराजयः ॥१७६९॥
1770 को वराको महर्द्धीनां सोमे पूर्वमहीभृताम् । उदासेनान्तकृत्येन ते स्वस्याये न किंचन ॥१७७०॥
अहोपुत्रपिकामस्तैरारोहश्रीर्हिचक्रटैः । तदवस्थस्तदार्तोपि शक्यायुद्ध कुमारियः ॥१७७१॥
स्फुरन्योद्धव्यमित्येव स महारावघस्तथा । विज्ञाततत्त्वैररिभिर्वितस्य बहुशो हतः ॥१७७२॥
विपक्षेस्मिन्बलं मूढाः प्रहारैरिति निष्विताः । खड्गैः प्रजह्रुर्बहुशो हतें भिक्षौ द्विषद्भटाः ॥१७७३॥
अविभेद्यायुधस्त्रीव्रणवेदनयाधमैः । कैश्चिज्जीवितमायो रक्षिकः शस्त्रिभिर्हतः ॥१७७४॥
1775 वयसस्त्रिंशतं वर्षाणय मासांश्च भुक्तवान् । न पञ्चाश्वासितज्यैष्ठदशम्या नृपतिर्हतः ॥१७७५॥
निदानं विप्लवे दीर्घे सर्वनाशेपि कारणम् । येषा बभूव तेप्येवं तुष्टुवुः सत्त्वविस्मिताः ॥१७७६॥
नेत्रस्पन्दं भ्रुवोः कम्पं स्मेरास्यत्वं च नामुचत् । सजीवमिव तन्मुण्डं कियतीरपि नालिकाः ॥१७७७॥
एकं व्योम्न्यविशार्विम्बभानुं भूमौ पुनः परम् । तदेहमप्सरःसङ्गं धराम्बुं च विदक्षावम् ॥१७७८॥
सचिवा विजयक्षेत्रस्थितस्यासे महीपतेः । तेषां त्रयाणां मुण्डानि ततोन्येद्युरुपाहरन् ॥१७७९॥
1780 श्रीद्वधारबदन्त्यनघाशाङ्कादिमकाशने । दृष्टाविमस्वभावोभिर्ययायं पार्थिवस्तथा ॥१७८०॥
तत्र तथाद्भुतं भावं दर्शयन्भुवनाद्भुतम् । परिच्छेद्यानुभावस्त्वं न केषामपि गच्छति ॥१७८१॥युग्मम्॥
नाद्याविहतोसाध्वः पितुर्मे योप्यभूदिति । न जहर्ष विनष्टोयं राजकण्टक इत्यपि ॥१७८२॥
नाकुप्यन्मेत्पितुर्मुण्डमेष भ्रमितवानिति । वीक्ष्य भिक्षोः शिरोव्याजभावौदार्यस्त्वविस्मयत् ॥१७८३॥ युग्मम्॥
आकारस्वास्य संभाव्यं सत्त्वं न द्वेषवैकृतम् । वैशद्यं स्फटिकस्येव नार्कालोकोपतप्तता ॥१७८४॥

---

१७५८. [1]) Emended; A मद°. १७६५. [2]) Emended; A पादोपान्ती. १७६६. [1]) Emended with C; A भक्षिकस्तु. १७६८. [1]) Thus A; C °स्वजा.—[2]) Perhaps read °ह्रिशुः. १७७०. [1]) Thus A; B C °नान्तकृत्येन. १७७५. [1]) Emended with C; A कोष्ठ°. १७७६ [1]) Emended; A सत्त्वविस्मित. १७७८. [1]) Emended; A धारा°. १७८१. [1]) A, २. १७८३. [1]) Emended; A, had first written नाकुप्यन्मस्त पितु° and subsequently corrected this to नाकुप्यन्मत्पितु°.—[2]) Emended; A, °भावौ — — स्त्वविं°, writing in margin भावाराव; B G C °भावारावस्त्व°. Cf. अष्टाजौदार्यचर्चस्व iii. 308.—[3]) A, २. १७८४. [1]) Emended; A °तप्तत्वम.

उत्कर्षात्प्रभृति व्यक्तममुं यावन्महीभुजम् । हा धिक्स्वमृत्युना दृष्टं नेह देशविसर्जनम् ॥१७८५॥ 1785

प्रसादवित्ता येऽप्यासन्पूर्वमस्योर्वराभुजः । तटस्था इव वीक्षन्ते तेऽद्य मुण्डावशेषताम् ॥१७८६॥

इति क्षितीशोऽसामान्यसौजन्योऽन्तर्विचारयन् । आदिदेश रिपोः क्षीणं तादृशस्याग्न्यसत्क्रियाम् ॥१७८७॥

निद्राच्छेदे च निशि स्वं ध्यायंस्तस्योदयात्ययौ । भवस्वभाववैचित्र्यं मुहुर्मुहुरचिन्तयत् ॥१७८८॥

अपि वर्षसहस्रेण देशो दायादृदुःस्थितिः । नूनं न भविता भूय इति लोकोऽप्यमन्यत ॥१७८९॥

दग्ध्वा तृणं ननु घनं प्रतनोति शष्पं वृष्टिं सृजत्युपचितोष्म दिनं प्रदह्य ।
वैचित्र्यसंस्पृशि विधेर्नियमेन कृत्ये न प्रत्ययः क्वचन चञ्चलनिश्चयस्य ॥१७९०॥ 1790

कृत्यं निर्वर्त्य विश्रान्त्यै धीरस्याभ्रमतो मनः । विधिर्विधत्ते दीर्घान्यकार्यभारसमर्पणम् ॥१७९१॥

आरोढुं प्रथमस्य दीर्घदमनं प्रक्रमस्याङ्घ्रिणा नो संत्यज्यत एव पादकटको यावद्द्वितीयोऽखिलः ।
वाहस्यासनरक्षिणः कलयतो भारावतारासुखान्यारोहेण परेण तावदसहाधिष्ठीयते पृष्ठभूः ॥१७९२॥

एवमेव क्षपामात्रं राज्ये निःशत्रुतां गते । शोकमूको नृपस्याभं प्राविशल्लेखहारकः ॥१७९३॥

पृष्टः सभ्यैः स संभ्रान्तैर्यस्मिन्नेवाह्नि भूपतेः । यातो भिक्षाचरः शान्तिमरातिर्दत्तदुःस्थितिः ॥१७९४॥

भ्रातरौ लोहरगिरौ बद्धौ हैमातुरौ पुरा । न्यस्तौ सुस्सलभूपेन यौ तौ सल्हणलोठनौ ॥१७९५॥ 1795

ज्येष्ठे मृते कोट्टभृत्यैः कनिष्ठं लोठनं हठात् । तमिहाद्य त्रियामायामभिषिक्तमभाषत ॥१७९६॥

मृतभ्रातृसुतैर्दृप्तै राज्यार्हैः सह पञ्चभिः । निर्यातं बन्धनादूचे कोशेषु स तमीश्वरम् ॥१७९७॥

दूतेन मुखेराकन्देऽप्रसारितभुजः पतेत् । स्वप्याहितो निःस्पन्दस्तक्षं गच्छेदथ ध्रुवम् ॥१७९८॥

दीर्घदीःस्वप्नशमक्षिप्रमृदूकृतमना नृपः । असौ तत्कालनिपतद्वार्तावज्रचूर्णितः ॥१७९९॥

इति संभाव्य दिक्पालैरपि साकूतमीक्षितः । नाकाराचारचेष्टाभिः प्रागवस्थां जहौ नृपः ॥१८००॥ 1800

न ह्यनन्याभिभूतेन सर्वतोऽसत्त्ववर्तिना । तादृशा वैशसेनान्यः सृष्टपूर्वो हि भूपतिः ॥१८०१॥

पित्रास्य यद्गुलाप्तं राज्यं भूयः प्रसाधितम् । अनेनापि हताराति विहितं पैतृकं पदम् ॥१८०२॥

हारितौ दुर्गकोट्टौ[1] तौ नष्टनामापि दारकः । दायादशेषो यत्रैको निर्धनो वीतबान्धवः ॥१८०३॥

धनमानान्तकृद्भूरिवर्षान्व्यसनमादधे । उपप्लवमिषे देशे तत्रैकस्मिन्हतेऽहिते ॥१८०४॥

भिन्नदुर्गार्थसंपन्नाः प्रोद्भूताः चक्रिरोधिनः । भिन्नप्रकृतिकं कोशशून्यमेतच्च[1] मण्डलम् ॥१८०५॥ 1805

तादृक्कृच्छ्रनिस्तीर्णमाहात्म्यस्य महीपतेः । धैर्येण स्पर्धितुं जाने राघवोऽपि सलाघवः ॥१८०६॥

प्राक्प्रेषितं हि साम्राज्यदाने निर्वासने च तम् । तुल्यानुभावमस्मार्षीत्स्थितैवं गणयन्गुणान् ॥१८०७॥

आहूतस्याभिषेकाय विसृष्टस्य वनाय वा । न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः ॥१८०८॥

कान्तेषु काननान्तेषु सकान्तं सानुजं च तम् । भूयः श्रियं प्रतिभुज्य स्थातुं सावधि लोभयात् ॥१८०९॥

एकक्षणानुभूतेऽस्मिन्संघट्टे सुखदुःखयोः । ईदृक्सदृशाभेदादनयोरन्तरं महत् ॥१८१०॥ 1810

नियतं निरुपादानां शक्तिं दर्शयितुं जने । नानोपकरणग्रामं संनह्योऽस्याच्छिनद्विधिः ॥१८११॥

---

१७८८. [1]) च omitted in A; supplemented with C.—[2]) Emended with C; A °वान्वयौ. १७९०, [1]) Thus corr. by A₁ from °सैरस्य चिरं. १७९२. [1]) Emended; A दीर्घमदम°. १७९५. [1]) Emended; A सुल्हण°. १८०३. [1]) A °कोट्टौ. १८०५. [1]) Emended; A °भेतं च.

अत्यद्भुतानि कृत्यानि वक्ष्यमाणानि भूपतेः । कोऽमुष्य बहु मन्येत सामर्थ्ये सति संपदाम् ॥१८१२॥
धैर्याब्धिना कार्यशेषं ज्ञातुं राज्ञा सविस्तरम् । पृष्टोऽथ कोट्टवृत्तान्तमाचख्यौ लेखहारकः ॥१८१३॥
उत्सृज्य भागिकं कोट्टं प्रयाते मण्डलेश्वरः । लुब्धोयोगीभवद्भूतौ प्रेमा संपत्प्रमत्तधीः ॥१८१४॥
1815 मण्डनाभ्यवहारस्त्रीभोगैकाग्रो मदोन्मना । स वृत्त्या भृत्यवैमुख्याधाय्याभव्यं व्यवाहरत् ॥१८१५॥
कुल्यानुकम्पिना दृष्टद्युत्पाटनादेः स वारितः । देवेनेनं नादाद्बद्धानां कांचिद्रक्षाक्षमां क्रियाम् ॥१८१६॥
मायाभ्युदयनो नाम कायस्थः स्थूलवाञ्छितः । माणिक्यश्च प्रतीहारो बद्धमूलस्य मन्त्रिणः ॥१८१७॥
पुत्रौ भीमाकरस्येन्द्राकरश्चाभ्यन्तरे समम् । बुभुक्षवस्तत्र तत्र वधं प्रेम्णो व्यचिन्तयन् ॥१८१८॥
अलब्धौ हन्तुमप्राप्तावसरैस्तैः कदाचन । कोट्टादट्टालिकां कार्यवशादवरुरोह सः ॥१८१९॥
1820 कश्मीरेभ्यो नृपेणाल्पावशेषप्राणवृत्तिना । प्रैषि शासनमेतादृगिति प्रत्ययसिद्धये ॥१८२०॥
कोट्टौकसामशेषाणां गूढलेखान्विधाय ते । निबद्धसंविदः पूर्वमभिषेक्ष्यस्य भार्यया ॥१८२१॥
दृष्ट्वा दुर्गान्निर्निगडं कृत्वा च निशि लोठनम् । सिंहराजस्वामिविष्णुप्रासादायेभ्यषेचयन् ॥१८२२॥ तिलकम् ॥
शारदाख्या वधूरेका कापि सुस्सलभूपतेः । तत्र स्थिताभवत्क्षुद्रा तेषामनुमतप्रदा ॥१८२३॥
मदर्पितैरयोयन्त्रभञ्जनैरर्गलानि ते । कोशाग्निवार्य पर्याप्तं कोशारक्षादि जह्रिरे ॥१८२४॥
1825 सभृत्यैः सप्तभिस्तस्तत्साहसं सुमहत्कृतम् । दानेन त्याजिता या सा चण्डालैः प्रतिकूलता ॥१८२५॥
भेरीतूर्यादिनिर्घोषैर्नाभिज्ञाः कोट्टवासिनः । कृता राजोचिताकल्पमपश्यन्नथ लोठनम् ॥१८२६॥
अदृष्टपूर्वतादृक्षोदात्तवेषः स विस्मयम् । निन्ये जनान्नृपामात्ययोगो दीपैः प्रकाशितः ॥१८२७॥
प्रेम्णः पार्श्वस्थितस्ताभ्यामानयेहारकोन्तिकम् । ससैन्यौ स्वभुजश्चर्मपासिकाख्यौ च ठक्कुरौ ॥१८२८॥
सदास्थयाहितास्कन्दभङ्गस्तेषामशोषनः । रात्रिशेषश्च चन्द्रांशुस्पर्शपाण्डुरशीर्यत ॥१८२९॥
1830 प्रातः प्रेमाथ दुर्वार्ताभ्रणेनोष्णदारुणः । संताप्यमानश्चोष्णांशुकरै रोद्धुमुपाययौ ॥१८३०॥
तं प्रतोलीतलप्राप्तं निर्यातैर्वैरिसैनिकैः । पराङ्मुखीकृतं वीक्ष्य चलितोऽस्म्यन्तिकं प्रभोः ॥१८३१॥
भुक्त्वेति भूभृत्त्वरया लुञ्छं लोहरमन्त्रिणम् । विससर्जोदयद्वारपतिमानन्दवर्धनम् ॥१८३२॥
भूमिज्ञौ तौ हि कोट्टस्य विवेदानन्यदेशजौ । सोल्पावस्कन्दिरन्ध्राणां लक्ष्यग्रहणक्षमौ ॥१८३३॥
प्रविश्याथ पुरं दृष्ट्वा प्रीतिदायार्थिभिः शिरः । भ्राम्यमाणं भटैर्भिक्षोराक्षिप्यैतानदाहयत् ॥१८३४॥
1835 राजादेशादसंरुद्धैः स्त्रीभुविष्टैरसौ जनैः । नग्ना पैतामहे देशे दह्यमानोऽन्वशोच्यत ॥१८३५॥
काले भीष्मोदयोद्रिक्तभानौ सुविषमे नृपः । सिद्धिमप्रधानोऽपि प्रहिणोति स्म रिल्हणम् ॥१८३६॥
स शौर्यस्वामिभक्त्यर्थनैस्पृह्यादिगुणोज्ज्वलः । तेन ह्यमोघप्रारम्भः समभावि जिगीषुणा ॥१८३७॥
भवितव्यतया हन्तव्यामोहः प्रेरितोऽथ वा । शत्रामात्यैरभूद्भूस्त व्यक्तायुक्तमन्त्रितः ॥१८३८॥
हीनोऽर्थदुर्गमात्स्थैर्यान्निर्वैक्लव्यस्य वैरिणः । अनुमेने कृतारम्भीन्भृत्यान्भीष्मोल्बणे क्षणे ॥१८३९॥
1840 उदयः कम्पनाधीशो राज्ञोमे पर्याशिष्यत । सर्वामात्याः प्रतीहारमन्वगच्छन्पुनः परे ॥१८४०॥

---

१८१३. [1]) A कोड°. १८१६. [1]) Emended with C; A दृष्टद्युत्पाटन°.—[2]) Emended with C; A देवेनादाद्ध° with haplography. १८१८. [1]) Emended; A °चिन्तयत् १८२२. [1]) Emended; A °वेचयत् —[2]) A, ३. १८२५. [1]) Emendation doubtful; A °साहसा. १८३०. [1]) Emended with C; A चोष्ण°.

राजात्मजहयारोहडामरामात्यनिर्भया । दैव्यै तत्सेनयावापि सर्वसामभ्युदग्रया ॥१८४१॥
क्वचिद्ध्वजहलिकानिविष्टकटको दिशः । संमर्दितुं प्रवृते सर्वोपायैर्निरोधिनः ॥१८४२॥
लुण्ठाद्यः फुल्लपुरे कोट्टोपान्ताश्रये स्थिताः । भयभेदाद्दवन्यमाम्रकम्पमनयन्निपून् ॥१८४३॥
यस्सल्लक्ष्मापतिर्बद्धे लोठने तत्सुतामदात् । यस्मै माक्षद्मलेखाख्यां बहुस्थलधराभुजे ॥१८४४॥
साहायकाय प्राप्तस्य तस्य सैन्यैर्द्विषच्चमूः । भूराभिधस्य युद्धेषु भस्यमाहि प्रतिक्षणम् ॥१८४५॥ 1845
तेषूपद्रुद्राष्ट्रेषु भयदोलायमानधीः । भङ्गीचक्रे नरपतेर्नीतिं दण्डं च लोठनः ॥१८४६॥
एतावत्सिद्धमफलारब्धीनामत्र दुःसहे । काले व्यावृत्तिरस्माकमुचितास्मिन्नलाघवा ॥१८४७॥
शारदारम्भसुभगे क्रमात्काले बलोर्जिताः । अथारब्धं विधास्यामः सर्वारम्भेण शोभनाम् ॥१८४८॥
इत्यन्वहं लक्ष्मकेण महितं नादधे नृपः । अन्ये च मन्त्रिणो मन्त्रं शास्त्रादभ्यर्णवर्तिनः ॥१८४९॥ तिलकम् ॥
सर्वाधिकार्युदयनः प्रतिश्रुत्य धनं बहु । साहाय्यकार्थमानिन्ये सोमपालमपि प्रभोः ॥१८५०॥ 1850
अपाङ्क्तेयः स संबन्धबद्धोऽपि धनलुब्धधीः । बुद्ध्यति स्म महाभ्यापन्निमग्नाय महीभुजे ॥१८५१॥
बद्धर्थदो लोठनश्चेत्किं मे संबन्ध्यपेक्षया । अन्यथा भवतामस्मीत्यन्यांन्वक्ष्यामि कैतवात् ॥१८५२॥
दम्भमित्यभिसंधाय सोमपालोऽभ्युपाययौ । समर्थने हेतुरासीत्सुज्जेर्भ्राजे कियानपि ॥१८५३॥ युग्मम् ॥
स हि भिक्षाचरोन्मुख्यान्निर्वार्यानायितो यदा । सोमपालमुखेनोर्वीभुजा राजविसर्जितः ॥१८५४॥
दूतः प्रार्थयमानस्य तस्यार्थान्प्राक्प्रतिश्रुतान् । क्षणिकस्यैकसमर्गेभ्यः प्रदातुमनुबध्नतः ॥१८५५॥ 1855
तदा भिक्षाचरं जानन्हतकल्पमनेन नः । व्यसनप्रशमे कोऽर्थ इत्यवज्ञां प्रकाशयन् ॥१८५६॥
मदेन न ददौ किंचित्सोऽथ भिक्षाचरं हतम् । श्रुत्वा निरुपयोगं स्वं राज्ञो ज्ञात्वा सशोकताम् ॥१८५७॥
यावदेकाहमप्यज्ञाद्दूरव्यसने भयम् । तावन्निशम्य संप्राप्तोत्सेकोऽभूदपि मन्युभाक् ॥१८५८॥
लोठनं बद्धसंधिं वः करिष्यामीति भूभुजः । उक्त्वा दूतं लोठनेन दापयिष्यामि काञ्चनम् ॥१८५९॥
युष्मभ्यं कथयित्वेति सोमपालं चिकीर्षितुम् । बलितामबलत्वं च सर्वेषां स्वार्थसिद्धये ॥१८६०॥ 1860
समं सोमेन तत्सैन्यमध्यप्रस्थितस्यलक्षितैः । मितैरनुगतो भृत्यैर्घोरमूलकमासदत् ॥१८६१॥ कुलकम् ॥
यहानौचित्यदुष्पांसुवर्षदूषितकीर्तिना । भोगलुब्धतया तेन हता चिततसत्त्वता ॥१८६२॥
तुषारशर्कराभुक्तजलपानादवुर्जरम् । त्यक्तुं भोज्यं मृदु स्निग्धं काश्मीरं न शशाक सः ॥१८६३॥
सतुषं शुष्कसक्त्वादि बहिर्भोक्तुमपारयन् । यैस्तैरुपायैः कश्मीरान्प्रविविक्षुरतोऽभवत् ॥१८६४॥
काश्मीरकाः कार्यशेषमदृष्ट्वा ग्रीष्मशोषिताः । आकर्ण्य च तदापातमाकुलत्वमशिश्रियन् ॥१८६५॥ 1865
भुञ्जानैर्भृष्टमांसानि पिबद्भिः पुष्पगन्धि च । ग्रनीहारागतो हारि मार्द्वीकं लघु शीतलम् ॥१८६६॥
आनेष्यामो जवात्सुज्जिमाकृष्य श्मश्रु संयुगे । इत्थं विकत्थनैस्तैस्तैराहोपुरुषिकाः कृताः ॥१८६७॥
काश्मीरकैर्मितैर्युक्तं खशैः सैन्धवकैरपि । अभिषेणयितुं शेकुर्न तेस्युंश्यमिनोऽपि तम् ॥१८६८॥
आतृव्याय च मुक्ताय भूभुजां च करार्पणम् । विदध्वां जयसिंहाय वरमित्यभिमानिनाम् ॥१८६९॥

१८४१. [1]) Emended with C; A सर्वे. १८४२. [1]) Emended, A सर्वोपायावि°. १८४४. [1]) Emended; A °वैज्जु. १८४७. [1]) Emended; A °लापव; C °लाघव.. १८४९. [1]) Emended, A प्रत्य°.—[2]) A, ३. १८५२. [1]) Emended with C; A °स्मीत्यान्य°, with haplography. १८५३. [1]) A, २ १८५५. [1]) Emended; A °मानस्यार्थान्प्रा°, omitting two *aksharas*; C °मानस्य तानर्थान्प्र°. १८६१. [1]) Emended; A °मध्यप्र°. १८६५. [1]) Emended; A °शिश्रयन्. १८६६. [1]) A पिबद्भि. १८६८. [1]) Emended; A सैन्धवा°.

1870 बह्वर्थमर्थ्यमानेन लोठनेन तिरस्कृतः । सोमपालः प्रियं किंचिद्राजपक्षे न्यदर्शयत् ॥१८७०॥
मयि श्वशुरसैन्यानां व्यग्राणां वैरिविग्रहे । सज्जे हिताय त्वं रन्ध्रमन्विष्यसि किमाश्रितः ॥१८७१॥
इति निर्भर्त्सितस्तेन सुज्जिः स्वाहंक्रियोचितः । सर्वानुल्लङ्घ्य संनद्धो राजसैन्यमहेऽभवत् ॥१८७२॥
अरडांबाडसंजातशीतज्वरमहाभयः । वरूथिनीमथोत्थाप्य विदद्रौ निशि लक्ष्मकः ॥१८७३॥
विसृष्टदूताः कटकं नष्टं वक्तुं प्रभोर्द्रुतम् । केचिदन्वसरन्सुज्जिं सैनिकास्ते जिघांसवः ॥१८७४॥
1875 पारेणैकेन भूपालसैन्यमन्येन वैरिणः । वर्त्मनः श्वभ्रदुर्गस्य तुल्यमेव प्रतस्थिरे ॥१८७५॥
शारम्बरपथं वैरिद्वयं त्यक्त्वा यियासवः । स्वोर्वीं कालेनकाख्येन संकटेन तदन्तिके ॥१८७६॥
तस्मिन्नहन्यस्खलिता वनिकावासनामनि । ग्रामे सैन्या न्यविक्षन्त लोकैरुच्चावचैः समम् ॥१८७७॥युग्मम्॥
अनुप्रस्थायिनोऽभ्यर्णग्रामकेष्वपि बुभुजुः । भुक्त्वा पीत्वाथ ते निन्युर्निशार्धमकुतोभयाः ॥१८७८॥
अथापातं विद्विषद्भिः स्वस्य भावयितुं द्रुतम् । क्षोभभृत्सुज्जिरभ्येत्य तूर्यघोषमकारयत् ॥१८७९॥
1880 क्षणदाशेष एवाशु पलायां चक्रिरे ततः । तैस्तैः शैलपथैः सेना निरवष्टम्भनायकाः ॥१८८०॥
छिन्नाम्बराणि मुष्णद्भिः प्राक्षेत्यज्यन्त मन्त्रिणः । भूप्रकम्पैर्गण्डशैला नानाधातुद्रवैरिव ॥१८८१॥
लुण्ठ्यमानाश्च मूल्यानु नादधे कश्चिदायुधम् । तदा तु येन वा तेन स्वात्मा नान्यस्तु रक्षितः ॥१८८२॥
उत्प्लुत्य लङ्घयन्तोऽद्रीन्केऽपि शोणाधरांशुकाः । रक्तस्फिजो गतौ प्रापुर्मर्कटा इव पाटवम् ॥१८८३॥
केऽप्यम्बरपरित्यागविकचशरीरविग्रहाः । हरितालशिलाखण्डा इव वातेरिता ययुः ॥१८८४॥
1885 भूलवेणुवनाकीर्णैः शैलैरकृशविग्रहाः । केऽपि श्वासोत्थपूत्काराः करिपोता इवाव्रजन् ॥१८८५॥
किं नामोदीरणैर्मन्त्री स नासीत्तत्र कश्चन । तिरश्चेव विपर्यस्तधैर्यैर्यैर्न पलायितम् ॥१८८६॥
भृत्यस्कन्धाधिरूढोऽथ गच्छन्मूढः प्रधावितुम् । प्रतीहारो द्विपद्योधैर्दूरात्कैश्चिद्व्यलोक्यत ॥१८८७॥
निरंशुकः स सूर्यांशुकचत्केयूरकुण्डलः । प्रतिज्ञायानुसस्रे तैः सर्वप्राणप्रधावितैः ॥१८८८॥
अश्माहतेन भृत्येन त्यक्तः स्कन्धात्पृषत्क्षतः । स निस्पन्दवपुस्तिष्ठंस्तैरग्राहि महाजवैः ॥१८८९॥
1890 नवबन्धनशोकार्तशारिकाकृशविग्रहः । स – ल्गलिरिव व्यञ्जाङ्गैः संकुचितेक्षणः ॥१८९०॥
बद्धस्य मे मानधनप्रहर्तुर्वैशसान्तरम् । इतोऽधिकं ध्रुवं सुज्जिर्विदध्यादिति चिन्तयन् ॥१८९१॥
स्कन्धेऽधिरोप्य निःशेषीकृतप्राकारभूषणः । नदद्भिः सोपहासं तैः सुज्जेरग्रं व्यनीयत ॥१८९२॥ तिलकम्॥
प्रच्छाद्य सत्त्वधान्यक्तं सोंऽशुकेनैव नोर्जितः । बृहद्राज इवेत्युक्त्वा तस्मै स्वान्यंशुकान्यदात् ॥१८९३॥
प्रावारिताम्बरं कृत्वा हयारूढं च तं पुनः । धैर्येणायोजयत्स्निग्धैर्वचोभिः परिसान्त्वयन् ॥१८९४॥
1895 निर्लुण्ठिततुरंगासिकोशैः परिवृतः खशैः । ततो गृहीत्वा तं श्रीमान्सोमपालान्तिकं ययौ ॥१८९५॥
इमा व्योमाङ्गनाक्रीडत्तडित्तरलविभ्रमाः । भाग्यमेवानुयायिन्यः स्थायिन्यः कस्य संपदः ॥१८९६॥
आराधनधिया स्वैरं यस्याग्रेऽभोजि भृत्यवत् । गात्राणि कुङ्कुमालेपैरुपावर्त्यन्त च स्वयम् ॥१८९७॥

---

१८७३. 1) Emended; A अरडा°. १८७६. 1) नका written by $A_3$ in space left by $A_1$. १८७७. 1) Emended; A न्यविक्षन्त.—2) $A_1$ २. १८८१. 1) Emended with C; A मानानुधानु°. १८८२. 1) Conjectural reading; A स्वात्मनान्यस्तु. १८८६. 1) Emended; A तिरश्चैवं. १८८७. 1) A °स्कन्धा°.—2) Thus corr. by $A_1$ from प्रधावितुम्. १८९०. 1) A °कृशवि°.—2) Thus A without indicating the *lacuna*; perhaps read गल्गलिरिव.—3) Thus $A_1$, apparently corr. from व्यञ्जुम्भितः; doubtful. १८९२. 1) $A_1$ ३. १८९७. 1) Emended with C; A °रुपवर्त्यन्त.

सोमपालादिभिः भट्टैः स मासैरेव पञ्चषैः । तेषामपे तथाभूतस्तिलकक्षोकैरभाव्यत ॥१८९८॥

वृद्धोपि पलितश्वेतोपान्तश्यामाननः परैः । बलीका इव बद्धोमूच्छोकमूको वनान्तरे ॥१८९९॥

अर्पितं सुज्जिना सोमपालः स्वीकृत्य लक्ष्मकम् । आगच्छन्गृहीतात्कश्मीरान्निजराष्ट्रं न्यवर्तत ॥१९००॥ 1900

लोठनस्यान्तिकादेत्य स भूरैर्माजिकादिभिः । प्रतिभुव्य प्रभूतार्थैः प्रतीहारमबाध्यत ॥१९०१॥

कश्मीरा हि प्रतीहारशिक्षापक्षानुयायिभिः । तदा न कैरमन्यन्त संप्राप्ता डामरान्वजैः ॥१९०२॥

लुब्धेनापि प्रतीहारावर्तं राष्ट्रं जिघृक्षुणा । भूरि चादित्सुना वित्तं राज्ञोकारि न तेन तत् ॥१९०३॥

भ्रममाणेष्वमात्येषु ग्रामेषु नगरं नृपः । हारिते च प्रतीहारे न धैर्यात्पर्यहीयत ॥१९०४॥

यैः सैन्यसारैर्हैराज्यं पुरा भिक्षाचरोकरोत् । येषाम्युत्कुपिते राष्ट्रे वृत्त्यार्थितेह सुस्सलः ॥१९०५॥ 1905

भूभृता संगृहीतानां शीतज्वररुजा ततः । तेषां दश सहस्राणि योधानां निधनं ययुः ॥१९०६॥

विरराम तदा देशे न मुहूर्तमपि क्वचित् । बान्धवाक्रन्दतुमुलं प्रेतवाद्यमहर्निशम् ॥१९०७॥

घोरघर्मघृणिभ्रान्ताशेषव्यवहृतिस्थितिः । सोनुत्साहहतः कालो नष्टराज्य इवाभवत् ॥१९०८॥

नानादिगन्तरायातैः प्राप्तैः काश्मीरकैरपि । लोहरेथ प्रवृद्धर्द्धि राजद्वारमजायत ॥१९०९॥

काकतालीयसंप्राप्तलोकोत्तरनृपश्रियः । अकुण्ठा लोठनस्यासीत्स्फूर्तिर्वित्तपतेरिव ॥१९१०॥ 1910

तस्याकारपरिक्लेशवैशसाभिन्नवृत्तयः । भोगेष्वबाधा भ्रातृव्यभृत्यपुत्रादयोभवन् ॥१९११॥

नास्थानवर्षी स्थाने वा बद्धमुष्टिर्विभूतिमान् । स वचःपाकनिष्कर्मव्यवहारो व्यभाव्यत ॥१९१२॥

छाया निरङ्कुशमतिः स्वयमातपस्तु छायान्वितः शतश एव निजप्रसङ्गम् ।
दुःखं सुखेन पृथगेवमनन्तदुःखपीडानुबेधविधुरा तु सुखस्य वृत्तिः ॥१९१३॥

तादृगभ्युदयावाप्तेर्मासे न्यूनेधिके गते । एकसूनोः सुतो दिल्हो लोठनस्य व्यपद्यत ॥१९१४॥

तमेकपुत्रा शोचन्ती शोकशङ्कुहताशया । ततः प्रपेदे प्रलयं मल्ला लोठनवल्लभा ॥१९१५॥ 1915

पत्न्यामभिन्नभावायां गुणज्येष्ठे तथात्मजे । विपन्ने स तया लक्ष्म्या न कृत्यं किंचिदैक्षत ॥१९१६॥

निःस्नेहत्वस्य भूपालस्तुलभस्य विजृम्भितम् । मोहनी या श्रियः शक्तिर्यद्दशासीत्पुनः सुखम् ॥१९१७॥

अकारयन्निर्धनोपि तथा वृद्धस्य कालवित् । लक्षैः षट्त्रिंशता मोक्षं लक्ष्मकस्य क्षमापतिः ॥१९१८॥

दिष्टवृद्धिपरिक्षिप्तपुष्पवृष्टी जनैः पथि । तस्मिन्प्राप्ते न कोशासीत्प्राज्ञा प्रस्याहृतां श्रियम् ॥१९१९॥

स लक्ष्मीमहिमक्षिप्तविस्मृताभिभवप्रथः । प्रभवन्पुनरेवासीन्निग्रहानुग्रहक्षमः ॥१९२०॥ 1920

धनप्रलोभनिर्नष्टसर्वावष्टम्भपाटवः । सुज्जिः साचिव्यमव्याजं भेजे लोठनभूपतेः ॥१९२१॥

वत्सवान्भागिकस्तावद्विश्वासमपाहरत् । स तस्याद्यप्रियापायदुःस्थितिव्यथया समम् ॥१९२२॥

अभ्यर्थ्य पार्थिवं पद्मरथं चानीतवान्कृती । तस्य सोमलदेव्याख्यामुद्वाहाय तदात्मजाम् ॥१९२३॥

एवं प्रधानसंबन्धैर्बद्धमूलं विधाय तम् । सोव्याहतस्य साचिव्यमहंस्यानृण्यमाययौ ॥१९२४॥

अचिन्तयच्च कश्मीरप्रवेशं डामरादिभिः । बहुशः प्रार्थ्यमानेन प्रेरितो नवभूभुजा ॥१९२५॥ 1925

इत्थंभूतं कृतैक्यं च समं सीमान्तभूमिपैः । अथ छलयितुं शत्रुं नीतिं प्रायुङ्क्त सौस्सलिः ॥१९२६॥

---

१९०३. [1]) Emended, A. लब्धेन. १९२१. [1]) च omitted in A; supplied with C.

तत्रोदयद्वारपतिस्तस्यारम्भे गभीरधीः । अलुप्तसत्त्वः स्तुत्यत्वं सारेतरविदामगात् ॥१९२७॥
तत्रत्यः स हि निर्व्यूढसर्वस्वोऽप्यर्थितोऽहितैः । दानमानादिभिः स्वामिकृत्ये निस्त्रोषितोऽभवत्[1] ॥१९२८॥
वनप्रस्थाभिधे स्थाने लोहराद्दूरगे स्थितः । अखिन्नोऽच्छिन्नसंग्रामैर्भेदं निन्ये द्विषद्बलम् ॥१९२९॥
1930 कदाचित्ताभिप्रायेऽस्मिन्मिथ्या तथ्येन वा दधुः । भयं लोठनभूपालान्माञ्जिकेन्दारकादयः[1] ॥१९३०॥
हन्तव्यांश्चाक्रिकानस्मात्सुज्जी न्यस्ताशयो[1] नृपः । वेत्ति तत्प्रेरणेनासौ तदाशङ्क्यतेति ते ॥१९३१॥
संजाते सहजाख्यायां राज्ञ्यां सुस्सलभूपतेः । कुर्मो मल्लार्जुनं भूपं लोहरेऽस्मिन्हिताय वः ॥१९३२॥
तत्प्रेमाणमिवाकस्मादभिसंधत्त लोठनम् । संदिदेशाथ तान्धीमाञ्जयसिंहो महीपतिः ॥१९३३॥
व्याजेन राज्ञा संदिष्टं तत्कोट्टं स्वीचिकीर्षुणा । प्रतिश्रुतमविश्वस्तैस्तस्मिंस्तैश्च तथैव तत् ॥१९३४॥
1935 मल्लार्जुनं लोठनोऽथ ज्ञात्वा प्रारब्धचाक्रिकम् । तदाप्तान्भ्रातृसूनुंस्ताश्चाक्रिकानप्यबन्धयत् ॥१९३५॥
अवरुद्धात्तनूजेन[1] शङ्कां सौस्सलिना भजन् । परं विग्रहराजेन प्रातिहार्यमजिग्रहत् ॥१९३६॥
राजा व्याजात्पितृव्येण बद्धसंधिरुपायवित् । तत्वरे हारितं राज्यं तैस्तैः स्वीकर्तुमुद्यमैः ॥१९३७॥
विसृज्य शूरं निष्कम्पराज्यः सुज्जेः परिभ्रमात् । मासान्कांश्चिदसंक्षोभो वृत्त्यावर्तिष्ट लोठनः ॥१९३८॥
सुज्जिः पद्मरथापत्यं प्राक्कन्यामानिनाय याम् । अनूढाया विवाहाय तस्यां[1] मातरमागताम् ॥१९३९॥
1940 आकर्ण्य तेजलादीनां[1] प्रसङ्गेऽस्मिन्सगौरवाम् । सामात्यो[2] दर्पितपुरं कृतप्रत्युद्गता ययौ ॥१९४०॥
माञ्जिकाद्यैरथ प्राप्तरन्ध्रैर्निर्गत्य बन्धनात् । मल्लार्जुनः कोट्टराज्ये[1] संहतैरभ्यषिच्यत ॥१९४१॥
ठक्कुरैः प्राग्वदानीतैः प्रतोलीतलमागतान् । भृत्यांस्ते सिंहभूभर्तुः प्रविविक्षून्न्यवारयन्[1] ॥१९४२॥
षष्ठेऽब्दे लोठनः शुक्लत्रयोदश्यां स फाल्गुने[1] । यथायुज्यत राज्येन तथैवाशु व्ययुज्यत ॥१९४३॥
अनूढां कन्यकां मूढः संपदं चाप्यधीकृताम् । प्राप्तां परस्य भोग्यत्वं भाग्यहीनः शुशोच सः ॥१९४४॥
1945 अटिल्लाहालिकादिभ्यो[1] देशेभ्यो नष्टशक्तिना । तेन सुज्जिबलात्कोशशेषः कश्चिदवाप्यत ॥१९४५॥
पूर्वाहूतान्सिंहभूभृद्भृत्यान्न्यक्कृत्य माञ्जिकः । निनायाप्रतिमल्लत्वं मल्लार्जुनमहीभुजम् ॥१९४६॥
तेनातिव्ययिना नव्यवयसा भूभुजा कृतम् । मौक्तिकैः पूगविच्छेदे ताम्बूलार्पणमेकदा ॥१९४७॥
वर्धतो विषयैस्तुल्याद्राटके कुट्टनादिषु । त्यागित्वं तस्य तत्त्वज्ञैः सदोषमुदघोष्यत ॥१९४८॥
प्रजोपतापोपचितः कोशः सुस्सलभूपतेः । तेनातिव्ययिना स्वैरमनुरूपव्ययः कृतः ॥१९४९॥
1950 गणिकाचारणद्रोग्धृविटचेटादिपेटकम् । साधून्विधूय सोऽपुष्णाद्दर्पोष्मा[1] कुमतिर्यतः[2] ॥१९५०॥
सपत्नसाद्धितसाद्यदि वा वह्निसाद्भवेत् । द्रविणं क्षोणिपालानां जनतोपद्रवार्जितम् ॥१९५१॥
प्रजापीडनजं वित्तं जयापीडमहीभुजः । दास्याः पुत्रैरुत्पलाद्यैर्विलुप्तं नमुरन्तकैः[1] ॥१९५२॥
लोकसंक्लेशनोद्भूतः कोशः शंकरवर्मणः । प्रभाकरादिभिः स्वैरं जायाजारैरभुज्यत ॥१९५३॥

---

१९२८. 1) Thus A; perhaps read निस्त्रोषितो°. १९३०. 1) Thus corr. by $A_1$ from °केन्द्राकादयः. Perhaps read °केन्द्राकरा°; cf. viii. 1818. १९३१. 1) Emended with C; A °सन्धात्त. १९३६. 1) Emended; A अवरुद्धतनू°. १९३९. 1) Emended with C; A तस्य. १९४०. 1) Thus A; doubtful.—2) Doubtful emendation; A सामात्यो. १९४१. 1) Emended; A कोट्टराज्ये. १९४२. 1) Emended A °वारयत्. १९४३. 1) A फाल्गुने. १९४५. 1) Thus $A_1$; $A_2$ °ल्लाटिकिका°; cf. viii. 581. १९५०. 1) Thus $A_1$ in margin; in text °ष्मादुर्मौक्त्यः.—2) Thus corr. by $A_1$ from कुपति°. १९५२. 1) Emended with C; $A_1$ नमुरसकैः; the reading नमुर्नर्तकैः, given by $A_2$ in margin, has been struck out.

अनङ्गवशगाः पङ्गोरङ्गना वृजिनार्जितम् । ददुः सुगन्धादित्याय धनं संभोगभागिने ॥१९५४॥
राज्ञो यशस्करस्यार्थान्स्वयीचक्रेतिसंचितान् । अङ्गनानङ्गवैवश्यादालिङ्गितजनंगमा ॥१९५५॥ 1955
दुर्वैरागार्जितं पार्वगुप्तिः प्राप्य धनं मृतः । दाता आर्वीपपत्येन तुङ्गादीनामजायत ॥१९५६॥
संग्रामराजः श्रीलेखामुखाश्मश्रुपैर्धनी । मुषितो व्यङ्गसुहार्थैर्निषिद्धोपार्जनस्पृहः ॥१९५७॥
अपत्यवेक्षाक्षपितप्रजस्य जगदूर्जिता । अन्तेनन्तमहीभर्तुर्विभूतिर्भस्मसादभूत् ॥१९५८॥
पुत्रेणापात्रसाद्भार्या जारसात्तरसा कृतः । कुकलाकौशलोद्भूतः कोशः कलशभूपतेः ॥१९५९॥
सह गेहैः समं स्त्रीभिः सवा पुत्रैरभूद्धनम् । अभ्रान्तार्जनतर्षस्य हर्षदेवस्य वह्निसात् ॥१९६०॥ 1960
चन्द्रापीडोच्चलावन्तिवर्मार्थैर्धर्मनिष्ठुरैः । निष्ठा न्याय्यस्य कोशस्य नावाप्यनुचिता क्वचित् ॥१९६१॥
चौरचाक्रिकसीमान्तभूभृद्देश्याविटादयः । लुण्ठिं प्रारेभिरे पुष्टां नवे मल्लार्जुनोदये ॥१९६२॥
वञ्चयित्वाप्यरीन्भूभृत्साम्यन्त्रिघटितेप्सितः । अथ चित्ररथं तूर्णमास्कन्दाय व्यसर्जयत् ॥१९६३॥
द्वारपादामयोस्तुल्याधीकारेण प्रवर्धितः । सोनन्तसामन्तसुतः पदं फुल्लपुरे व्यधात् ॥१९६४॥
उत्सेहिरे न चितता अपि दुर्गसमाश्रयात् । मल्लार्जुनचमूर्जन्ये जेतुं तदनुजीविनः ॥१९६५॥ 1965
भेदाय कोट्टमारूढस्तद्भृत्यो राजसंमतः । मल्लार्जुनानुगै रात्रौ हतः संवर्धनाभिधः ॥१९६६॥
युद्धासाध्येपि तिष्ठन्तः कोट्टे भयविधेयताम् । कोष्ठेश्वरेन्यगायाते तत्रामित्राः प्रपेदिरे ॥१९६७॥
प्रतिभुतकरो बद्धसंधिः स व्यसृजत्ततः । सभाजनाय जननीं तेषां मल्लार्जुनोन्तिकम् ॥१९६८॥
सा वैधव्यविविक्तेन वेषेणैश्वर्यशोभिना । कोष्ठेश्वरादीन्सोत्कण्ठांश्चक्रे चपलचेतसः ॥१९६९॥
तस्यां गृहीतविश्रम्भं व्यावृत्तायां तदन्तिकात् । द्वारेशाय ददावूरीकृतं मल्लार्जुनः करम् ॥१९७०॥ 1970
आकृष्टो राजजननीचक्षुरागेण कोष्ठकः । दिदृक्षाकपटात्कोट्टमारुरोह मितानुगः ॥१९७१॥
अर्घकेन सहितस्तेन चित्ररथस्ततः । संभृतप्राभृतो भूमिभर्तुः सविधमाययौ ॥१९७२॥
राजा तु संमन्त्र्य ततः प्रायुङ्क्ताहतिशालिना । उदयद्वारपतिना नीतिं जेतुमरीन्पुनः ॥१९७३॥
वीतास्कन्दो लोठनेपि गते पद्मरथान्तिकम् । लेभेभिनवभूपालः किंचित्पादप्रसारिकाम् ॥१९७४॥
उदूढवान्सोमलाख्यां तां पद्मरथकन्यकाम् । उपयेमे धृताचामो नागपालात्मजामपि ॥१९७५॥ 1975
तस्मादहंक्रियामूढाल्लेभिरे गूढकैतवाः । भूभुजः सोमपालाद्या भृत्यभावेन वेतनम् ॥१९७६॥
कविगायनजल्पाकबोधचारणचेष्टितैः । बहवो मुमुषुर्धूर्तास्तेपि तं राजबीजिनः ॥१९७७॥
स बाल्यास्त्रिष्परीपाकप्रज्ञो दृष्टो रटन्बहु । जज्ञे वाक्प्रौढिमात्रेण बालिशैः कुशलाशयः ॥१९७८॥
केतोरिवाभद्रहेतोः प्रदीप्तं वदनं विना । अनिष्ठुराकृतेर्दृष्टं तस्यान्यत्र न सौष्ठवम् ॥१९७९॥
अत्रान्तरे नृपः सुज्जिं संजपाद्दोप्रविक्रमम् । माभून्मल्लार्जुनेनापि भिन्नोसाविति चिन्तयन् ॥१९८०॥ 1980
निर्वासने प्रवेशे च प्रभुः सुज्जेस्ततोधिकम् । तात्कालिकीं प्रतीहारः शङ्कां कांचिददर्शयत् ॥१९८१॥
स कम्पनाद्यधीकारस्रजं राजविसर्जिताम् । वितरन्सुज्जये राजस्थानकार्यस्रजं विना ॥१९८२॥
निस्तोषाय गृहायातसोमपालानुरोधतः । प्रसीदन्वामहस्तेन निजजूटस्रजं प्रदात् ॥१९८३॥

---

१९५९ [1]) A कोष:. १९६९. [1]) Emended; A वैधव्यं वि°.—[2]) Emended; A वेषैनैश्च°. १९७२. [1]) Emended; A अर्धद्भेन.
१९७४ [1]) A चारिको.

आकृष्य पदवीं तस्य तत्स्थानपरिरोधिनः । आप्ताबसाङ्गया दृष्ट्वा वत्संपद्गीतधी व्यधात् ॥१९८४॥ कुलकम्[1]॥

1985 अर्थे हिताय सौहार्दे विधूपोदयधन्ययोः । अभजद्भिल्हणः सुज्जेः प्रवेशे प्रतिलोमताम् ॥१९८५॥

प्रत्युद्गमेन संमान्य सुज्जिं प्रावेशयन्नृपः । देशाधिरास्यङ्गन्यादीन्मानसाक्ष तु तद्गिरा ॥१९८६॥

कृतागाः क्ष्मापतौ लब्धक्षणे तीक्ष्णैर्जिघांसति । कोष्ठेश्वरः पलायिष्ट ज्ञातोदन्तस्तदन्तिकात् ॥१९८७॥

आस्कन्दायागते राज्ञि गृहीतमनुजेश्वरे । स्वपक्षभेदोपहतः सोथ देशान्तरं ययौ ॥१९८८॥

लोठनस्तु निजग्राह कांश्चिदालम्ब्य ठक्कुरान् । बप्पनीलाभिधे स्थाने वसन्मल्लार्जुनं बलात् ॥१९८९॥

1990 तत्र दृष्टमसंभाव्यमेवास्य खलु पौरुषम् । परिभ्रष्टोपि यद्रूपदं तमजयत्सदा ॥१९९०॥

जहार तुरगांश्चुण्ठिं चकाराट्टिलिकापणे । मार्गद्रङ्गादिभङ्गं च — —[1] सर्वत्र सोकरोत् ॥१९९१॥

राजराजाभिधानेन डामरेणार्थितस्ततः । कश्मीरराज्यसंप्राप्त्यै क्रमराज्यमगाहत ॥१९९२॥

तद्वेत्य समीपस्थे हते चित्ररथेन सः । तस्मिन्नुत्रन्ये प्रययौ बप्पनीलभुवं पुनः ॥१९९३॥

तस्मिन्नास्कन्दमशकद्दातुं डलिकामपि । अवरोद्धुमशक्तोभूत्कोट्टे मल्लार्जुनो वसन्[2] ॥१९९४॥

1995 भ्रातृव्येण पितृव्यस्य दापयित्वा धनं बहु । ततः कोष्ठेश्वरो यात्रासज्जः संधिं न्यबन्धयत् ॥१९९५॥

लोहरे विहितस्थैर्यौ[1] गृहीत्वा लोठनं ततः । कश्मीरोर्व्यां पपातासौ विजिघृक्षुः[2] क्ष्माभुजा ॥१९९६॥

गिरीनुल्लङ्घ्य कार्कोटद्रङ्गे विहितवान्पदम् । निपत्य मार्गेनुद्याने यावदन्यैश्च डामरैः ॥१९९७॥

नावाप योगं निर्गत्य क्षिप्रकारी क्ष्मापतिः । सर्वोद्योगेन ते तावदुत्थानोपहतं व्यधात् ॥१९९८॥

अत्रान्तरे प्रतीहारः प्रापास्तमपपीडया[1] । न संपत्स्वल्पपुण्यानामनपायित्वमायुषः ॥१९९९॥

उत्सारणप्रियतया परिबद्धसर्वद्वारं गृहे निरनुरोधतया वसन्तः ।

2000 संपत्प्रभुत्वधियोमतिघप्रवृत्तेर्धिग्जानते न रभसान्नियतेर्निपातम् ॥२०००॥

कुर्वाणोत्सारणं तस्य गृहजा सततं नृणाम् । नाज्ञासीद्दृष्टलग्नस्य पृष्ठे पतितमन्तकम् ॥२००१॥

ज्वरितः स हि निर्धूतज्वरः स्वपिति विज्वरः । विदित्वेति न विज्ञातः स्वपन्नेव मृतस्तदा ॥२००२॥

सलोठने कोष्ठकेथ प्रयाते नृपतिः पुनः । न स मल्लार्जुनो नापि कोष्ठको न स लोठनः ॥२००३॥

छद्मनोद्यतं पार्श्वस्थितं मल्लार्जुनोवधीत् । तस्मै चुक्रोध माध्यस्थ्ये स्थापितस्तेन कोष्ठकः ॥२००४॥

2005 अनुनिन्ये न तं खिन्नं स संभृतबलस्ततः । अभिषेणयितुं क्रोधादधावत्सहलोठनम् ॥२००५॥

कोष्ठको मल्लकोष्ठाद्यैर्मितैर्युक्तोपि सादिभिः । शीर्त्वा परोष्णीं तत्सेनां निर्ममाथाप्रमाथिनीम् ॥२००६॥

हतेषु तेषु संग्रामे खशसैन्धवकादिषु । वधं प्राप्तः सिंहभूभृद्देषान्न स नृपो हतः ॥२००७॥

आरूढः कोट्टमूर्धानं[1] मानमूर्धः परिच्युतः । भग्नप्रतापो भूयोपि समधत्त स कोष्ठकम् ॥२००८॥

विसृज्य लोठनं तिष्ठन्निर्वैरमगमत्पुनः । अनिर्वाहितदैवेन तेन द्वैधं स डामरः ॥२००९॥

2010 बद्धाधिकारिणः शुल्कं गृह्णताकारि राजवत् । तेन स्वनाम्ना भाण्डेषु ग्रङ्के सिन्दूरमुद्रणम्[1] ॥२०१०॥

जतुसंहतयोः काचकलशीदलयोरिव । क्षणे क्षणे संधिभङ्गस्तयोः समुदपद्यत ॥२०११॥

---

१९८४. [1]) A₁ ४. १९९१. [1]) A₁ indicates here a *lacuna* of two *aksharas*; C तदा. १९९४. [2]) Emended; A °वसम्. १९९६. [1]) Emended; A °स्थैर्यौ. — [2]) Emended with C; A °विजिगृक्षु. १९९९. [1]) Emended with C; A °हारप्रापास्तमपपीडया. २००८. [1]) Emended with C; A कोष्ठमू°. २०१०. [1]) Emended; A °मुद्रणाम्.

निर्व्यूढभिन्नैर्वार्मोस्थैर्विरागं लोहरेश्वरः । निन्ये लवन्यं सोप्येनं स्पर्धाबन्धैरनङ्कुशैः ॥२०१२॥

डामरेण ततो दत्त्वास्कन्दं तत्कटकान्तरम् । पराध्यायुधधुर्याश्वहरणात्स्व--[1]रं कृतम् ॥२०१३॥

दत्त्वा ह--[1]रायत्यां विषमैर्हठपौरुषैः । एवं तं कोष्ठको मूढः स्वोच्छेदं व्यधाद्विषाम् ॥२०१४॥

वनयादानसंबन्धाच्छ्वशुरं मुख्यमन्त्रिणाम् । अभ्यन्तरे नृपो हन्तुं माञ्जिकं स व्यचिन्तयत् ॥२०१५॥ 2015

आसीत्कठोरतारुण्यतरङ्गितमनोभवः । शुल्यर्कः स हि तन्मातुरौपपत्येन संमतः ॥२०१६॥

आहारावसरे तीक्ष्णाः कृतसंज्ञाः क्षमाभुजा । दत्तप्रहरणाः प्राणैर्भुञ्जानं तं व्ययोजयन् ॥२०१७॥

धुन्वन्नसिपटं बद्धवीरपट्टो रटन्बहु । निर्लुण्ठयन्स तत्सेनां तां तामारभटीं व्यधात् ॥२०१८॥

अवाशिष्यत न द्रोहमध्यादिन्द्राकरोप्यहो[1] । राज्ञा विषमितस्तेन रसदानेन स स्वयम् ॥२०१९॥

दैवतोत्सारितारातिस्ततः सिंहमहीपतिः । संदधे कोष्ठकं सुज्जि प्राहिणोद्विजयाय च ॥२०२०॥ 2020

मार्गस्य याममात्रेण गम्यस्यान्तिकमाप सः । यावत्तुरंगहरणात्कोष्ठकेनाकुलीकृतः ॥२०२१॥

अन्तर्भेदाकुलस्तावत्तत्र्यवस्थातुमक्षमः । गृहीतकोशः संत्यज्य कोट्टं[1] मल्लार्जुनो ययौ ॥२०२२॥

राज्यभ्रष्टः स निर्लुण्ठ्यमानो मार्गेषु तस्करैः । अवनाहोन्मुखो रक्षन्कोशशेषं कथंचन ॥२०२३॥

भ्रष्टमष्टादशशरदे[1]ऽयथाष्टमवत्सरे । राज्यात्तेन द्वितीयस्यां वैशाखस्यासि[2]तेहनि ॥२०२४॥

दाता शिखामृतरुचेरमृतं विलब्ध--[1]ण्यकृत्समिति लूनशिराः कृतश्च ।
ईशेन यत्र तदकार्युपकर्तुरस्तु तत्रापरः क इव संनिहितद्विजिह्वः ॥२०२५॥ 2025

मुक्ता इमा इति जलं नलिनेषु लीनं ज्ञातृत्वमेतदिति जाड्यमिनेषु लग्नम् ।
यज्ज्ञायते किमपि हन्त विमोहनी सा शक्तिः श्रियः स्फुरति कापि तदाश्रयायाः ॥२०२६॥

ग्रन्थ्यद्भुतप्रहरणा विपिनेषु केपि घ्राणेन केचन दृशाथ रसज्ञयान्ये ।
ते केपि सन्ति तु नरेन्द्रगृहेषु हिंस्रा वाचैव ये विरचयन्ति किलोपघातम् ॥२०२७॥

ज्योतीरसाश्मन इवाश्रितमीश्वरस्य निर्दग्धुमिन्धनमिवापगतं न शक्ताः ।
पश्चाद्भवेद्यदि स तत्प्रसृतावकाशाः कुर्युः खला रविकरा इव भस्मशेषम् ॥२०२८॥

कापिलं हर्षटं कोट्टं नीतवान्मण्डलेशिताम् । उदयैः कोटभृत्यानां संपदं कम्पनाधिपः ॥२०२९॥

कुर्वञ्शय्यां पुनर्नेतुं मण्डलं तद्यलम्बत । दिनानि कतिचित्तत्र यावत्प्रकृतिदुर्जनैः ॥२०३०॥ 2030

खिटैरसूयाविषमैः प्रसादावसरो नृपः । तावत्कलुषतां तस्मिन्नुपजापैरनीयत ॥२०३१॥ तिलकम्[1] ॥

राजा भवत्परः कोस्तु स्वविचारदृढक्रियः । पयोपि शिशुवद्भूपाश्च धूर्तैः मनस्यते ॥२०३२॥

शैशवे बालि[1]शप्रायैः संस्तुतैर्जाड्यमर्पितम् । प्रौढामपि न वा यायाज्ञाशः कार्ष्ण्यं[2] मणेरिव ॥२०३३॥

भृत्यान्तरापरिज्ञानमात्रेण जगतीभुजाम् । निरागसो वधपातः कष्टं राष्ट्रस्य जायते ॥२०३४॥

---

२०१३. [1]) $A_1$ indicates here a *lacuna* of one *akshara*; C त्वस्थिरं. २०१४. [1]) Thus or त्व-- $A_1$; C दत्त्वाभयं तेरायत्यां. २०१९. [1]) Cf. viii. 1818. 1980. २०२२. [1]) Emended; A कोट्टे. २०२४. [1]) Thus A; text evidently corrupt; perhaps read °देवत्साहम°.—[2]) Thus corr. by later hand from $A_1$ °स्याहितेहनि. २०२५. [1]) Thus $A_1$; C विलुब्धकार्पण्यकृ°; perhaps read विलुब्धकारुण्यकृ°. २०३१. [1]) $A_1$ writes here ४ instead of तिलकम् (?). २०३३. [1]) A वालि°.—[2]) Thus corr. by $A_3$ from $A_1$ कारर्यं.

2035 कृत्ये व्यवसितेसाध्ये हास्यः स्याल्लक्ष्मकादिवत् । सुज्जिः प्रायोजि राजाप्तैर्निर्जेतुमिति लोहरम् ॥२०३५॥
निर्व्यूढाद्भुतकार्येथ तस्मिन्व्रश्चास्त्रतुल्यया । अमोघया प्रजहुस्ते पापाः पैशुनविद्यया ॥२०३६॥
गाम्भीर्यालक्ष्यविकृतेः प्रीत्यालापैर्महीपतेः । प्रत्यायातः कलुषतां नाज्ञासीत्कम्पनापतिः ॥२०३७॥
प्रकृत्या तस्य निर्द्रोहतया शङ्कास्य तादृशम् । प्रियं कृतवतश्च स्यादविश्वासोथ वा कथम् ॥२०३८॥
प्रीतिरासीन्न नृपतेस्तत्कृत्यैरुचितैरपि । अप्रियप्रभवालापैर्विरक्तस्येव कामिनः ॥२०३९॥
2040 जित्वा राष्ट्रद्वयं प्राप्तां हारितं नृपतेरिति । बहुमानेन दर्पाच्च स्वच्छन्दं स व्यवाहरत् ॥२०४०॥
पौरानगारहरणाद्यपकारैर्निरङ्कुशाः । तद्बन्धवो बाधमाना विरागमनयञ्जनम् ॥ २०४१॥
नैजागःस्मरणात्कोट्टेश्वरी न व्यश्वसीन्नृपे । न पितृव्येपि भूपालकोपाविष्कृतविक्रिये ॥२०४२॥
कोशे प्रजोपतापेन संचिन्वन्सुज्जिना समम् । संबन्धकृच्चित्ररथो नाभूदभिमतः प्रभोः ॥२०४३॥
धन्योदयौ[1] नृपः सुज्जिदाक्षिण्यालक्ष्यसौहृदः । अपुष्णाद्द्रविणैर्गूढं राजपुर्यां कृतस्थिती ॥२०४४॥
2045 तौ चाचालगतां[1] शीतज्वरनष्टपरिच्छदौ । मल्लार्जुनस्य साम्राज्यभ्रंशेपि विपुलश्रियः ॥२०४५॥
सुज्जिद्वेषात्पुरा दूतैराहूतो लक्ष्मकेण यः । आगच्छत्सञ्जपालः स प्राप राजपुरीं तदा ॥२०४६॥
सुज्जिचित्ररथाभ्यां तं रुद्धचेष्टेन भूभुजा । अविसृष्टप्रवेशाशं दूतैर्मल्लार्जुनोभजत् ॥२०४७॥
तन्निमित्तं स केनापि सामन्तेन सहाध्वनि । संजातकलहे शस्त्रक्षतो लक्ष्म्या व्ययुज्यत ॥२०४८॥
तथाभूतमपि स्वर्णं भूर्युरीकृत्य नाशकत् । यत्नान्मल्लार्जुनो नेतुं कार्यैस्तैस्तदपूज्यत ॥२०४९॥
2050 सोस्वतन्त्रेण राज्ञा च सौजन्याद्रिल्हणेन च । दूतैः प्रच्छन्नमाहूतो रभसादाययौ ततः ॥२०५०॥
न[1] न्यग्रहीच्च चेद्धन्युर्मामसुखेति चिन्तयन् । अमित्रविषमे मार्गे पुरं साहसिकोविशत् ॥२०५१॥
स कन्यकुब्जगौडादिमण्डलेषु महीभुजाम् । स्पर्धया लब्धसत्कारो भूपतेर्मन्त्रियन्त्रिताम् ॥२०५२॥
अनवाप्य निजे देशे सत्क्रियां दुःखितोभवत् । राजधान्यन्तिकैः पौरैः प्रहृतास्तु व्यलोक्यत ॥२०५३॥
भूपालोगणयित्वाथ मन्त्रिणो दत्तदर्शनः । भेजे स्वहस्ततांबूलदानप्रक्रिययैव तम् ॥२०५४॥
2055 निष्किंचनोपि सन्ख्यातिमात्रेणानुगतो जनैः । यातायातं नृपगृहे कुर्वञ्छत्रूनकम्पयत् ॥२०५५॥
व्याहारव्यवहारादि व्यालोक्यालौकिकाकृतेः । पुरुषान्तरवित्सुज्जिस्तस्य स्वैरमवेपत ॥२०५६॥
दध्यौ सोथ ध्रुवं राष्ट्रखर्वसर्वंकषक्रियम् । नैवमेवाद्भुतं भूतमेतादृक्शान्तिमेष्यति ॥२०५७॥
तांस्तान्देशान्तरे वीरानुत्सिक्तान्दृष्टवान्स च । तं पर्यालोच्य विश्रान्तिं सोत्सेकानाममन्यत ॥२०५८॥
भवितव्यतया दर्पेणाथ नीतः स्वतन्त्रताम् । परिवादावहं सुज्जिस्ततो यत्नाद्व्यवाहरत् ॥२०५९॥
2060 स्वानुगैर्लुण्ठितं रूक्षमाचक्षाणं रुषा द्विजम् । प्रासैर्मडवराज्यस्थः स सृगालमिवावधीत् ॥२०६०॥
बाढं कुकर्मणा तेन विप्राव्य जनमागतम् । तं प्रत्युपक्रियं लोको विरागं नगरेप्यगात् ॥२०६१॥
अत्रान्तरे बन्धुमेकं व्यधुः कमलियादयः । अगण्यप्रायमुत्सेकादुत्तमप्रक्रियास्पदम् ॥२०६२॥
मयि सत्यपरेपि स्यात्किमनुग्राहकः स्मयात् । अकारि चारणप्रायस्तादृक्कोपीति सुज्जिना ॥२०६३॥

---

२०४४. [1]) Emended; A धन्योदवौ. २०४४. [1]) Emended; A राजपुर्यौ. २०४५. [1]) Doubtful emendation; A चाचालगतौ; G चाचालगतौ. २०५१. [1]) न supplied with C; A न्यग्र — च.

संजातयौनसंबन्धबन्धः कमलियादिभिः । अथास्यांक्षिगतोस्थयै सामर्थ्याद्रिल्हणोप्यभूत् ॥२०६४॥
अल्पेन हेतुनोद्भूतं द्वैतं तेषां च तस्य च । खलपैशुनसेकैस्तत्प्रापाशु शतशाखताम् ॥२०६५॥ 2065
प्रकृत्योत्सिक्तमुत्सेकावहैः समुददीदिपत्¹ । दुर्मन्त्रैर्विमर्दैकाग्र्ये साहदेविस्तमुल्हणः ॥२०६६॥
अश्मानां सहास्माभिः क्षमते समशीर्षिकाम् । कृतघ्नोयमिति स्वैरं मन्युं राज्यपि सोग्रहीत् ॥२०६७॥
बिभ्यत्तु भूपतिस्तस्माद्रिल्हणं बाह्यभृत्यवत् । मन्त्रस्वैरकथाद्येषु विस्रम्भेषु व्यवर्जयत् ॥२०६८॥
स तु धूर्तत्वदुर्लक्ष्यतादृक्षस्वामिवैकृतः । स्वेषां धैर्यं परेषां तु संत्रासं माययातनोत् ॥२०६९॥
समप्रशक्तिराकाङ्क्ष्यसंस्तवः पक्षयोर्द्वयोः । तस्य तु प्रययौ सज्जपालो दानेन मित्रताम् ॥२०७०॥ 2070
संनद्धयोः प्रविशतोरन्योन्यस्पर्धया तयोः । क्षणे क्षणे राजधानी ययौ संभ्रमलोलताम् ॥२०७१॥
सुज्जिः सभूपानासेर्षुं प्रतिपक्षान्युयुत्सया । महीमानोत्सवास्थाने संक्षोभमुदपादयत् ॥२०७२॥
कृकाटिकान्यस्तहस्तो द्वाःस्थेनावेदितो हि सः । तं निर्भर्त्स्य शिलाक्षेपं क्रोधकक्षाक्षरोकरोत् ॥२०७३॥
लिखितैरिव तान्सर्वैः सोढुं रक्षणमीशितुः । मिथ्या तथ्यमिवोदीर्य संप्रश्नज्ञैः समर्थताम् ॥२०७४॥
उपावेशयदभ्यर्णे भूपतिः परिसान्त्व्य तम् । सत्यस्मिन्नास्ति नः किंचिदित्यन्तस्तु व्यचिन्तयत् ॥२०७५॥ 2075
चक्रे मड्वराज्यस्थैरथ प्रायो द्विजातिभिः । न सुज्जेः कम्पनेशत्वमिच्छाम इति वादिभिः ॥२०७६॥
अन्विष्य विद्विषः शङ्कां मन्त्रविच्छिदि रिल्हणः । संनद्धसैन्यमानिन्ये पञ्चचन्द्रं तदप्रियम् ॥२०७७॥
शशङ्के सज्जपालाच्च तस्माच्च बहुसैनिकात् । सुज्जिरन्यानगणयन्नबुद्धास्य च तद्रिपुः ॥२०७८॥
आस्कन्दभीत्या निर्गत्य हयारोहैः समं गृहात् । व्यूढानीको निरुद्धातो जनागाराच्च सोध्वनि ॥२०७९॥
भूपतिप्रातिलोम्येन वर्तमानस्तदाभवत् । कोष्ठेश्वरोपि संनद्धः सुज्जिना बद्धसौहृदः ॥२०८०॥ 2080
स्थितमप्रातिलोम्येन सोवधीन्मनुजेश्वरम् । इति द्वेष्योपि नितरां द्वेष्यतां नृपतेरगात् ॥२०८१॥
तथा स्थिते निशीथिन्यामाचख्युस्¹तस्य विद्विषः । बुभुक्षाहेतुतां राज्ञः स्वगुप्त्यै तेन या कृता ॥२०८२॥
अतथ्यं तथ्यवद्यस्तु तथ्यं चातथ्यवन्नृपः । यः पश्येन्मूढवत्सोर्थैस्त्यक्तोनर्थैः कदर्थ्यते ॥२०८३॥
रत्नज्योतिर्हुतवहधिया त्यज्यते दृष्टिपातः श्यावाक्षाणामितरविषयः स्वस्य संभाव्यते च ।
वस्त्वेकैकं यदिह न मृषा तन्मृषा यन्मृषा तत्तथ्येनेत्थं किमिव न जनैर्दृश्यते तत्त्वशून्यैः ॥२०८४॥
राजाथ तद्वधायान्यदजानन्दीत्स्थभेरजम् । न्ययुङ्क्त तस्य तीक्ष्णत्वे सज्जपालं महौजसः ॥२०८५॥ 2085
स कापुरुषवद्वीरः प्रहर्तुं कम्पनाक्षमः । काकुमाक्षिप्य तं हन्तुं तत्र नैक्षत क्षणम् ॥२०८६॥
मायाप्रयोगानन्योन्यमुद्दिश्य स्पृशतोर्द्वयोः । क्षणे क्षणेभजद्राष्ट्रं श्वासोच्छ्वासविलोलताम् ॥२०८७॥
प्रत्याशङ्क्योदयं रात्रौ सुज्जौ जाग्रति पूर्ववत् । अव्यग्रयामिकग्रामं राजधामाप्यजायत ॥२०८८॥
राष्ट्रान्निर्वासने रिल्हणस्य सुज्जेरभीप्सिते । पार्थिवोप्यनुमन्ताभूदनीशः प्रत्यवस्थितौ ॥२०८९॥
स निर्विवासुरा¹मन्त्र्य तत्खेदात्क्षुभिताः प्रजाः । संदर्श्य द्वारपतिना राज्ञो युक्त्या समर्थितः ॥२०९०॥ 2090
संमन्त्र्य नृपतिं मैत्रीप्रार्थिना सुज्जिना समम् । पीत्वा कोशं सज्जपालः प्राप्तो रात्रौ व्यजिज्ञपत् ॥२०९१॥

---

२०६६. ¹) Thus corr. by A₂ from A₁ समुददीपित. २०७०. ¹) Emended; A आसम°. २०८२. ¹) Emended with C; A °चाख्युः. २०९०. ¹) Emended with C; A निर्वासु°.

प्रेरणादुल्हणादीनां स्वोत्सेकावेव वर्तते । राजन्सुज्जेरभिप्रायः[1] स्पर्धिनोन्यानानिच्छतः ॥२०९२॥

निर्द्रोहस्योपकर्तुश्च मते स्याद्यदि मे नृपः । निर्वास्य रिल्हणं चित्ररथं बद्ध्वा महाधनम् ॥२०९३॥

लोहरारक्षिनिर्निष्ठानश्वान्कोशं च भूपतेः । नयेयं संभृतो हन्यां दुर्वृत्तमपि कोष्ठकम् ॥२०९४॥

2095 कार्योपरोधान्निर्बन्धः संबन्धेष्वेव नास्ति मे । दाक्षिण्यं स्वामिनः कृत्ये यस्य प्राणास्तृणोपमाः ॥२०९५॥

मध्येथ प्रतिराजादिनिर्जयस्वीकृतोद्यमे । युवाधिभ्रान्तचित्तोयं नृपश्रीभोगभाग्भवेत् ॥२०९६॥

साहायकाय द्वारेशमुल्हणं रिल्हणाश्रये । कार्यप्रान्ते च मामीशमाकारयितुमिच्छति ॥२०९७॥

मृते च मामुल्हणश्च त्वं चाहं चाविभेदिनः । मिलिता यत्र तत्रास्ति गण्यः को नु नृपास्पदे ॥२०९८॥

इहस्था नवदायादमेकमानीय कंचन । निदध्मोस्य पदे राज्ञो नानुतिष्ठेदिदं यदि ॥२०९९॥

2100 गुणान्प्रसरणत्रासाद्रुन्धानेव गिरा सृजन् । द्विजांशुभङ्ग्या राजाथ विनिश्वस्याब्रवीद्वचः[1] ॥२१००॥

यथाह स तथैवैतन्न द्रोहो नासमर्थता । नौदासीन्यमथैतस्मिन्संभाव्यमभिमानिनि ॥२१०१॥

निष्प्रतिद्वन्द्वभावोस्य दुरुच्छेदो भवेदिति । इयमप्यन्यतस्तावदस्त्वपायधियः कथा ॥२१०२॥

किं तु ब्रूते यदाकोप[1]प्रायम्यात्तथ्यतोपि वा । निर्द्रोहस्य वधो ध्यातो योस्यासौ कार्य एव तत् ॥२१०३॥

अर्थोयमल्पसत्त्वानामप्यस्माभिर्हि मन्त्रितः । नूनं तेनोपलभ्येत तानावर्जयता धनैः ॥२१०४॥

2105 पुण्यैरपरिहार्यैः स्वैर्जाड्यैर्वा मादृशाममी । जानतामपि जायन्ते निर्गुणा भोगभागिनः ॥२१०५॥

बालिशान्गृह्णतां प्रायश्चित्तमेतन्महीभुजाम् । तन्मौर्ख्यस्य फलं मूढैरेतैर्यदनुभूयते ॥२१०६॥

दुर्गमो भूमिभृन्मार्गो विटैर्द्विड्वृषैरिव । ··· ·····················[1] ॥२१०७॥

तन्वाना व्रतवैमुख्यं रसनालौल्यशालिनः । परपिण्डोपहर्तारः खलाः कौलेयका अपि ॥२१०८॥

इत्थं खलोपतापेन प्रयुक्तं तद्भयात्पुनः । असंहार्यं कुकर्मेदं पश्चात्तापाय नो भवेत् ॥२१०९॥

2110 इत्युदीर्य नृपः सुज्जेः सज्जो व्यापारसिद्धये । तमजागारयच्छश्वज्जागरं चाग्रहीत्स्वयम् ॥२११०॥

विश्रम्भमन्त्रसुप्तेः शङ्कां जिघांसुः सुज्जिरित्यपि । तथ्यं भृत्यवचो जानंस्तस्थौ दौःस्थ्येन पार्थिवः ॥२१११॥

गत्वा स्वयं गृहान्यौनसंबन्धं कुरुतं[1] युवाम् । इत्युक्त्वा रिल्हणेनाथ स सुज्जिं समयोजयत् ॥२११२॥

विश्वासस्यापि तथा हन्तुं तं प्रसङ्गमनाप्नुवन् । उदताम्यद्दिवारात्रं तल्पोपर्यवशो लुठन् ॥२११३॥

सञ्जपाले गृहाद्बन्धुनाशदुःखिन्यनागते । आशङ्क्य साहसासिद्धिमधिकं पर्यतप्यत ॥२११४॥

2115 निपत्य वीरशयने सुस्सलक्ष्मापसत्क्रियाम् । भ्रातरो यस्य कल्याणराजाद्या व्यस्मरन्युधि ॥२११५॥

स गर्गिः कुल्लराजः स ख्यातो व्यायामविद्यया । प्राणैरानृण्यमिच्छंस्तमपृच्छच्छोककारणम् ॥२११६॥ युग्मम्॥

स संस्थापयितुं हन्तुं वाप्यशक्यं न्यवेदयत् । तस्याप्रतिसमाधेयं कम्पनाधीश्वराद्भयम् ॥२११७॥

कियदेतन्निजप्राणमात्रलभ्यं महीभुजाम् । इत्याभाष्य स जग्राह साहसाध्यवसायिताम् ॥२११८॥

दिनद्वयमनायातो गृहेभ्यः कम्पनापतिः । न प्रातिभाव्यमभजत्तस्य मृत्योः श्रियोथ वा ॥२११९॥

2120 विस्रम्भभृत्यः शृङ्गारनामा चाप्यब्रवीत्प्रभोः । तं दृष्टवांस्तृतीयेह्नि शयनेवगणं स्थितम् ॥२१२०॥

---

२०९२. [1]) Emended; A °प्रायस्पर्धिनां°. २१००. [1]) Emended with C; A द्वजन्. २१०३. [1]) Emended; A च आकोप°; G *sec. manu* यत: को°. २१०६. [1]) A बालि°. २१०७. [1]) Here two *pádas* are missing; C supplements क स नीतिज्ञविहेव । क च ते खलकुक्कुराः. २११२. [1]) Emended; A कुरुतां. २११६. [1]) A, २.

शोभोपयोगिनो भर्तुर्नित्यं सततसेवकाः । कर्तुं साहससाचिव्यं विदूरेण तु पार्यते ॥२१२१॥

करे पिनाको मकराङ्कशत्रोः शोभाविशेषाय सदानुषक्तः ।
पुराहवे कार्मुककर्म तस्य तत्कालमात्रेन तु मन्दरेण ॥२१२२॥

ताम्बूलहारकव्याजात्ततो राजा व्यसर्जयत् । कुलराजं तमव्याजधैर्यासंलक्ष्यविक्रियम् ॥२१२३॥

ध्रुवं मृत्युः पुनर्नाहमागन्ता तत्ततोस्य कः । आरंभेति[1] स निन्ये न ताम्बूलं स्वर्णभाजने ॥२१२४॥

व्यसनप्रशमं राज्ञः स्वदेहत्यागतोनुगाः[1] । एवं कर्तुं यतन्तेन्ये निर्व्यूढा स्खलिताः पुनः ॥२१२५॥ 2125

सगणोवगणो वास्तु निहतो नियतं मया । जागर्त्यतः परं देव इत्युदीर्य विनिर्ययौ ॥२१२६॥

गतस्य साहसासिद्धौ शक्यं शङ्क्यं पलायनम् । ……………………[1]॥२१२७॥

व्रजन्स्वामिहितं कृत्वा पुनः पश्चान्निनाय सः । शस्त्रिणौ द्वौ मिषाच्छस्त्री बन्धस्थाने परामृशन्[1] ॥२१२८॥

स्वयं गृहीत्वा ताम्बूलं राज्ञा प्रहित इत्यथ । द्वाःस्थेनावेदितः[1] सुज्जेः पार्श्वं रुद्धानुगोविशत् ॥२१२९॥

ददर्शोच्चावचैस्तं च मितैः परिजनैर्युतम् । यूथनाथमिवात्यल्पैर्द्विपैररहितान्तिकम् ॥२१३०॥ 2130

गृहीतनन्दितस्वामिताम्बूलः सस्मितं स तम् । पृष्ट्वा[1] कृत्यादि नृपतेः सत्कृत्य व्यसृजत्क्षणात् ॥२१३१॥

जनप्रवेशाशङ्की स त्वरमाणस्तमब्रवीत् । कृतागाः कोपि कैवर्तशस्त्रभृन्मत्समाश्रितः ॥२१३२॥

तस्याक्षेपपरान्भृत्यान्स्वान्निवार्याधुना तव । संमान्या वयमित्यपेलक्षयन्प्रकृतिक्षणम् ॥२१३३॥

सोत्सेकामिव तां वाचं स दर्पादवधीरयन् । तस्य रूक्षाक्षरं नाहं कुर्यामित्यब्रवीद्वचः ॥२१३४॥

स रोषादिव निर्गच्छन्मान्योसाविति वादिभिः । तं सान्त्वयित्वा तद्बन्धै रुद्ध्वा व्यावर्तितः पुनः ॥२१३५॥ 2135

तेनायादि ततः कर्तुं विज्ञप्तिं वस्तुनोमुनः । सज्जयोरादिश द्वारप्रवेशं भृत्ययोर्मम ॥२१३६॥

अवज्ञेनेव तेनाथ वीक्ष्य तौ संप्रवेशितौ । सहायलाभाद्बुभुक्षुः प्रजिहीर्षुरवर्तत ॥२१३७॥

यानाद्य कुर्यां प्रातर्वो विधेयमिति तान्वदन् । दत्तपृष्ठो निविद्रासुस्तल्पे सुज्जिर्जहौ वपुः ॥२१३८॥

गत्वाथ किंचिद्व्यावृत्तो निष्कृष्टक्षुरिको जवात् । प्राहरत्कुलराजोस्य[1] वामे पार्श्वे कृतत्वरः ॥२१३९॥

तस्य धिक्कुर्वतो द्रोहमधावत्क्षुरिकां प्रति । यावत्पाणिः प्रहरणं तावत्सर्वेपि ते व्यधुः ॥२१४०॥ 2140

विमर्शः[1] पश्यतां यावदाशङ्क्ये तत्र नोद्ययौ । स तावदेव सुचिरापेतश्वास इवाभवत् ॥२१४१॥

भयत्यक्ताभिमानेषु विद्रुतेष्वनुजीविषु । चकर्ष शस्त्रं तत्रैकः पिञ्छदेवः परं तदा ॥२१४२॥

प्रहरंस्तैस्त्रिभिस्तुल्यप्रतिप्रहतिभिः क्षतः । भ्राम्यन्स्नुतासृक्तस्मात्स मण्डपान्निरवास्यत ॥२१४३॥

स्थितान्दत्तार्गले धाम्नि रुद्धद्वारतमोरयः । जिघांसवः सुज्जिभृत्यास्ततस्तान्पर्यवारयन् ॥२१४४॥

तमोरिप्रतिकुर्वाणा भज्यमानैरिभिर्व्यधुः । ते द्वारे तूलशय्यां तां प्रोत्सार्य शवमुद्धृतम् ॥२१४५॥ 2145

खड्गेषुशूलपरशुक्षुरिकाश्माभिवर्षिणः । तान्समभ्रमयन्[1]मार्गैरनेकैस्ते विविक्षवः ॥२१४६॥

नैराश्यहेतोर्विशतां तेषां संकटवर्तिभिः । पृष्ठाच्छित्त्वा शिरः सुज्जेरङ्गनेक्षिप्यताथ तैः ॥२१४७॥

असंनिःसरणाभीक्ष्णशुष्केक्षणपुटभ्रुनि । उत्तरौष्ठकचच्छन्नसघ्राणपुटद्वयम् ॥२१४८॥

२१२४. [1]) Thus emended in C; A आरेभेति. २१२५. [1]) Emended; A °तोन्वगाः. २१२७. [1]) Here two *pādas* are missing; C supplements इति चिन्तयतस्तस्य मम आसीद्विशृङ्खलं. २१२८. [1]) Emended; A °मृषन्. २१२९. [1]) Emended; A द्वास्थेन. २१३१. [1]) Emended; A दृष्टा. २१३९. [1]) Emended with C; A कुजरा°. २१४१. [1]) A विमर्षः. २१४६. [1]) Emended; A तान्स सम्भ्रम°.

अक्ष्णोर्बम्भ्रम्यमाणस्य लोकस्य प्रतिबिम्बकैः । संभाव्यमानसंस्पन्दस्तोकमध्यक्ततारकम् ॥२१४९॥

2150 स्वपुटस्याक्रमच्छेदाम्लमांसस्य संधिषु । हरिद्रार्द्रैरिवाश्वानमेदोग्रन्थिभिरुल्बणम् ॥२१५०॥

धूलिध्वस्तकचश्मश्रु तदेतदिति निश्चयम् । परं भालतलस्थेन द्रवत्कुङ्कुमबिन्दुना ॥२१५१॥

तद्वीक्ष्य तिर्यक्पतनभ्रश्यत्कासंध्यन्तराहितम् । उच्चलत्तुमुलाक्रन्दा भृत्याः क्वापि विदुद्रुवुः ॥२१५२॥कुलकम्॥

तीक्ष्णान्प्रयुज्य क्ष्मापस्तु तिष्ठन्व्याकुलधीस्तदा । बहिर्वीक्ष्य जनक्षोभं साहसं निश्चिकाय तम् ॥२१५३॥

सुज्जौ हते क्षते वापि कार्यमेतदिति श्रुतम् । संनह्य सैन्यस्यादिक्षत्स तन्मन्दिरवेष्टनम् ॥२१५४॥

2155 मिथ्यैव सुज्जिर्निस्तीर्ण इति श्रुतवता जनात् । स्वयमग्राहि भूपेन ततः समरसंभ्रमः ॥२१५५॥

निःसंशयं हतं ज्ञात्वा सुज्जिं राजोपजीविनः । तत्र स्थितं शिवरथं सर्वद्वेष्यमबन्धयन् ॥२१५६॥

हिल्लात्मजन्मनः सुज्जिभ्रातृस्यालस्य कौशलम् । कलशस्यांश निर्वर्ण्यं वाणीयं पुण्यभागिनी ॥२१५७॥

आक्षिप्यमाणैर्भिक्षाचारैरग्ने वीरोचितं कृतम् । तेन त्वसंशयस्थेन सदाचाराच्च विच्युतम् ॥२१५८॥

राजौकस्येव तां वार्तां श्रुत्वा स ह्यपलायितः । हतस्य स्वामिनोभ्यर्णे जिहासुर्जीवितं ययौ ॥२१५९॥

2160 द्वारं पदप्रहतिभिर्भञ्जन्तं राजसैनिकाः । अपसार्य कथंचित्तं तीक्ष्णाः कृच्छ्रादरक्षिषुः ॥२१६०॥

प्रविष्टेस्मिन्ननिर्व्यूढपीडिते मण्डपान्तरम् । लभ्यमाना नृपाभ्यर्णे कुलराजादयो ययुः ॥२१६१॥

हव्यविष्टो हतस्तान्स तत्रैकं महाभटम् । शरैरेव हतो दूरात्कथंचित्परिपन्थिभिः ॥२१६२॥

आयातं क्षुभिते देशे सज्जपालं महीपतिः । रिल्हणं चोल्हणं हन्तुं प्राहिणोद्विहितत्वरः ॥२१६३॥

यातो मार्गात्पलाय्यायं परिशङ्क्येति रिल्हणः । क्षिप्तिकातटपर्यन्तमटित्वा यात्रदाययौ ॥२१६४॥

2165 पूर्वायातः सज्जपालो गृहद्वाराद्विनिर्गतः । उल्हणस्य पथो रुन्धन्नुद्वहन्प्रहरत्रणे ॥२१६५॥

तावदेकस्य खड्गेन निकृत्ते दोष्णि दक्षिणे । त्वङ्मात्रशेषे छिन्नास्थिस्नायुग्रन्थिरजायत ॥२१६६॥तिलकम्॥

अगण्यमायतां ग्रामे वंशे यत्कौशलाद्दसौ । दिगन्तरेषु स्वस्मिंश्च देशे प्राप प्रथां पुनः ॥२१६७॥

फलकाले समासन्ने शौर्यप्रतिभुवाभजत् । स तेन दोष्णा वैकल्यं धिगिच्छां विधुरां विधेः ॥२१६८॥

स प्राग्वदुदयात्प्राप्तौ भवेदविकलो यदि । फलेन तस्य जानीयादिच्छां लोकोयमद्भुताम् ॥२१६९॥

पीतामृतस्य क्षतविमहत्त्वं न प्राभविष्यद्यदि नाम राहोः ।

2170 अज्ञास्यदिच्छां तदमुष्य लोकः सामर्थ्यभाजः सुचिरप्रवृद्धाम् ॥२१७०॥

दृष्टः शीलाभिधो वृद्धः पितृव्यः साहदेविना । तद्गृहं निहतः साधु ––[1] जानत्रणार्तिना ॥२१७१॥

तस्यार्त्यो त्रिशतो वेश्म जज्जलाख्योपगो हतः । मान्योनुगो भटौ द्वौ च यामिकश्च जनंगमः ॥२१७२॥

बालं तनयमालोक्य निषण्णस्याङ्गनस्थितेः । तस्यानिर्गच्छतो गेहे रिल्हणोग्निमदापयत् ॥२१७३॥

आनीयमानो धूमान्धो बद्धा मुख्यैः स सैनिकैः । गृहद्वारे हतः कैश्चित्प्राकृतैर्व्रणविक्लवः ॥२१७४॥

2175 तस्य प्रधानप्रकृतिक्षयहेतोर्महीपतिः । मुण्डमप्यवलोक्यासीदशान्तक्रोधविक्रियः ॥२१७५॥

व्यापाद्यमानाः साकोपं भूपतेर्मेरितैर्भटैः । उच्चावचाः सुज्जिभृत्याः कृत्यं सत्त्वोचितं व्यधुः ॥२१७६॥

---

२१५०. [1]) Emended with C; A कल – स्याद्य. २१६६. [1]) A, ३. २१७१. [1]) Before or after साधु two *aksharas* are missing; the *lacuna* not indicated in A; C supplements सम्बन्धा°.

अनुजो लक्ष्मकः सुज्जेर्बद्ध्वा नीतः स विक्रियाम् । नृपं वीक्ष्यावधैः कैश्चिद्राजधान्यङ्गने हतः ॥२१७७॥

भ्राता पितृव्यजस्तस्य संगटाख्यो नृपाङ्गने । अट्टाट्ट इव प्राणानौचित्येनामुचत्कृती ॥२१७८॥

प्रविष्टः शरणं बाणवंश्यैः पापैः प्रमापितः । उन्मत्तो मुम्मुनिस्तस्य भ्राता कैश्चित्स्वमन्दिरे ॥२१७९॥

सुज्जिजस्यालस्तु भृङ्गारवृत्त्या भङ्गुरया हतः । महाकुलीनो विचरत्रौचित्येन च क्षत्रियः ॥२१८०॥ 2180

साङ्गिकाख्यः प्रतीहारो व्रणितः शनकैर्हतः । अन्येपि संश्रिताः सुज्जेस्तत्र तत्र प्रमिम्यिरे ॥२१८१॥

आत्यवाजिजवप्राप्तप्राणाः कोष्ठेश्वरान्तिकम् । आसाद्य वीरपालाद्या द्विजा मृत्युभयं जहुः ॥२१८२॥

व्रजञ्छारदियो[1] दुष्टोत्थानरुद्धतुरंगमः । प्रपेदे संगटभ्राता बन्धनं सुभटामठे ॥२१८३॥

सूनुश्च सज्जलः सुज्जेः श्वैतिकश्चापजात्मजः । उल्हणस्य तनूजश्च कारागारं प्रपेदिरे ॥२१८४॥

इत्थं राजन्यमात्ये[1] च प्राप्ते पिशुनवश्यताम् । नवमेब्दे भुवेः शुक्लपञ्चम्यां विप्लवोभवत् ॥२१८५॥ 2185

कार्ये क्वापि विपर्यस्तसत्त्वं संस्मृत्य मन्त्रिणम् । तमद्यापि नृपस्तादृग्भूयोपेतोनुतप्यते ॥२१८६॥

वेतालोत्थापनाच्छ्वभ्रलङ्घनाद्विषचर्वणात् । व्यालाश्लेषाच्च विषमं सत्यं राजोपसेवनम् ॥२१८७॥

अनात्मायत्तनिस्तीर्णगुणानां चक्रवर्तिनाम् । शकटानामिवावस्थो विभ्रमः को न भज्यते ॥२१८८॥

अयुक्तं नृपतिः सुज्जिजवधं मेने प्रजाः पुनः । युक्तं ज्ञात्वा तमुद्रिक्तशक्तितां विविदुः प्रभोः[1] ॥२१८९॥

भेजे राजा सज्जपालं कम्पनाधिपतिं ददत् । कुलराजे च नगराधीकारित्वं समार्पयत्[1] ॥२१९०॥ 2190

त्यक्त्वा मल्लार्जुनं[1] धन्योदयौ नगरमागतौ । प्राग्वत्पुनरजृम्भाते प्रियौ विश्वंभराभुजः ॥२१९१॥

इतराश्रयविच्छेदात् श्रीतपारिप्लवस्थितिः । श्रीः सर्वाकारमकरोत्स्थिरं चित्ररथे परम् ॥२१९२॥

अद्भुतैश्वर्यधुर्योपि राष्ट्रं दण्डेन पीडयन् । शमं नेतुमशक्योभूत्स भूपस्याप्यनङ्कुशः ॥२१९३॥

गन्धर्वानाभिधे ग्रामे टिक्कं हत्वा व्यसर्जयत् । पारिविशोकं कोट्टेशस्तच्छिरः पार्थिवान्तिकम् ॥२१९४॥

निसर्गद्वेषिणा ग्रामप्रतापे नितरां नृपे । तदानीं तप्यमानेन तुन्नाप्यायितोसकृत् ॥२१९५॥ 2195

कोष्ठेश्वरेण रभसादल्पैः परिजनैर्युतः । निशि लोठनदेवः स हाडिग्रामं ततोविशत् ॥२१९६॥

महाकथितकन्थान्यैः संरुध्धे राज्ञि सर्वतः । बद्धसंधिर्लवन्यस्तं विससर्ज यथागतम् ॥२१९७॥

उच्चलादिवदादातुं राज्यं स रभसं भजन् । निर्युद्धिभून्यदायोगान्मूढो लोकस्य हास्यताम् ॥२१९८॥

तीक्ष्णप्रयुक्तिभिः सैन्यभेदैरन्यैश्च कोष्ठकम् । उपायैर्नृपतिस्तैस्तैस्ततो हन्तुं व्यचिन्तयत् ॥२१९९॥

प्रतिद्वन्द्वीव तीक्ष्णानां पाटिताक्षः क्षमाभुजम्[1] । न संप्रासादयत्क्रुद्धः प्रतियोद्धुं त्वचिन्तयत्[2] ॥२२००॥ 2200

स्वैः स्वैः प्रदेशैराटिश्य प्रवेष्टुं पृतनापतीन् । स्वयमुद्यावनैः सैन्यैरवस्कन्द तं पुनः ॥२२०१॥

स भूपं रभसायातं ज्ञात्वाल्पपृतनं बली । ग्रामश्छलयितुं तस्थौ प्रतापैः परिहारितः ॥२२०२॥

लभे रणे चित्ररथः पृथुसैन्योपि दैवतः । तस्य सैन्यैकदेशेन निन्ये जयविपर्ययम् ॥२२०३॥

भङ्क्त्वा नामङ्कलोकारकल्पेन[1] किल तेन सः । ततः प्रभृत्यभूद्दृश्यदवष्टम्भो दिने दिने ॥२२०४॥

रिल्हणादीन्योधयित्वा व्यूढव्यस्ताखिलानुगः । लवन्यो न्यपतत्सार्थं कम्पनाधिपतेर्बले[1] ॥२२०५॥ 2205

२१८३. [1]) C शारदि यो. २१८५. [1]) Emended with C; A °मान्ये. २१८९. [1]) Conjectural emendation of G. (*sec. manu*); A प्रजाः. २१९०. [1]) Emended with C; समर्पयत. २१९१. [1]) Emended; A मल्लार्जुनो. २२००. [1]) Emended; A °भुजाम्.—[2]) Emended; A संप्रसाद°. २२०४. [1]) Doubtful emendation; A भङ्क्त्वानामङ्कलौ°; C भङ्क्त्वानामङ्कलीकार°. २२०५. [1]) Emended; A °र्बली.

कर्नैः शतादपि भटैर्युतो विद्रुतसैनिकः । सेहे[1] तत्सैन्यरोधं स गजक्षोभमिवाचलः ॥२२०६॥
किं वाच्यः स नरव्याघ्रः प्रवृद्धिं याति संगरे । निजवर्मतनुत्रादि यस्य मानि न वर्ष्मणि ॥२२०७॥
मन्दीकृतारिसंरम्भमवष्टम्भेन तादृशा । तं त्रिल्लकादयः प्रापुर्लवन्याः सैन्यशालिनः ॥२२०८॥
तैः सजातीयदाक्षिण्यात्तटस्थैरपि संकटे । तस्येषदुपयोगोभूत्स्ववीर्यापास्तविद्विषः ॥२२०९॥
2210 काले संनहनं रात्रिजागरः सामन्तो बलैः । समये प्रणत्यागनत्युक्तिविकल्पनम् ॥२२१०॥
लब्धभूम्यपरित्यागो जिगीषोरीदृशैर्गुणैः । स्खलेयुररयोप्यस्य का वैर्याक्रमणे स्तुतिः ॥२२११॥
अविश्वसन्भिन्नभृत्यस्तादृक्संरम्भपीडितः । पलायनोन्मुखः शैलात्कोष्ठकोथ व्यगाहत ॥२२१२॥
मार्गेष्वकालप्रालेयपातरुद्धेषु वाजिनाम् । गन्तुं तस्योद्यमं जघ्नुः पृष्ठलग्ना विरोधिनः ॥२२१३॥
अत्रमाणोपनम्रोथ परिमेयपरिच्छदः । स ययौ जाह्नवीं स्नातुं राज्ञा राष्ट्रादपाकृतः ॥२२१४॥
2215 सोमपालोथ भूपालनाम्ना पुत्रेण खेदितः । दीर्घैराज्यदुःखार्तः शरणं नृपतिं ययौ ॥२२१५॥
पुत्रौ दत्तवतो नीविं नागपालस्य तस्य च । अभयं प्रतिशुश्राव भूभृदाश्रितवत्सलः ॥२२१६॥
बृहद्राजस्य जिह्मोयं दौःस्थ्यहेतुरभूदिति । स तदापदि नास्मार्षीदव्याजौदार्यधुर्यधीः ॥२२१७॥
साहायकाय स्वं सैन्यं दत्तवांस्तं महीपतिः । भूयः प्रतिज्ञामनयद्दर्पप्रशमनाद्विषाम् ॥२२१८॥
स्नात्वा धुनद्यां व्यावृत्तः कोष्ठकोत्रान्तरे पुनः । मल्लार्जुनं गृहीत्वाभूद्राज्योत्थापनोद्यतः ॥२२१९॥
2220 अर्कोपरागे प्राप्तः स कुरुक्षेत्रमवाप तम् । लवन्यं कार्यतस्त्यक्तपूर्ववैरो नृपात्मजः ॥२२२०॥
आहूतो लोठनः पूर्वमायातस्तेन डामरम् । निशम्य तं संघटितं[1] खिन्नः प्रायाद्यथागतम् ॥२२२१॥
विजयेशापतः पीतकोशोपि नृपतिद्विषः । प्रतिविक्षुर्नोपैक्षिष्ट सोमपालो दुराशयः ॥२२२२॥
आराधनाय भूभर्तुस्तत्पुत्रः कोष्ठकं पुनः । प्राप्तं स्वविषयैस्तैस्तैश्छकुरैर्निरलुण्ठयत् ॥२२२३॥
अत्रान्तरे चित्ररथं संवृद्धायासदुर्मदम्[1] । अनिच्छन्तोवन्तिपुरे प्रायं चक्रुर्द्विजातयः ॥२२२४॥
2225 उपेक्ष्यमाणास्ते दर्पात्तेनागणितभूभुजा । ज्वलिते ज्वलने देहान्बहवो जुहुवुः शुचा ॥२२२५॥
चरके धर्मधेनूनामुक्षण्यपि तदाश्रितैः । वह्निं गोपालकोप्येकः कारुण्यप्रवणोविशत् ॥२२२६॥
भट्टस्योद्भटवंशस्य पृथ्वीराजस्य नन्दनः । युवा विजयराजाख्यः सानुजो गाढदुर्गतः ॥२२२७॥
देशान्तरं जिगमिषुर्विषमं वीक्ष्य तत्र तत् । व्याजहारानुजन्मानं कारुण्यास्रुकणान्किरन् ॥२२२८॥
उपेक्ष्यमाणा दाक्षिण्यस्तम्भितेन महीभुजा । विशः सचिवपाशेन विवशाः पश्य नाशिताः ॥२२२९॥
2230 छन्दानुवृत्त्यामात्यानां[1] यत्र क्ष्माभृदुपेक्षते । कस्तत्रान्यस्तु दीनानामापच्छमयिता विशाम् ॥२२३०॥
यद्वा न्याय्योयमन्योन्यस्पर्धया यदुपप्लुतम् । शमिता दण्डयेच्छाम्यं शमितारं परोथ वा ॥२२३१॥
विशृङ्खलं नयेच्छय्यां दार्ढ्यसारं विघट्टनैः । कदाचिल्लोहमश्मानमश्मा लोहं कदाचन ॥२२३२॥
दोषेणैकेन न द्वेष्यो राजा सर्वगुणोज्ज्वलः । यथा चित्ररथस्यान्यद्विधेयं नावभाति मे ॥२२३३॥
धर्मः सर्वोपकार्येकक्षुद्रक्षपणमुच्यते । जघानाजगरं सोपि जन्तूनामन्तकं जिनः ॥२२३४॥

---

२२०६. [1]) Emended; A सह. २२२१. [1]) Emended; A सङ्घटितुं. २२२४. [1]) Emended with C; A सवृद्धायास°.
२२३०. [1]) Emended with C; A apparently °मान्यानां.

सञ्जपाले यवनकैः स्कन्धावारं निबध्नति । अनुचक्रुर्द्विपोत्पन्नाशिवासस्तिमितांस्ततः ॥२२६४॥

2265 अन्योपि शिलिकाकोट्टपर्यस्तकटकोभवत् । गन्धद्वेषी गजारिपुः सिन्धुरस्येव वैरिणः ॥२२६५॥

आवासितबलो राजा गोवासे रिल्हणोकरोत् । अटवीं पर्यटन्भूकानिवाकौ क्षुधितानरीन् ॥२२६६॥

तीव्रशक्तेर्नृपस्यैवमारम्भैः स्तम्भितोभजत् । कोष्ठेश्वरस्त्रिचतुरान्मासान्संचारशून्यताम् ॥२२६७॥

क्लिष्टो देशान्तरे शत्रूनन्तरैर्न्यक्कृतो नृपैः । भिन्नस्ववर्गो भूभर्तृभृत्यव्यर्थीकृतोद्यमः ॥२२६८॥

वालिशत्वादकुशलो ज्ञातुं वृत्तिं महीभुजाम् । स विस्मृतागाः संधातुमैच्छच्छिन्नपदो नृपम् ॥२२६९॥

2270 उज्जिहीर्षोः प्रभोर्मन्युं वाच्यं तद्वचनाद्विदन् । भक्त्येकामः सञ्जपालस्तस्येच्छां तामपूरयत् ॥२२७०॥

तथार्तोपि रिपुं राज्ञः संधित्सुर्न्यषधीत्स सः । पृथ्वीहरप्रसूतानां निर्द्रोहत्वं न कौतुकम् ॥२२७१॥

तेन प्रहिण्वता राजवैरिणं स्वकराङ्गुलिम् । छिन्दतापि महीभर्तुर्मन्युश्छेत्तुं न पारितः ॥२२७२॥

कण्ठबद्धशिरःशाटः शीर्णोपानहं वहन् । भुक्तवेलोपि भूपालं कर्तुं नाशकदक्रुधम् ॥२२७३॥

अस्वीकृतद्विजभूभुक्ताञ्छनः स हि राजवत् । तत्कालमत्युक्तभूपाङ्कः सर्वं गर्वाद्व्यवाहरत् ॥२२७४॥

2275 शुश्राव बद्धं तन्मध्ये यातं मल्लार्जुनं नृपः । अनुबध्नाति भव्यानामुदयेभ्युदयान्तरम् ॥२२७५॥

नीयमानः स हि स्कन्धमधिरोप्यानुजीविभिः । अजाङ्गिकतया मार्गोल्लङ्घनायासनिःसहः ॥२२७६॥

ततस्ततो भयस्थानान्निस्तीर्णो लोहराश्रितम् । सावर्णिकाभिधं ग्रामं प्राप्तो विन्यस्तरक्षिणा ॥२२७७॥

निरुद्धो जग्गिकाख्येन ठक्कुरेण महीपतिः । प्रियंकरं तं च भृत्यं शुभावान्तिकमागतम् ॥२२७८॥

बद्धप्रायोरिणा दुर्गान्निर्गतः स कथंचन । बद्धस्तेन पुनः शक्तिः कस्य भाग्यार्गलङ्घने ॥२२७९॥

गङ्गा धुमार्गलुठिता जठरात्कथंचिदेकस्य संहतवतो निसृता महर्षेः ।

2280 यत्नापरेण कृतसागरगर्तपूर्तिः शक्तो न कोपि भवितव्यविलङ्घनायाम् ॥२२८०॥

जग्गिके बद्धसंग्रामिपर्यन्तोपान्तरक्षिणि । राज्ञोदयद्वारपतिः प्रायोजि प्राज्यबुद्धिना ॥२२८१॥

तं विना धैर्यगाम्भीर्यशौर्यधुर्यं महाधियम् । संकटे न ह्यवष्टम्भो राज्ञाशाय्यन्यमन्त्रिणाम् ॥२२८२॥

स ह्यतिक्रम्य साबाधान्मार्गाननुभवचेतनैः । तमोरिस्थितमद्राक्षीत्तं क्षमापतिविद्विषम् ॥२२८३॥

निष्ठाभूम्येन धैर्येण शौर्यसंभावनावहः । स्तुवन्स तं बहिः प्राप्तं तत्तदुक्त्वाब्रवीत्पुनः ॥२२८४॥

2285 सर्वतो ज्यायसीं भर्तृभक्तिं यो बहु मन्यते । भवान्धुर्यो मतिमतामादृतो लोभनातुरैः ॥२२८५॥

कृता रक्षामणिसमं सहायं त्वादृशं विना । हानिर्मे दुर्नरेन्द्रस्य बाल्ये राज्ये बहुच्छलैः ॥२२८६॥

दुष्प्रेक्ष्याणां भवस्येव नियमाद्राजभास्वताम् । प्राग्वान्तहेमन्तदिने जननेत्रविलङ्घता ॥२२८७॥

शोभते रुधिराताम्रमण्डलाभो भयोदये । तथा चोस्तमये भास्वानिव वन्द्यः स भूपतिः ॥२२८८॥

धन्वोपतारो यस्यासीत्सुभ्रस्त्रीराङ्गनाजनः । उदयेस्तमयेप्युभे रागव्यग्राप्सरोगणः ॥२२८९॥

2290 पदे प्रयोगं लब्ध्वार्थं किंचित्कृत्वा कुलीनवत् । अहं कविरिव प्रौढः प्राप्तो निर्व्यूढिमूढताम् ॥२२९०॥

सत्यंकारोधुना भूत्वा विधत्तां स्वाम्यसुस्थितिम् । साध्यत्वाभतिवृत्तेन वरेणैकेन मे भवान् ॥२२९१॥

---

२२६४. ¹) A. स्कन्धा° २२६५. ¹) A सिन्धुरस्येव. २२६९. ¹) A वालि°. २२७६. ¹) Emended; A स्कन्धम°.—²) Emended; °लङ्घनाय स नि°. २२७९. ¹) Emended; A शक्ति.—²) Emended; A भाग्यार्ग°. २२८१. ¹) Doubtful; A जग्गके; cf. viii. 2278.

इत्युक्त्वा प्रत्ययोत्पत्त्यै संस्प्रष्टुं स्फाटिकं ततः । सपीठं पुरतो द्वारपतेर्लिङ्गमुपानयत् ॥२२९२॥
अच्छलाहवसंमर्दप्रासभल्लेषुवर्षिणः । योधान्योद्धुं वरं मार्यं मानवाभूनमिच्छति ॥२२९३॥
इति संभाव्य संस्पृष्टशिवलिङ्गः स वाञ्छितम् । वरं तस्योररीचक्रे स च भूयो जगाद तम् ॥२२९४॥
आकृष्टदृष्टिरहतः क्ष्माभुजोन्तिकमक्षतः । यथेदृगेव प्राप्नोषि तथा त्वामर्थयेधुना ॥२२९५॥ 2295
कार्पण्योपहतं तस्य वचः श्रुत्वा त्रपाजडाः । सर्वेप्युर्वीमुखास्तस्थुर्वृष्टधार्ताः पक्षवा इव ॥२२९६॥
अन्तक्षणस्ततो भिक्षोः स्मर्यमाणः सचेतसाम् । विकासहेतुतां प्राप स्वस्थस्य मनसः पुनः ॥२२९७॥
मनुष्यवाह्यमारूढः पत्तं निन्ये स निस्त्रपः । तेन स्वपालितांल्लोकानपि पश्यन्नविक्रियम् ॥२२९८॥
अहीनाहारनिद्रादिवैवश्यः पशुवत्पथि । कृष्यमाणः स केनापि न विकल्पेन पस्पृशे ॥२२९९॥
पश्यन्नानीयमानं तं गोप्तृभिस्तादृशं जनः । दयार्द्रहृदयश्चासीन्नाभ्यनन्दच्च भूभुजम् ॥२३००॥ 2300
उवाच चानुकम्प्येस्मिञ्जन्मज्येष्ठस्य भूपतेः । नैतावज्जाति नैर्घृण्यमनुजे पितृवर्जिते ॥२३०१॥
असेचनकमेतस्य मेचकाब्जदृशो वपुः । क्लेशगर्भमनिस्त्रिंशचेताः कः कर्तुमर्हति ॥२३०२॥
पूर्वापरानुसंधानवन्ध्यस्तं दृष्टवांस्तदा । विस्मृतागा नृपं तत्तदित्युपालभताध्वनि ॥२३०३॥
गणना काप्य वा बालबालिशादौ विधीयते । न निःसत्त्वैरैकाम्यं महतामपि सर्वदा ॥२३०४॥
श्रोतॄणां द्युतपाञ्चालीकेशकृष्ट्यादि शृण्वताम् । पाण्डवेभ्योधिकः क्रोधो धार्तराष्ट्रेषु जायते ॥२३०५॥ 2305
कुरूणां क्षतजापाने भग्नोरोर्मूर्धताडने । श्रुते पाण्डवविद्वेषस्तेषामेव च दृश्यते ॥२३०६॥
परावरज्ञः कार्याणां न कश्चिन्मध्यमं विना । तटस्थेनुभवाभेदस्तत्र तत्र कथं भवेत् ॥२३०७॥
स पौरान्नोदयन्नङ्के क्षिप्ताङ्गुल्यङ्कमुद्वहन् । युग्याधिरूढो मृत्पात्रं सायं नगरमासदत् ॥२३०८॥
न्यधत्ताश्वयुजाशुक्लपञ्चदश्यां महीपतिः । एकादशेब्दे तं रक्षियुतं नवमठान्तरे ॥२३०९॥
त्यक्ताहारस्य च निशाः पञ्चषास्तस्य ताम्यतः । पार्श्वे जगाम कारुण्याच्चरणस्पर्शनार्थिनः ॥२३१०॥ 2310
अदादीदर्थितं तस्मै प्रतिभूर्भुवुषेभयम् । द्रोहायैकान्ततो वध्यौ स चित्ररथकोष्ठकौ ॥२३११॥
राजा निर्जग्मुषः स्वोर्वी कोष्ठकस्याथ बन्धनम् । विधित्सुः पञ्चषानाप्तान्रिल्हणादीनचूचुरत् ॥२३१२॥
सर्वेषु गलितौजःसु स्वयं राज्युद्यमस्पृशि । अथ तं रिल्हणो दोर्भ्यां हर्षं माह ह्यग्रहीत् ॥२३१३॥
हतशस्त्रः स बलिनस्तस्य दोष्पञ्जरान्तरे । तस्थावचेष्टो निद्रान्धो भूतेनेवासनीकृतः ॥२३१४॥
भ्रातृव्यो भिःखराजाख्यः कुलराजस्य कोपनः । भुभृद्भक्त्या कृपाण्यास्य निर्बिभेद कृकाटिकाम् ॥२३१५॥ 2315
परश्वधेन मूर्धन्येनं पृथ्वीपालश्च ताडयन् । राजबीजी स च क्रोधाद्व्यधिष्यत महाभुजा ॥२३१६॥
कृकाटिकास्थिसंजातमर्मवेधोपचेष्टितः । विवेष्टमानोवर्तिष्ट क्षितौ स रुधिरोक्षितः ॥२३१७॥
महाबलैः कमलियप्रमुखैस्तस्य सोदरः । चतुष्कः पातितोभ्युर्व्यां गण्डशैल इव द्विपैः ॥२३१८॥
विलोक्य वैकल्यहतौ बद्धौ तौ स्वामिनौ तथा । कृष्टासिधेनुकस्तस्थौ द्विजन्मा मल्लकाभिधः ॥२३१९॥
उच्चावचेषु प्रहरत्सु भूपालोपजीविषु । अंतकर्यमाणस्तुमुलं राज्ञैवालक्ष्यतापतन् ॥२३२०॥ 2320

२२९३. [1]) A मा५र्य. २३००. [1]) Emended ; A ज्ञमाः २३०४. [1]) A °बालि°. २३१५. [1]) A भि×ख°. २३१९. [1]) Emended with C ; A स्वामिनी.

नृपान्तिकादापततस्तांस्तान्घ्नन्तं महाभटान् । अधावत्सासिधेनुस्तं कुलराजो महौजसम् ॥२३२१॥
प्रतिप्रहर्तुं क्षिप्रापतत्पाणिमवारयन् । निहन्तुं संहरोधेन भित्तौ व्यायामविस्तृतम् ॥२३२२॥
अपयातुमवस्थातुं प्रहर्तुं वाप्यशक्नुवन् । तस्थौ स बद्धसंधानः संस्तभ्यैनमविक्षतम्[1] ॥२३२३॥
चरणास्फालनोत्फालदोःशब्दमुखरोन्तिकम् । धाविते पद्मराजेथ मल्लकोक्षिपदीक्षणम् ॥२३२४॥
2325 प्राहरत्कुलराजोस्य लब्धरन्ध्रोथ वक्षसि । प्रहृत्य गच्छतः पाणेः स तस्याङ्गुष्ठमक्षिणोत् ॥२३२५॥
तौ बिज्जराजे[1] दर्पोष्णनिबिडे प्रहरत्युभौ । तस्मिन्प्रतिप्रहरति क्षिप्रं प्राहरतां ततः ॥२३२६॥
स जीवन्नभियोक्तॄंस्तांस्त्यक्त्वा दृक्पथमागतम् । चतुष्किकाद्वारगतं राजानं समुपाद्रवत् ॥२३२७॥
लक्षीभूते नृपे शीघ्रमनुधावन्ससंभ्रमम् । चकार कुलराजस्तं स्फिगस्थिक्षतिनिर्जवम् ॥२३२८॥
ततः सर्वैर्वृतो योधैः क्रीडाक्रीडान्स सत्वरम् । हत्वाभजद्वीरशय्यां रक्तस्यन्दोत्तरच्छदाम् ॥२३२९॥
2330 जीवद्व्यापद्गतस्वामिवीक्षितः श्लाघ्यविक्रमः । स एवास्पृहणीयान्तक्षणो वीरैरगण्यत ॥२३३०॥
बहिः कोष्ठकभृत्येषु विद्रुतेष्वदरिद्रताम् । परं जनकचन्द्राख्यो धैर्येणोवाह डामरः ॥२३३१॥
निरायुधो राजभृत्याकृष्यैकस्मात्परश्वधम् । स प्रयुद्धाभवत्स्वं नयन्भूरीन्यमान्तिके ॥२३३२॥
पिपासोस्तस्य चण्डांशुमण्डलं परशुः करे । सुषुम्णासंविभागार्थी शशिखण्ड इवाविशत् ॥२३३३॥
नाद्राक्ष्म नाश्रौष्म वापि बद्धे भर्तरि यत्तदा । कोष्ठकस्य वधूरन्वतिष्ठन्मानवती सती ॥२३३४॥
2335 जीवन्भूयोपि लभ्येत त्वया स पतिरित्यसौ । बन्धूनामवधीर्योक्तिं प्राविशद्धुताशनम् ॥२३३५॥
सभार्ययोषिदाश्लेषतर्षोत्किल्बिषदूषितः । तस्याः सतीलोकगाथाः पादाभ्यां पावितोनलः ॥२३३६॥
वसन्तस्य सुता धन्योदयभ्रातुः पुपोष सा । शुचिर्वंशाभिमानेन न डामरवधूव्रतम् ॥२३३७॥
लवन्यललनाः कुर्युर्वैधव्येपि धनेच्छया । ग्रामकार्यिकुटुम्ब्यादीन्श्रितम्बाभोगभागिनः ॥२३३८॥
मतिव्यामोहनिर्व्यूढवैरूप्यस्याभिमानिनः । तथानुगाभ्यां च कृतं कोष्ठकस्योच्चकैः शिरः ॥२३३९॥
2340 रूढव्रणोपि क्रिमिसाकूनः कैरपि किल्बिषैः । निष्प्राणो गणरात्रेण कारायां कोष्ठकोभवत् ॥२३४०॥
अथ चित्ररथः शोषकृशः कलुषितं नृपम् । श्रुत्वा मल्लार्जुनेनाभूद्भयादत्यन्तदुःस्थितः ॥२३४१॥
पत्नी तस्यैकभार्यस्य प्रिया सूर्यमती सती । परलोकातिथिः पूर्वं विभवप्रतिभूरभूत् ॥२३४२॥
देहे चाप्यहताप्याये गेहे गतपरिग्रहे । पत्यौ धैर्मत्यकलुषे नेषदप्येष विप्रिये ॥२३४३॥
तीर्थस्थितस्य न स्यान्मे सायसोप्यप्रियं नृपात् । इति संचिन्त्य स प्रायान्मिषान्मन्तुं सुरेश्वरीम् ॥२३४४॥
2345 अथ नानार्थभूयिष्ठां धनाधीशाधिकश्रियः । स्थानात्ततस्ततस्तस्य पार्थिवोपाहरच्छ्रियम् ॥२३४५॥
कनकांशुकसंनाहवाजिरत्नायुधादिभिः । स्वा स्वा प्रकाशिता लक्ष्मीः स्पर्धयेवाधिकाधिका ॥२३४६॥
स्वोहद्रोहधर्मोष्मशोषितो राजपादपः । तल्लक्ष्मीशैलतटिनीसेकेनाप्यायितोभवत् ॥२३४७॥
विप्लवे चिरनष्टेपि श्रीकल्याणपुरं न यः । वनवासोचितत्रासः शाल्वः[1] सौभमिवात्यजत् ॥२३४८॥
धृतच्छत्रांशुपूरेणेव चिन्तापाण्डुरवर्तत । बन्दीकृता नरेन्द्रश्रीर्भीर्निद्रा यस्य मन्दिरे ॥२३४९॥

२३२३. [1]) Emended with C; संस्तम्भैनं. २३२६. [1]) Emended; A बिज्जराजौ. २३४८. [1]) Emended; A साल्वः सौभमिवा°; C साल्वी ऽभुमिवा°.

राज्ञा प्रयुक्तं विज्ञाय विजयः स भवोद्भवः । तीक्ष्णमानन्दनामानमवधीत्तेन चावधि ॥२३५०॥तिलकम्॥ 2350
इत्थं स पप्रथे तादृक्प्रजापालनशालिनः । सर्वोत्साहमयोनेहा जयसिंहमहीभुजः ॥२३५१॥
तीर्थस्थिते चित्ररथे पादाग्रग्रहणैषिणौ । भृङ्गारजनकावास्तां तद्भृत्यौ व्यक्तचक्रिकौ ॥२३५२॥
प्रभुरोल्कोचदानेन स्वीकृत्य नृपतिं ययौ । भृङ्गारो मग्रजनकः स्वामिश्रीभोगभागिताम् ॥२३५३॥
चिरप्रज्वलितं द्वारमुदये निदधे पुनः । मेघकालः सरित्पूरं प्रतीर इव पार्थिवः ॥२३५४॥
अवश्यभोग्यदुष्कर्मदत्तमर्मव्यथश्चिरम् । कथाशेषोभवच्चित्ररथो मासैरथाष्टभिः ॥२३५५॥ 2355
हास्यावहोप्यविकृतो विकृतोनपास्यो दुर्गन्धिरप्यनिजडोपि गृहीतवाक्यः ।
पूर्वानुभावजयिनो भवति प्रभावाद्यस्य स्तुमस्तमनिसंस्तवमप्रतर्क्यम् ॥२३५६॥
निर्वैराद्यूतनाथीयैश्चेष्टितैः प्रागभीष्टताम् । बाल्ये दुर्ललितस्यागाद्भर्तुर्भिन्नचेतसः ॥२३५७॥
विसृज्यमानः संप्राप्तसाम्राज्येन दिवानिशम् । क्रमात्स्वीकृत्य ताम्बूलं तेन चित्ररथान्तिकम् ॥२३५८॥
वृत्तैः कृत्यान्तरज्ञत्वं प्राप्तवानाप्ततां गतः । तदन्ते घटयन्नाज्ञस्तद्भृत्यान्कोशदर्शकान् ॥२३५९॥
तदा सर्वोन्नताशेषमन्त्रिशून्ये नृपास्पदे । सज्जकस्यात्मजः प्राप भृङ्गारो मुख्यमन्त्रिताम् ॥२३६०॥चक्कलकम्॥ 2360
तस्य वैधेयताभ्यस्तकुदृष्टेरपि दुष्कृतम् । नागुः पात्रार्पणासुच्छत्यागित्वेनापि संपदः ॥२३६१॥
योषित्कशिपुभोग्येन धन्यंमन्योपि सोभवत् । धान्यदानवदान्यत्वं गुरूणामाजगाम यत् ॥२३६२॥
पीठं कृतवतो रूप्यं संयोज्य रजतैर्निजैः । विद्यमानं सुरेश्वर्यां सायुज्यं तस्य युज्यते ॥२३६३॥
उर्वीशैरपि नार्वाग्भिर्योनुगन्तुमशक्यत । आषाढयामाद्यसंभारो निबिडद्रविणव्ययः ॥२३६४॥
नन्दिक्षेत्रे स तत्राद्यैः प्रणीतश्लक्ष्णपक्वादिभिः । तेन कालानुसारेण पोषितः पञ्चषाः समाः ॥२३६५॥ 2365
नर्माङ्कतायां निःसारो ज्ञातो यः सोधिकारभाक् । अचिन्त्यकृत्यकार्यासीत्स्वामिस्नेहप्रभावतः ॥२३६६॥
केलीसज्जैर्युवतिकरजैः कण्ठभूषादशायां यस्याज्ञायि त्रुटनमसकृत्क्ष्माधरेष्वासकृष्टौ ।
सोप्यादिष्टस्त्रिपुररिपुणा प्राप भङ्गं न भोगी शक्त्याधायी क्वचन न परो भर्तुराज्ञाप्रभावात् ॥२३६७॥
तं च रिल्हणधन्यौ च समाभिन्त्येतरेतरम् । कार्ये जनकभृङ्गारावुल्कोनेनापजह्रतुः ॥२३६८॥
कदाचिज्जनकं बद्ध्वा सार्धं भूषणमौक्तिकैः । सपुत्रदारं भृङ्गारो बाष्पबिन्दूनमोचयत् ॥२३६९॥
स तं च जातु निर्विद्य मानहीनमकारयत् । रूक्षरक्षार्पितोल्कोचधनाभ्यर्थितमैथुनः ॥२३७०॥ 2370
अङ्गुष्ठनखनिर्घर्षनर्तितानामिकोर्मिकः । वदन्वामोत्तरौष्ठामोदञ्चनैः कुञ्चितेक्षणः ॥२३७१॥
भ्रूभङ्गोद्वेल्लितं वलीनिम्नोन्नतललाटभूः । पुनरेकस्तयोर्लब्धकार्यो लोकमहासयत् ॥२३७२॥तिलकम्॥
अव्यक्ताक्षरवाग्मौग्ध्यमीलिताक्षो रटन्बहु । हसन्सकरतालं च संपश्यन्यो व्यभाव्यत ॥२३७३॥
सोल्लेखप्रतिमोद्गीतनत्वानां हास्यवस्तुनि । कथाशरीरं पर्याप्तं नेदृशां किमचेतसाम् ॥२३७४॥
सर्वस्मिन्प्रस्तुतोवाचि काले विगतयोग्यते । जाने तृणनृणां तुल्ये भृङ्गारोर्हत्यगर्वताम् ॥२३७५॥ 2375
यः सर्वकषनिष्कम्पशेमुषीकः क्षमापतिः । धुर्यतां धर्मचर्याभिर्गतः सुकृतशालिनाम् ॥२३७६॥

---

२३५०. [1]) A, ३. २३६०. [1]) A, ४. २३६१ [1]) Emended ; A दुष्कृताम्.—[2]) Thus A ; R G C नागः. २३६२. [1]) A °वदन्य. २३६३. [1]) Emended with C ; A रूप्यं. २३६९. [1]) Emended ; A भृङ्गारं. २३७०. [1]) Thus A ; C emends रूक्षरक्षा°. २३७१. [1]) Emended ; A कुञ्चितेक्षण: ; C कुञ्चितेक्षणः. २३७२. [1]) Thus A ; perhaps read with C °द्वेल्लित°.—[2]) A, ३. २३७४. [1]) Emended ; A °त्वानां.—[2]) Emended ; A न दृशां.

लब्धबोधिरिवार्थैश्चक्रे व्यापद्युपक्रियाम् । दावप्लुतस्य दग्धाङ्गोलाघत्वमिव चन्दनः ॥२३७७॥

गुरुसूरिद्विजान्पथप्रभृत्युचितयापि यः । प्रतिपत्त्या संविभेजे संविभाग्यकुटुम्बकम् ॥२३७८॥

प्रासादान्विजयेशादिदेवमानस्य शुद्धधीः । सुधादानेन निन्ये च धन्यः कैलासतुल्यताम् ॥२३७९॥

2380 मठदेवगृहारामह्रदकुल्यादियोजने । जीर्णोद्धृतिव्यसनिनस्तस्य चिन्ता निरन्तरा ॥२३८०॥

सक्तूद्दीशीतविहेषकार्थैः सब्रह्मचारिणाम्[1] । स क्रौर्यधाम पर्याप्तमीदृगप्युच्यते जडैः ॥२३८१॥

विश्राप्यायनसप्तसिन्धुभरणब्रह्मादिसंप्रीणनप्रायं कृत्यमुदात्तमेकसमयोपात्तेन दुष्कर्मणा ।
स्वःसिन्धोर्लघुतां गतं सगर[1]जश्रेणीवितारार्थिना—[2]ता येन जनाः श्मशानमिव सा योग्या किलास्थ्नां स्थितौ ॥२३८२॥

तदन्तरे[1] शिवरथो द्विजः प्रचुरचक्रिकः । कायस्थपाशः पाशेन गलं बद्ध्वा व्यपद्यत ॥२३८३॥

इत्थं पृथ्वीपतिः कृत्वा तत्तत्कण्टकपाटनम् । अपेतविघ्नं सौजन्यनिघ्नो व्यधित मण्डलम् ॥ २३८४॥

2385 विपक्षावरणापायप्रायेण पृथिवीभुजः । तैक्ष्ण्यमायान्ति जीमूतमुक्ता रविकरा इव ॥२३८५॥

परिणाममनोज्ञत्वं राजत्वं स्वयं नृपः । माधुर्याधिक्यमुत्पाको द्राक्षाद्रुम इवाययौ ॥२३८६॥

प्रावर्तयत सातत्यात्क्रतून्विततदक्षिणान् । विवाहतीर्थयात्रादीन्महितांश्च महोत्सवान् ॥२३८७॥

संविभेजे स्वसंभारैः स क्रिया धर्मचारिणाम् । तेजोभिः कुलशैलानामोषधीरिव चन्द्रमाः ॥२३८८॥

प्रतिशालं सुतोद्वाहप्रतिष्ठादौ पुरौकसाम् । तेनौपयिकसामग्रीदानमव्यग्रचेतसा ॥२३८९॥

2390 दारुणामाकराः कोश[1]वृद्धये ये धराभुजाम् । नवीचक्रे पुरं सर्वं स्वाधीनान्स विधाय तान् ॥२३९०॥

मज्जतो राजकार्येषु तत्त्वविद्भिर्हरार्चने । विस्मितैर्वीक्ष्यते तस्य निष्ठा काष्ठा मुनेरिव ॥२३९१॥

प्राह्णादारभ्य सायाह्न[1]पर्यन्तं चास्य दृश्यते । न तत्कृत्यं गता यत्र नाध्यक्षत्वं विचक्षणाः ॥२३९२॥

अविचारान्धतमसे विद्या व्यद्योतताम्बरा । जयापीडादिमेघश्रीसौदामन्या त्रिलोलया ॥२३९३॥

तेन श्रियं तु विभाज्य स्थास्नु रत्नप्रभामिव । गुणवैचित्र्यचित्रस्य प्रकाशोऽनश्वरः कृतः ॥२३९४॥

2395 सूरयो येन ---[1] विक्षतक्षेत्रसंपदाम् । ग्रामाणामग्रहारेन्दुं[2] सान्वयाः स्वामिनः कृताः ॥२३९५॥

विदुषां वितितोत्सेधसौधास्तद्विहिता गृहाः । व्याप्ताः सप्तर्षिभिर्द्रष्टुमुत्कर्षमिव मूर्धसु ॥२३९६॥

प्रतिग्रामभवे मठोपघ्ने न पथि पान्थता । सार्थवाहं समालम्ब्य निर्दोषा विदुषां स्थिता ॥२३९७॥

आसीद्यथार्थराजस्य शयानस्याप्यतिप्रियः[1] । कामं लिङ्गाभिषेकाम्भःसंक्षोभप्रभवो ध्वनिः ॥२३९८॥

निद्राणस्य तथा वेणुवीणादिपरिहारिणः । दयितं तस्य निर्हेषविद्वज्जल्पविकल्पनम् ॥२३९९॥

2400 काले श्रीललितादित्यावन्तिवर्मादिभूभुजाम् । सिद्धं न यत्प्रतिष्ठादि निष्ठां तदधुना गतम् ॥२४००॥

मठदेवगृहेष्वेव[1] स्वकालप्रभवेषु यत् । सर्वेष्वेव कृता तेन निर्व्यपाया व्ययस्थितिः ॥२४०१॥

रत्नादेव्या वृद्धाङ्कभर्तृवल्लभताभुवः । सर्वप्रतिष्ठाप्रष्ठत्वं विहारः प्रथमं गतः ॥२४०२॥

रिल्हणोऽथ गुणग्रामबान्धवो धर्मपद्धतौ । बभूव पूर्वपथिकः समस्तामात्यसंततेः ॥२४०३॥

---

२३८१. [1]) A °कार्थतब्रह्मचारिणा, evidently corrupt; emendation doubtful. २३८२. [1]) Conjectural reading; A सरगज°; C सुरगज°.—[2]) Thus A; perhaps read °स्वर्गमास्पृता; C °गाम् जाता. २३८३. [1]) Emended; A °न्तरं. २३९०. [1]) A कोष°. २३९२. [1]) A साचाह्न°. २३९५. [1]) $A_1$ indicates a *lacuna* of three *aksharas*; C supplements संप्राप्ते.—[2]) Emended with G (*ex. manu*); A °ग्रहा×कन्दु. २३९८. [1]) Emended; A °प्यतिमिवः; cf. the passage ii. 126, to which evidently reference is made here. २४०१. [1]) Perhaps read °ष्वेवं.

तपोधनांल्लब्धवर्णान्धर्मवृद्धांश्च शुद्धधीः । विलम्भभवनस्थोपि शक्तस्त्यक्तुं न यः क्वचित् ॥२४०४॥[1]
कृष्णाजिनोभयमुखीदानमुख्यैः शुभकर्मभिः । धर्मकन्याविवाहैश्च यस्याभून्यस्त्वमायुषः ॥२४०५॥ 2405
सर्वेषामाहिताग्नीनां निष्प्रत्यूहा महात्मना । सर्वयागोपकरणैर्येन विभाणिताः क्रियाः ॥२४०६॥
भोगान्बुभुजिरे भव्यान्सत्त्रे स्तिमितविस्मये । यस्य वर्णाश्चतुःषष्टिः कुटुम्बस्पृष्टचेतसः ॥२४०७॥
अग्रहारगणोदग्रैर्वितीर्णैर्मठसेतुभिः । पुरे परिष्कृते येन द्वयोः प्रवरसेनयोः ॥२४०८॥
आद्ये प्रवरभूभर्तुः पत्तने प्रस्तविस्मयः । प्राप्तः प्रतिष्ठाप्रष्ठत्वं यत्कृतो रिल्हणेश्वरः ॥२४०९॥
लोकान्तरगतां कान्तां कृतिनोद्दिश्य सुस्सलाम् । भल्लेरकप्रपास्थाने[1] विहारस्तेन कारितः ॥२४१०॥ 2410
मार्जार्यास्तिर्यगुचितचेष्टाविस्मृत्यपोहतः । मृतामनुमृतायास्तन्नाम्ना यः ख्यातिमागतः ॥२४११॥
तद्भर्तुरीर्ष्याकालुष्ये तस्या दूरागमा पुरः । प्रदेशे मानुषीवासीत्प्रिया क्रीडाबिडालिका ॥२४१२॥
तीर्थप्रस्थानदिवसादारभ्यास्या विराविणी । उत्सृजन्त्याहृतं[1] भोज्यं सा भुक्त्वा जीवितं जहौ ॥२४१३॥
आरोहति परां काष्ठां प्रतिष्ठाविविधाध्वना । दिद्दा नृपतिपत्नीषु मन्त्रिस्त्रीषु तु सुस्सला ॥२४१४॥
श्रीचङ्कुणविहारं या यातं नामावशेषताम् । अश्मप्रासादवेश्मादिकर्मणा निर्ममेधुना[1] ॥२४१५॥ 2415
अरघट्टप्रबन्धाम्बुच्छात्त्रशालादिकर्मभिः । तस्याः संपूर्णतां पुण्यप्राकारा निखिला गताः ॥२४१६॥
पूर्वराजकुलाखण्डस्थण्डिलव्यापिनाखिलम् । तद्विहारेण नगरं नीतं नेत्राभिरामताम् ॥२४१७॥
प्रापि प्रतिष्ठयेत्राशु यत्समक्षपितया तया । विपश्चिः श्रीसुरेश्वर्या प्राज्यसायुज्यदूतिका ॥२४१८॥
मठाग्रहारा धन्येन वल्लभाभिधया कृताः । नाभीष्टं लेभिरे नाम ख्यातिः पुण्यैर्विना कुतः ॥२४१९॥
अग्रहारमठांस्तद्वदुदयः कम्पनापतिः । कृत्वापि स्वाभिधामेव तत्संबद्धां सदाभृणोत् ॥२४२०॥ 2420
उदयद्वारपतिना सह ब्रह्मपुरीगणैः । कृते प्रष्ठे मठे शोभां लेभे पद्मसरस्तटः ॥२४२१॥
भृङ्गारतन्त्रपतिना श्रीद्वारेप्यग्र्यजन्मना । प्रत्यष्ठापि मठोद्यानदीर्घिकाद्यनघात्मना ॥२४२२॥
स्नानकोष्ठमठब्रह्मपुरीसेत्वादिकर्मणा । सोलंचकारालंकारो बृहद्गञ्जाधिपो धराम् ॥२४२३॥
बुधः सद्गौषधीशान्तिहेतोर्जातः कलावतः । यः कविर्दानवत्त्वं च ख्यातस्त्यागेन योजयत् ॥२४२४॥
नृसिंहसेवी निर्हिंसहिरण्यकशिपुप्रदः[1] । वराहसमये दत्तगौश्च योपूर्ववैष्णवः ॥२४२५॥ 2425
भट्टारकमठाभ्यर्णे पूर्णवार्थीश्च प्रहिः । मठः भृङ्गारभट्टस्य ख्यात्यानैश्चित्त्ययोज्झितः ॥२४२६॥
सांधिविग्रहिको दार्वाभिसारोर्वीभुजोकरोत् । अष्टमूर्तेर्जहनामा प्रतिष्ठां पुण्यकर्मठः ॥२४२७॥
पुष्पाकरप्रणयभूः सुभगा विभूतिरेकस्य हन्त करवीरतरोर्द्रुमेषु ।
पुष्पाणि यस्य सफलीकुरुते स्वयं तत्प्रादुर्भवत्किमपि लिङ्गमनङ्गशत्रोः ॥२४२८॥
त्रिभूत्या संविभक्तेषु भूभुजाखिलमन्त्रिषु । उत्कर्षकोटिं[1] भुट्टाख्यः परं अल्हानुजोर्हति ॥२४२९॥
स्वयंभूः प्रकटीभूय पूजां स्वीकुरुते स्वयम् । ज्येष्ठरुद्रो वसिष्ठस्य यस्य वा बालकेश्वरः ॥२४३०॥ 2430
सविहारमठोदग्रवेश्मभिः कलुषोज्झितम्[1] । तेन तत्र कृतं भुट्टपुराख्यं पुटभेदनम् ॥२४३१॥

---

२४०४. [1]) Emended with C; A सपोधनाॡ°. २४१०. [1]) Thus A; cf. vii. 1239, where बलेरकप्रपा°. २४१३. [1]) Emended with C; A उत्सज°. २४१४. [1]) Emended; A °भुना. २४२५. [1]) Doubtful emendation; A °कशिपुप्र:, without indicating the *lacuna*; C °कशिपुच्छिद्र:. २४२९. [1]) Emended; A उत्कट्टकोर्टि. २४३१. [1]) Emended; A °घोज्झित:.

नगरेपि हरः प्रत्यष्ठापि भुट्टेश्वराभिधः । सरथ मडवाग्रामे धर्मविभ्रमदर्पणः ॥२४३२॥
नीत्वा प्रतिष्ठां वैकुण्ठमठादि स्वविहारभूः । रत्नादेव्या दृढं चक्रे स्वार्थमथनद्धस्थिरा ॥२४३३॥
रत्नापुरे बहुद्वारमहार्घे निरघो मठः । धत्ते सुकृतहंसस्य स्फीतवीतंसविभ्रमम् ॥२४३४॥
2435 मृत्युंजयो राजतेस्याः सुधाधौतान्भजन्गृहान् । जनस्यानित्यतोच्छित्त्यै श्वेतद्वीपं सृजन्निव ॥२४३५॥
गोकुलानां विधातारो गोकुले विहिते तया । गणिताः शूरवर्माद्याः सतृणाभ्यवहारिणः ॥२४३६॥
गवामभ्याहतस्वैरसंचारचरकाङ्किते । तत्र वैतस्ततोयाढ्ये यदपोढामयं वपुः ॥२४३७॥
मुकुन्दस्तत्र साश्चर्यसौन्दर्यौदार्यमन्दिरम् । अश्वा गोवर्धनधरः सिद्धो ना विश्वकर्मणः ॥२४३८॥
मठ – – – कृत्वा सा नन्दिक्षेत्रेकरोत्स्थितिम् । – – जयवनाद्येषु स्थानेषु च मनोरमान् ॥२४३९॥
2440 दार्वाभिसारेप्युर्वीशसुन्दरौदार्यमन्दिरम् । स्वनामाङ्कं पुरं चक्रे तया शाक्रपुरोपमम् ॥२४४०॥
उद्दिश्योपगतान्मान्यमहत्तरमुखानपि । प्रतिष्ठा विविधाश्चक्रे सा राज्याश्रितवत्सला ॥२४४१॥
एवं सर्वाङ्गमामुक्तालंकृतेरथ स क्षितेः । विशेषकाभं भूभर्तृत्रपा स्वमकरोन्मठम् ॥२४४२॥
अनुत्सिक्तेन यो दत्तभूरिग्रामो महीभुजा । तच्छैरारोपितः ख्यातिं मुख्यः सिंहपुराख्यया ॥२४४३॥
व्यधात्स्कारपथेशस्य दौहित्रः सिन्धुजान्द्विजान् । निविडान्द्रविडांश्चात्र प्राक्सिद्धच्छत्रमध्यगान् ॥२४४४॥
2445 किं वा मठादिनिर्माणस्तुत्या तस्य व्यधत्त यः । भूयः सग्रामनगरं कृत्स्नं कश्मीरमण्डलम् ॥ २४४५॥
जीर्णारण्यसधर्मायं कालदौरात्म्यतो भवन् । देशो धनजनावासैस्तेन भूयोपि योजितः ॥२४४६॥
आरम्भात्प्रभृति क्ष्मापे दीक्षितेभीष्टदात्तिषु । शिल्पिप्रायैरपि प्रायो मठदेवगृहाः कृताः ॥२४४७॥
सत्कोशांशुकरत्नादौ निरसूयेन भूभुजा । साधारणीकृते पौरास्तांस्तांश्चक्रुर्महोत्सवान् ॥२४४८॥
अकाण्डतुहिनापातोदीपाद्यैरप्युपद्रवैः । नष्टेषु शालिषु क्षीणं सुभिक्षं तत्र न क्षणे ॥२४४९॥
2450 अद्भुतं चाभवद्रात्रः श्रुता यन्निशि रक्षसाम् । केत्वाद्युत्पातजातं च दृष्टं नष्टाश्च न प्रजाः ॥२४५०॥
कोष्ठेश्वरानुजश्चक्कुकुनामा विहितविप्लवः । आहवैर्गूढदण्डैश्च राज्ञा निन्येन्तकान्तिकम् ॥२४५१॥
चक्रे विक्रमराजादीन्भूपानुन्मथ्य पार्थिवः । प्ररोहं गुल्हणादीनां राज्ञां वल्लापुरादिषु ॥२४५२॥
प्रजेशान्कान्यकुब्जादावजय्येण नृपार्यमा । स व्यधाद्रव्यभूभोगवैभवानभिमानिनः ॥२४५३॥
विद्योतमाने निश्चौर्यैर्मन्त्रिस्तत्रैवमेकदा । भेजे जीवितदारिद्र्यं दरद्राजो यशोधरः ॥२४५४॥
2455 स भूम्यनन्तरोप्यन्तरज्ञो राज्ञोतिसेवया । विपत्तौ प्रकृतिक्रान्तसंतानश्चिन्त्यतामगात् ॥२४५५॥
निकृत्यास्य निजामात्यो विड्डसीहाभिधो यतः । संभुज्य दयितां राज्यमग्रीहतनयेग्रहीत् ॥२४५६॥
वशीकृत्य शनैर्देशं नाममात्रनृपं शिशुम् । उच्छेत्तुमैच्छद्यावत्तं स जिघृक्षुः स्वयं क्षितिम् ॥२४५७॥
अन्योमात्यः पुरस्कृत्य यशोधरसुतं परम् । तावत्तेन समं भेजे पर्युकाख्यो विपर्ययम् ॥२४५८॥युग्मम् ॥

---

२४३८.—२४३९. [1]) The last two *pādas* of verse 2438 and the following verse are found in the above, mutilated form in A at the foot of fol. 290, having been added subsequently by $A_1$; C reads: मठप्रतिष्ठां कृत्वा सा नन्दिक्षेत्रेऽकरोत् स्थितिं । विहारान् यवनाद्येषु स्थानेषु च मनोरमान्. २४४०. [1]) The first two *pādas* of this verse have been subsequently added by $A_1$ at the top of fol. 291.—[2]) Emended; A दार्वासारे°; C दार्वागरिष्वप्यु°. २४४५. [1]) Emended; A सद्गाम°. २४४९. [1]) Thus $A_1$ originally; corr. by $A_1$ to शालिष्वक्षीणं. २४५१. [1]) Emended with C. A निन्येऽन्तिका°. २४५३. [1]) Emended; A प्रजेशा×का°. २४५८. [1]) $A_1$ २. २४५७. [1]) Emended; A °मात्रशिशुं नृपम्.;

कश्मीरान्पृष्ठतः कृत्वा द्वैराज्यं तत्र कुर्वति । उत्सृज्य सज्जपालादीन्सर्वकार्यभरक्षमान् ॥२४५९॥
देवाकप्रतिपक्षान्याभिधमौग्ध्यनिरुद्धधीः । सर्वाधिकाराधारोपान्मन्यमानोभिमानिताम् ॥२४६०॥ 2460
पर्युकाजर्यतः साज्जेरभीष्टमनुजं निजम् । प्रविष्णतोनुमन्त्रित्वं मन्त्रज्ञोप्यभजन्नृपः ॥२४६१॥तिलकम्॥
अपूर्वमण्डलारम्भाघाटोपाडामशालिनः । क्व सर्वंकषनिष्कम्पप्रतिभाः कार्यवेदिनः ॥२४६२॥
क्व बालबालिशप्रायो नष्टव्यवहृतिर्जनः । धिक्परीपाकविषमं स्वाच्छन्द्यं मेदिनीभुजाम् ॥२४६३॥युग्मम्॥
कार्यापेक्षविपक्षैः स्वैरिच्छन्त्युद्रिक्तताच्छिदाम् । सैन्यस्मादुर्गकोशादेर्न - शान्त्यन्तरज्ञताम् ॥२४६४॥
प्रक्रियामात्रतो मन्त्रं गृह्णन्ति क्षितिपान्तराः । कृतसाहायकैरेव भित्त्वा मित्रमुखा द्विषः ॥२४६५॥ 2465
युध्यारब्धविधौ तत्र वैरिसाहायकग्रहे । क्व वैधेया बकमायाः कार्यसंदर्भवेदिनः ॥२४६६॥
दरद्राजद्रुमोऽन्योन्यभेदकूलक्षयाच्युतः । कष्टुं नाशक्यतामीडैः स्रोतोभिरिव मध्यगः ॥२४६७॥
पर्युकात्संकटे कार्ये तं समुत्कोचमिच्छतः । स दुग्धघातमादातुमभ्यासीदलसक्रमः ॥२४६८॥
पर्युकेण समं विड्डसीहः संधिं निबद्धवान् । यथागतं गते साज्जौ कश्मीरेन्द्रे महीक्षुधम् ॥२४६९॥
सर्वाधिकारप्रथमाचिरसंचारभूरुहः । प्रसङ्गे तत्र भृङ्गारो मृत्युसौहित्यकार्यभूत् ॥२४७०॥ 2470
आ लक्ष्मकान्तात्सर्वाधिकारोऽस्याद्द्वितीयता । कृत्वा ततस्तु शतधा निर्झराम्भ इवाभवत् ॥२४७१॥
अन्येप्यमात्याः सामत्याद्भर्तुर्माहात्म्यभागिनः । प्रमर्ष समये तस्मिन्दैवात्किमपि लेभिरे ॥२४७२॥
प्रशंसामानृशंसस्य किं विदध्मो धराभुजः । मृतामात्यार्भकापत्यं निधत्ते यः पितुः पदे ॥२४७३॥
प्रवर्तिता स्वमात्यानां भृत्यैः पद्धतिरञ्जुना । निर्वैलक्ष्याः प्रभोर्लक्ष्मीं जहुः स्वगृहिणीमिव ॥२४७४॥
भूभर्तुः प्राभृतीकृत्य मृतस्य स्वामिनः श्रियम् । संतानस्य विभूत्यर्थं कृत्वा कार्यं हि तेहरन् ॥२४७५॥ 2475
गञ्जाधिपे त्रिभ्वनाम्नि विपन्ने रक्षिता परम् । एकेन सहजाख्येन सहायानां महार्घता ॥२४७६॥
नाध्यारुरोहाधिकारं पार्थिवेनार्थितोपि यः । स्वामिद्रोहोच्छिष्टनाम्नो बुद्धौ साहायकं व्यधात् ॥२४७७॥
निष्ठायामप्रतिष्ठत्वं दृष्ट्वापि प्रभविष्णुभिः । धिक्परंपरया भृत्याः प्रावर्धन्तेधिकाधिकम् ॥२४७८॥
आसीदाचमनोपयोगि कलशे भ्रूर्भुजंगलक्ष्मक्रान्ताङ्घ्रिमहार्घयाद्वुरविपोस्त्रैस्रोतसं यत्पयः ।
शंभुस्तद्विदधे स्वमूर्धनि जडेष्वेकप्रयुक्तावृतौ स्युः सर्वेप्यवशा गतानुगतया गाढादराः स्वामिनः ॥२४७९॥
सुज्जिनिर्वासनप्राप्तप्ररोहो दुर्नयद्रुमः । साज्जिजायाकृतात्त्वायः क्रमेणासीत्फलोन्मुखः ॥२४८०॥ 2480
हिमाः समाः समन्युः स विड्डसीहस्ततोभवत् । अकुण्ठराज्यायुत्कण्ठं दूतैरकृत लोठनम् ॥२४८१॥
दूरादखण्डितोत्थानः प्रूरमाश्रित्य भूपतिम् । जीर्णस्कृषिवाणिज्यादिकर्मणा स सवान्धवः ॥२४८२॥
दरदां मन्त्रिणां जातज्ञानैर्वैरभियोगभाक् । चक्रेलंकारचक्राद्यैर्डामरैः सह चक्रिकाम् ॥२४८३॥युग्मम्॥
सोप्यद्रिदुर्गस्वाम्यस्य प्रथमप्रस्थितौ स्फुरत् । क्षुद्रो जनकभद्राख्यः पार्श्वं लिप्सोर्व्यपद्यत ॥२४८४॥
कर्णाटकादावभवस्त्याने स्थाने विलोक्य तम् । प्रस्थितं कस्यचिद्द्रोहे बुद्धिः कस्यापि साधुता ॥२४८५॥ 2485

२४६१. [1]) Emended; A सज्जे°.—[2]) A, ३. २४६३. [1]) A °बालि°.—[2]) A, २. २४६४. [1]) Thus A; perhaps read विषा-न्तज्ञस्य°, C न शंसन्त्य°. २४६६. [1]) Emended; A apparently वैधेयाश्चकमायाश्कार्य°, as read in R C. २४६७. [1]) Emended; A °न्योन्य भेद°. २४६९. [1]) Emended; A सज्जौ. २४७१. [1]) Emended with G (*sec. manu*); A निर्भरा. २४७३. [1]) Emended with C; A °मात्यर्भका°. २४८०. [1]) Emended; A सुज्जिर्नि°. २४८२. [1]) A दूरा-खण्डि°.—[2]) Emended; A जीर्णस्कृषि°. २४८३. [1]) A, २. २४८४. [1]) Doubtful emendation; A साप्यद्रि°.

तं तथा विपुलारम्भमपि शाश्वादसंभ्रमम् । प्रविविक्षुर्मुपैक्षिष्ट कौसीद्यानुगमो नृपः ॥२४८६॥
पोषिते प्रेषितश्रीकैरुत्पिञ्जे विग्रहैर्दिभिः । अथोदयद्वारपतिः सैवि विश्वंभराभुजा ॥२४८७॥
संगृह्णता चमूस्तेनं पुरे शंकरवर्मणः । ग्रामोलंकारचक्रस्य पार्श्वमभावि लोठनः ॥२४८८॥
अपि विग्रहराजाख्यः सूनुः सुस्सलभूपतेः । भोजः सल्हणजन्मा च भुतौ तेन सहागतौ ॥२४८९॥
2490 अथोपह- - स्थान एव तेषां स सत्वरः । मार्गं बहुदिनोल्लङ्घ्यमेकेनाह्ना व्यलङ्घयत् ॥२४९०॥
सयूथ्यकन्थायथनाखिडेर्यातो विधेयताम् । तदास्कन्दहतस्पन्दः स पलायिष्ट डामरः ॥२४९१॥
सिन्धोर्मधुमतीमुक्ताभिया अन्तःस्थितं ततः । शिरःशिलाभिधं कोट्टमथ तैरधिशिश्रिये ॥२४९२॥
गहने गुडितः कोट्टे स्थितः किं वा स इत्यसौ । न निश्चिकाय द्वारेशो भाम्यन्दीर्घासु भूमिषु ॥२४९३॥
अथोपालब्धतदुर्गारोहणेऽस्मिन्नशङ्कयत । दैवेनापि न भूभर्तुः प्रभावो निष्पराभवः ॥२४९४॥
2495 उत्थानोन्मुखतां सर्वेऽप्युत्पिञ्जे तत्र दस्यवः । पाल्वलास्तिमयो वर्षपृथक्कृत इवाभजन् ॥२४९५॥
तैस्तिल्लकादिभिर्गूढवैकृतैरथ लोठनः । पार्श्वीहरिः[2] पुनश्चक्रे मायाचतुरचाक्रिकः[3] ॥२४९६॥
पुरग्रामादिदग्धारमसाध्यमथ धावताम् । पदे पदे कृच्छ्रगतं स्वपक्ष्यास्तमरक्षिषुः ॥२४९७॥
दिक्चक्रे निपतेर्भाम्यन्नश्वारूढः स सर्वतः । कल्पान्त्ययोदयी ब्रह्मपुत्रः केतुरिवाभवत् ॥२४९८॥
भ्रान्तैरमात्यैर्निर्बन्धे संधौ कालानुरोधतः । मेने मडवराज्योर्वी हारितेवाखिला जनैः ॥२४९९॥
2500 असंवृत्तप्रतीकारतयारोहत्सु वैरिषु । तदन्तरेव संमन्त्र्य धन्यं प्रास्थापयन्नृपः ॥२५००॥
तत्स्कन्धारोपिते कार्ये मीडां गच्छेत्तटस्थताम् । विपर्यासमय द्वाराधीशं इत्यभ्यधाज्जनः ॥२५०१॥
भिक्षुर्मल्लार्जुनस्त्वासीदेक एव प्रवयस्त्वमी । संहता हन्त दुःसाधा दस्युभिर्व्यखिलाः प्रजाः ॥२५०२॥
द्वाराधिपस्त्वहेवाकव्यवहारो महीपतेः । सिद्धिं स्वस्यामसिद्धयापि वाञ्छन्नद्योगमोभवत् ॥२५०३॥
एकाकी यः किल न भजते मूढतां भर्तृकार्ये नौदासीन्यं श्रयति च रुषा बद्धधीने च तस्मिन् ।
निर्हेवाकव्यवहृतितया साध्यसिद्धिं किलेच्छंस्तावृङ्मन्त्री प्रभवति परं नाल्पपुण्यस्य राज्ञः ॥२५०४॥
2505 पद्मचन्द्रे मृते तस्यानुजं राजोपवेशने । न्यधाद्यं पद्मचन्द्राख्यं सोप्यारब्धैं विनिर्ययौ ॥२५०५॥
द्विबाहुकादयो मुख्य- - -[1]: सह गायकैः । धन्यमेवान्वयुर्बाह्याश्चान्ये राजोपजीविनः ॥२५०६॥
धन्यादिषु तिल्लग्रामं कोटसिन्धुतटाश्रयम् । अथ- - -[1]द्वारेशो द्रङ्गस्थः पृष्ठपद्धतीः ॥२५०७॥
हठप्रवेशायोग्याजिमुक्त्यहेवाकवर्जितः । शोषयन्निहृषतो धैर्यगम्भीरं स व्यवाहरत् ॥२५०८॥
कुठारिकादिभिः कारुवृन्दैर्मन्दिरपद्धतीः । धन्यो मधुमतीतीरे नगरस्पर्धिनीर्व्यधात् ॥२५०९॥
2510 निर्ध्वान्तं द्रुमसंबाधं सनिकेता वनस्थलीः । कटकं सर्वभोगाढ्यं शक्तः परिवृढोऽकरोत् ॥२५१०॥
देशो भूरितुषारोऽपहिमर्तौ भाग्यसंपदा । भूभर्तुरभियोग्यैव भूरभूद्यानुभूषिता ॥२५११॥
भुवनाद्भुतसंभारप्रेषणं विजयैषिणः । द्वैराज्यमीलिताशेऽपि काले राज्ञो न खण्डितम् ॥२५१२॥

२४८८. [1]) Emended; A च मूलेन. २४८९. [1]) Emended; A सुल्हण°.—[2]) Emended with C; A °गता. २४९०. [1]) Thus A; perhaps read अथोपहत्या उत्थान; cf. viii. 2513; C अथोपचित उत्थान. २४९२. [1]) Conjectural reading; A °भियान्त-स्थितं; C (*sec. manu*) °भिय अन्तो स्थितं. २४९५. [1]) Doubtful emendation; A °भवन्. २४९६. [1]) Comp. for this name viii. 2799. 2912. 3313.—[2]) Emended; A पा- हरिः; cf. viii. 2748. 2750. 2793. 2837.—[3]) Emended; A °चक्रिकैः. २५०१. [1]) A तत्स्कन्धा°. २५०६.[1]) A does not indicate the *lacuna*; C मुख्यास्त्वारणैः. २५०७.[1]) Thus A; perhaps read with C अथास्त्वन्यगच्छद्वा°.

उत्थान एवोपहर्ति[1] भवे यात्यत्यगात्यरम् । भारोद्दिपीडितप्राभ्याक्रन्दः क्षान्तिचर्कपमाम्[2] ॥२५१३॥

दीर्घप्रवासनिर्वेदाचलितान्दर्शयत्नुपम्[1] । स्थास्नूंश्च तोषयन्दायैः स्थैर्ये निन्ये नृपश्चमूः ॥२५१४॥

इत्थं त्रिचतुरान्मासांस्तिष्ठद्भिरपि निष्ठुरैः । नैवादातुमशक्यन्त कटकैः कोट्टसंश्रयाः[1] ॥२५१५॥ 2515

तेषां हि वीवधासारनिरोधादीनि कुर्वताम् । अप्रियाणि न जातानि दैन्यदायीनि कानि चित् ॥२५१६॥

त्रिकोटीश्वरसुधारान्ते स्वविभूतिप्रकाशनम् । तस्थुरङ्कुरितोल्लासाः पर्वता इव डामराः ॥२५१७॥

कृषिं कृषीवलैर्वेदपाठमुत्सृज्य च द्विजैः । उत्पिञ्जसज्जैर्ग्रामेषु सर्वतः शस्त्रमाददे ॥२५१८॥

प्रतीक्षमाणाः प्रालेयप्रलयं मार्गभूभृताम् । दारदास्तुरगानीकैः सज्जैस्तस्थुर्जिगीषवः ॥२५१९॥

मिहिकासंहतेः कालतूलतल्पाकृतेर्दधत् । पातभीतिं जनो राजसेना शश्वदवेपत[1] ॥२५२०॥ 2520

इत्थं प्रत्यर्थिसामर्थ्यपरमार्थापरीक्षणात् । क्ष्माभृन्मिथ्यैवमारेभे संदेहं च जयेऽभजत् ॥२५२१॥

वैदग्ध्यदिग्धमनसामयमेक एव कोऽप्यस्ति बन्धनविधेरुचितः प्रकारः ।

येनात्मना किल विशङ्कितशक्तयस्ते मुग्धेऽपि वैरिणि विचारहतोद्यमाः स्युः ॥२५२२॥

प्रयादमात्रसाराणस्त्रसेत्परिकरादरैः । स्वयैव तस्य भिद्येत सिद्धिश्चिन्तान्धया धिया ॥२५२३॥

विध्येदाशु शिलीमुखैः प्रचितरेत्पत्त्रैरवस्कन्दनं बध्नीयात्तदिदं गुणैः परिकरैर्मिथ्या प्रसिद्धैरिति ।

स्याच्चेदम्बुरुहं द्विपस्य भयकृच्चिन्तासहैः साहसं प्रत्यूहेत ततो निजैरपघनैरप्येतदुन्मूलने ॥२५२४॥

लोठनार्थोहि कर्णाहान्निस्तीर्णैस्तैः कथंचन । प्राप्तेऽलंकारचक्रेऽपि राज्यमशायि निर्जितम्[1] ॥२५२५॥ 2525

मिथ्यैव मन्त्रिणा कन्था स्वयूथ्यैः कथमन्यथा । तस्मिन्नमन्दमास्कन्द धावन्द्वाराधिपो ददौ ॥२५२६॥

प्रत्यवस्थित्यसामर्थ्यात्ततः कोट्टं व्यसर्जयत् । स राजवीजिनस्तांश्च परेद्युः स्त्रयमन्वगात् ॥२५२७॥

कोट्टाद्रिः सलिलस्यान्तः कृशोर्ध्वः[1] पृष्ठदैर्घ्यभाक् । स तैर्वैसारिणं[2] प्रासध्यमो बक इवेक्ष्यत ॥२५२८॥

निःसामर्थ्यं तद्विलोक्य गजागारमिवागजम् । तत्यजुर्विजयाशंसां भयं चोदवहन्हृदि ॥२५२९॥

ततः शरैर्दूरपङ्क्तैर्बाध्याश्चेतो विरोधिनः । अर्गलो रक्षणमितो रक्ष्या यन्त्रोपला इतः[1] ॥२५३०॥ 2530

इत्थं स तैरभिदधद्भिर्यादाराय डामरः । मेने स्वगुप्तिमार्थी न युद्धे बद्धनिश्चयः ॥२५३१॥ युग्मम् ॥

ततः कन्दलितास्कन्दे तिलग्रामे द्विषद्बले । प्रतीकाराक्षमे दस्यौ ते चिन्ताक्षामतां दधुः ॥२५३२॥

विश्वावित्तुलपञ्चाशीलोत्रो लोठनः पुनः । डामरं कृत्यसंपूर्णमगूढं तमगर्हत ॥२५३३॥

भोजं[1]स्तुद्विजितं यश्चो द्रोहो दोहेदिति ब्रुवन् । हत्वा पितृव्यं तं व्याजस्तुत्या नित्यमुपाचरत् ॥२५३४॥

विमुखे लोठनेकुण्डशाद्यस्तस्य तु सान्त्वनैः[1] । मेने मन्त्रज्ञतां किंचित्सोऽवर्तिष्ट[2] च संविदि ॥२५३५॥ 2535

हन्यान्मां भूभृदित्येव यातेष्वेतेषु संत्यजेत् । नास्मानुक्त्वेत्यरोत्सीत्स पितृव्यं गमनार्थनात् ॥२५३६॥

स्वय्यस्माद्व च सर्वेषु वेष्टितेषूत्कटा द्विषः । पृष्ठकोपमसंभाव्य कुतश्चिन्निश्चलोद्यमाः ॥२५३७॥

---

२५१३. [1]) Doubtful emendation; A एवोपहर्भव; C एवोपहतभवे.—[2]) Emended; A °क्रन्दः क्षान्ति° (the letter क्र is of unusual shape and resembles द्द्र); C क्षान्तिचर्म°. २५१४. [1]) Emended; A चलिता; another possible emendation would be चलिता दर्शयन्नुपम् । स्थास्नूंश्च. २५१५. [1]) Emended; A संश्रयाः. २५२०. [1]) Emended with G (sec. manu); A हिमिका°. २५२५. [1]) Thus A; cf. कर्णाहका° viii. 2485. २५२८. [1]) Emended; A कृशोर्धः.—[2]) Emended with C; A तैर्वैसारण°. २५३०. [1]) Emended; A शरैर्द्दिपद्द°. २५३१. [1]) Emended; A तैरभिदधद्भि°; C तैरभिदधद्भिर्याचयत°.—[2]) A₁ २. २५३४. [1]) Emended; A भोजं; R भोजो. २५३५. [1]) Emended; A सान्त्वनैः; C सान्त्वने.—[2]) Doubtful emendation; A °स्तवर्तिष्ट च; C °स्तमवर्तिष्ट सं°.

यथाविद्व्युः सिध्येत्तस्तदेकं त्वज मामितः । अन्यांश्च तन्यानानीय दरदो वा जवेन वः ॥२५३८॥
बन्धनं त्वपनेष्यामि युक्तमित्युक्तवांश्च तम् । डामरं विदधे किंचिदिव सांमत्यमाश्रितम् ॥२५३९॥
2540 विमोक्ष्यामि क्षपायां त्वामद्य श्वो वेति तं ब्रुवन् । स त्वसंक्षीणदाक्षिण्यो विप्रलेभे प्रतिक्षणम् ॥२५४०॥
अध्वरोधे ह्रदूरस्थैर्यावदक्रूरैरिभिः । वाग्भामाद्यैरथैस्ते त्वहान्यत्यवाहयन् ॥२५४१॥
दुरुदर्कमथाशङ्क्य समयं ते व्यजिज्ञपन् । धन्यादयोहितैः संधिर्विधेय इति भूपतिम् ॥२५४२॥
नैस्तैर्निमित्तैः संधानमविधेयं विदन्नृपः । तानादिदेश कर्तव्यं कोट्टाट्टालकवेष्टनम् ॥ २५४३ ॥
संदिदेश च दायादा यन्त्रेरन्त्यातिमागताः । निजास्पदे नाक्रमति दुर्गोत्कोचेन डामरे ॥ २५४४ ॥
2545 भूत्वा कठोरैर्प्यारम्भानिष्ठा निःसौष्ठवा ध्रुवम् । क्रियातिपत्त्युपालम्भैर्यास्यामोनुशयं विशाम् ॥२५४५॥ ॥
नास्त्यक्षहर्षदेवध्वंसप्राग्यामान्युद्यमे ततः । दुग्धप्रवाहं प्राप्स्यत्स्वं भुक्त्वेत्यन्योपि तप्यते ॥२५४६॥
प्रागभ्यं प्राप्तवान्सर्वो निजैः कृत्यैः शुभाशुभैः । क्रियातिपत्तिर्लोकेऽस्मिन् त्रैलोक्यं तु मुखेर्प्यते ॥२५४७॥
पादेषु पक्षेषु च सत्सु नोर्व्यां न व्योम्नि वा पक्षपिपीलकस्य ।
पङ्ग्वन्धवच्चङ्क्रमणं तु गर्ते किं संपदा स्यान्नियमे गतीनाम् ॥२५४८॥
सहस्रपादस्य गतेर्निमित्तमनूरुभावेप्यरुणः प्रजातः ।
तस्याभविष्यद्यदि पादयुग्मं ततोधिकं तत्किमिवाकरिष्यत् ॥२५४९॥
2550 अपेक्ष्य साक्षितां तस्मात्कृत्स्नं कोट्टं विवेष्ट्यताम् । प्रयातु तत्रैवास्माकं तेषां च पुरुषायुषम् ॥२५५०॥
अविश्रान्तो वातो दहन इव सोयं जनयति प्रसक्तिं सातत्याद्दलयति कुलाद्रीनपि जलम् ।
प्रसूते कृत्येषु व्यवसितिरनिर्व्यूढसुदृढा फलावाप्तिं लोके प्रतिकलमसंभाव्यविभवाम् ॥२५५१॥
क्रूरां नरपतेराज्ञां श्रुत्वा धन्यादयस्ततः । कोट्टप्रतोलीं कूलं तं त्यक्त्वाप्यारुरुहुर्जवात् ॥२५५२॥
कथं युद्धं विधास्यन्ति कथं स्थास्यन्ति वेति तान् । शराङ्किरन्तः कोट्टस्था यावत्प्रैक्षन्त कौतुकात् ॥२५५३॥
अधः सोप्यूर्ध्वगान्युद्धैर्निष्पीड्य निविडैर्व्यधात् । धन्यः प्रदेशं तावत्तं निकेतैः पत्तनोपमम् ॥२५५४॥युग्मम् ॥
2555 अविश्रान्तैस्ततः संख्यैरसंख्येयथमूक्षयः । प्रतिक्षणं प्रववृते सैन्ययोरुभयोरपि ॥२५५५॥
परेद्युः शारदां दृष्ट्वा संप्राप्तो गर्गनन्दनः । संक्रन्दनपुरीपौरवृद्धिं योधैर्हतैर्व्यधात् ॥२५५६॥
अलंकाराभिधो बाह्यराजस्थानाधिकारभाक् । अधृष्यो मानुषैर्युद्धैर्विरुद्धान्बहुधाव्रधीत् ॥२५५७॥
क्व भूधरचरैः स्पर्धा वसुधातलचारिणाम् । तथापि पृतनायन्त्रानन्त्यं चिन्त्यमचिन्त्यकृत् ॥२५५८॥
अल्पीयांसः कोट्टनिष्ठा भूयिष्ठाः कटकाश्रयाः । अतः पूर्वे बहून्घ्नन्तोप्यासन्कृत्यात्पया क्षताः ॥२५५९॥
2560 श्लिष्टद्वाराररिपटं छिन्नैः पीडितमाहवैः । मीलिताक्षमिव त्रासात्ततो दुर्गमजायत ॥२५६०॥
गोमृभेदान्तरद्वैधमुखच्छिद्रानुसारिणः । धन्यादीन्वीक्ष्य विश्वासं कोट्टस्था नोपलेभिरे ॥२५६१॥
निद्राच्छेदार्थमन्योन्यं क्रोशन्तो नास्वपन्निशि । स्वपन्तोह्नि तु निःशब्दशून्यं कोट्टमदीदृशन् ॥२५६२॥

२५३८. ¹) Emended with G (*sec. manu*); A वा˘वेन; C वचेन. २५४०. ¹) Emended with C; A थों.—²) Emended with C; सत्वसङ्क्षी°. २५४५. ¹) A कठो˘प्या°; C कठोरेऽप्या°.—²) Could be read in A also °निष्ठाभि°.—³) A °स्यामो˘शयं C °स्यामोऽसंशयं. २५४६. ¹) Emended; A प्राप्स्यन्स. २५४७. ¹) Emended; A °लोकं त्रैलो°.; C °लोकेऽपि. २५४८. ¹) Emended with G (*sec. manu*); A गर्ने. २५५३. ¹) Emended; A °प्रैक्षन्त. २५५४. ¹) Thus A; perhaps read अधःस्थो.—²) A₂ २. २५५६. ¹) Emended with G (*sec. manu*); A °पौरयोधैर्वृद्धिं हतै°

निशासु तत्रस्थतया यामतूर्यरवैरपि । चटकाः कोटरगता मेघशब्दैरिवात्रसन् ॥२५६३॥
अहर्निशं भ्रमन्तीभिर्नौभिः संरुद्धपाथसः । तान्ससंभ्रमयन्सर्वप्रकारं राजसैनिकाः ॥२५६४॥
ते रुद्धपाथसस्तर्षशोषं कंचिद्विषेहिरे । निःसंचारास्तु संक्षीणे भोक्तव्ये क्लेशमाययुः ॥२५६५॥ 2565
बुभुक्षवः क्ष्मापयोग्यान्भोगान्भाग्योर्जितांस्ततः । कदन्नैर्नृपदायादा अशनार्हसमं व्यधुः ॥२५६६॥
दूरे स्पर्धास्तु निस्तीर्णाः क्षुधितास्तेऽधिकं व्यधुः । भूभर्तुर्भोगभागिभ्यो भृत्येभ्योऽप्यन्वहं स्पृहाम् ॥२५६७॥
व्यूहेष्वस्माद्ध पर्याप्तमकार्यमिति भाषिणम् । भोजं व्यधान्मध्यभृङ्गे दुर्गस्याथ स तं पृथक् ॥२५६८॥
एकस्य वार्द्धकाद्देहवापुष्ट्यादपरस्य च । जानन्नयोग्यतां मेने हैराज्यार्हं तमेव सः ॥२५६९॥
विनामुं चानयोः सम्यक्संरम्भेरन्न वैरिणः । इति मिथ्या प्रथां निन्ये तद्विनिःसरणं बहिः ॥२५७०॥ 2570
कान्तालंकारचक्रस्य काकुन्ती क्षयमित्वरी । चक्षूरागात्स्वत्वचन्द्रे साम्बुकेदार्द्रतां गता ॥२५७१॥
बहिराभ्यन्तरं भेदं नयन्ती मन्त्रमायवी । साल्हणेः कर्णसरणिं सर्वमन्विष्यतोऽन्वहम् ॥२५७२॥ युग्मम्॥
रागध्वान्तान्वितधियः प्रतिभेदभयेन सः । तस्य प्रकाशयन्नेनां गन्तुं तु प्रार्थनां व्यधात् ॥२५७३॥
क्षमापाडिङ्क्षितोपेक्षो मैत्रीस्थैर्ये मुदं भजन् । नागः सागस्यपि दधे बोधिसत्त्व इव क्रुधम् ॥२५७४॥
प्रियामन्युः सरागेण मृत्युहेतुर्महानपि । हृदि विस्मर्यते पृष्ठे शरभेणेव वारणः ॥२५७५॥ 2575
अथ प्रस्थापितो भोजः कुमारिशिबिरान्तरात् । यातमायोऽप्यलंकारतनयेनानुयायिना ॥२५७६॥
द्रोहेच्छया प्रयातापि ध्वस्तसत्त्वेन सत्वरम् । व्यावृत्यारोपितो भूयः कोट्टस्थस्यान्तिके पितुः ॥२५७७॥युग्मम्॥
निर्भर्त्स्य पुत्रं गन्तासि श्वो निशीत्यभिधाय तम् । कञ्जमस्थापयत्सोऽह्नि यात इत्यखिलान्वहम् ॥२५७८॥
प्रोचल्यानिश्चयादेकः प्रायाद्वी श्वः प्रयास्यतः । बोधितैरथ धन्याधिरजागार्यखिलैर्निशि ॥२५७९॥
प्रस्थास्नुः स निशीथेऽथ कोट्टाट्टालाद्व्यलोकयत् । आमतः कटके सर्वान्परितो दीपितानले ॥२५८०॥ 2580
प्रकाश्य वह्निना दुर्गं प्रतोलीनिर्गतो यथा । पिपीलकोऽप्यलक्ष्यस्त्वं नोन्मुखानां द्विषां व्रजेत् ॥२५८१॥
ज्वालाप्रकाशचाञ्चल्याद्विलोला इव रक्षिताः । न्यषेधन्मूर्धकम्पेन साल्हणिं साहसाहृताः ॥२५८२॥
तद्गन्तुमक्षमं क्षिप्रं क्षपाप्रान्ते स डामरः । अधोवातीतरच्छ्वभ्रमालिङ्गितवटाकरम् ॥२५८३॥
क्षेमराजाभिधानेन डामरेशेन सोऽन्वितः । शिलां वितर्दिकातुल्यामध्यास्त श्वभ्रमध्यगाम् ॥२५८४॥
आरुह्यासनमात्रे तां पर्याप्तां पातभीतितः । निर्निद्रौ पञ्चरात्रीस्तावत्यत्राहयतामुभौ ॥२५८५॥ 2585
निर्वर्तितप्राणयात्रौ करस्थैः सक्तुपिण्डकैः । तत एव व्यजहतां विष्ठां नीडादिवाण्डजौ ॥२५८६॥
अव्यक्तव्याकृती चित्राक्षपिताविव तौ स्थितौ । वीक्ष्यारिकटके लक्ष्मीं पृष्ठाद्विस्मयमीयतुः ॥२५८७॥
तयोराश्रीयत स्फीतशीतविस्मृतिकारिणा । जयसिंहप्रतापाग्निसंतापेनोपकारिता ॥२५८८॥
षष्ठेऽह्नि तत्र निःशेषीभूतभोक्तव्ययोरथ । क्षतक्षार इवारम्भि तुषारं वर्षितुं घनैः ॥२५८९॥
अगृह्यतोचिते दन्तवीणावाद्योद्यमे तथा । शीतासादितसादेन पाणिपादेन क्लमता ॥२५९०॥ 2590

---

२५६४. [1]) Emended with C; A तान्ससम्भ्रम°. २५६५. [1]) The letter ष is indistinctly written; C °शोषं; R °शोषं. २५६६. [1]) Emended; A °समैर्व्यधुः. २५७२. [1]) A[1] २. २५७३. [1]) Emended with C; A प्राक्षा°. २५७६. [1]) A °शिबिरा°. २५७७. [1]) A[1] २. २५७८. [1]) Emended with C; A निर्भर्त्स्यं. २५८२. [1]) Emended; A °प्रकाशं चाञ्च°. २५८३. [1]) Emended; A °क्षम:. २५९०. [1]) Emended with C; A पाणिपादेन.

तावच्चिन्मयतामद्य भुञ्जीताभिहितौ ध्रुवम् । पतिष्यावोऽरिकटके पाशबद्धाविवाण्डजौ ॥२५९१॥
क पुरस्कुर्वः कस्य वार्तां विदितौ को विनिर्हरेत् । ततः पङ्कान्तरामग्नौ यूथपः कलभाविव ॥२५९२॥
विषमस्थावथेत्थं तौ नक्तमभ्यर्थ्य डामरः । आरोप्य रज्ज्वावसथे शून्ये स्थापयति स्म सः ॥२५९३॥
कृतशीतप्रतीकारौ पलालानलसेवनैः । दुःखं व्यस्मरतां तत्र निद्रया चिरलब्धया ॥२५९४॥
2595 ततोऽप्यभ्यधिका व्यापज्जज्ञे लोठनविग्रहौ । अचक्षुष्यौ जनास्निग्धां[1] गिरमप्यापतुर्न यौ ॥२५९५॥
यवकोद्रवपूपादि तयोः सतुषमश्नतोः । गात्रैर्वस्त्रैश्च वैवर्ण्यं शुद्धिवन्ध्यतया दधे ॥२५९६॥
धन्योऽलंकारचक्रस्य क्षीणभोज्यस्य[1] सर्वतः । स्वीचकाराम्रदानेन तुल्यौ होल्यद्रास्करौ ॥२५९७॥
ततः स दूतैर्विक्रेतुमङ्गीचक्रे नृपद्विषः । बुभुक्षाक्षुभितो भृत्यभेदभीतश्च डामरः ॥२५९८॥
दुस्तरव्यापदुद्रेकद्रुतसत्त्वतयात्यजत् । पापोपलिप्ततश्चित्तमधर्माकीर्तिसाध्वसम् ॥२५९९॥
2600 भूपतेर्विद्विषच्छेषस्थापनात्स्वस्य रक्षणम् । ख्यातिशुद्धिं चिकीर्षुश्च कुशकाशावलम्बनम् ॥२६००॥
भृत्यस्योदयनाख्यस्य धिया प्रच्छादितं तथा । ररक्ष साल्हणिं भोजं द्वौ तु दातुं स तत्वरे ॥२६०१॥
तं विना च तयोर्भूपाद्दण्डं जानन्नसांप्रतम् । अबाधं स्वस्य चाशेषकृत्यं युक्तममन्यत ॥२६०२॥
भोज्याभाव[1]कृतां तस्य व्यापदं तत्र मन्त्रितम् । तदा नाज्ञासिषुर्धन्यादयः संधिं विधित्सवः ॥२६०३॥
भिक्षाच्छिन्नलिप्सा तेषां कस्माच्चिदभवत्ततः । किं पुनस्तेन दायादद्वये दातुं प्रतिश्रुते ॥२६०४॥
2605 देयविश्राणनानीकोत्थानादिपणसिद्धये । भ्रातृव्यमनयद्धन्यः कल्याणमवकल्प्यताम् ॥२६०५॥
प्रबन्धं निर्बध्नन्नरिमुपचरञ्छादितरुषं महार्हैं संगृह्णन्नयकुटिलचेष्टं व्यवहरन् ।
स भूमिः सिद्धीनां दधदुचितकर्तव्यपरतां भवेद्योऽनिर्व्यूढावपि सुदृढसंरम्भरभसः ॥२६०६॥
दुःखैर्दीर्घप्रवासोत्थैरपसारितसौष्ठवाः । तदा संरम्भशैथिल्यं भूभृद्भृत्याः प्रपेदिरे ॥२६०७॥
स सत्यं सचिवोऽप्राप्यः संग्रहीतुं प्रगल्भते । कथाशरीरमिव यो निर्व्यूढौ कार्यमाकुलम् ॥२६०८॥
संधिं निबद्धं विज्ञाय सैनिकाः स्वगृहोन्मुखाः । उपेक्ष्य स्वामिदाक्षिण्यं क्षणादेवप्रतस्थिरे ॥२६०९॥
2610 तद्विक्रीतमवाप्यार्थं लवन्यः कार्यमन्थरः । धन्याद्याः स्वल्पसैन्यत्वादासन्कृच्छ्रगतासवः ॥२६१०॥
प्रतोलीकीलित[1]दृशः प्रार्थितागमनाशया । तदहः सोऽभियोक्तृंस्तानदत्त्वावतापयत् ॥२६११॥
रथाङ्गाक्रन्दिनी रात्रिस्तेषां कृच्छ्रेण सागमत् । विना जीवितसंन्यासमन्यत्कार्यमपश्यताम् ॥२६१२॥
प्रयत्नसंभृते कृत्ये नष्टे मन्दतया धियः । अस्मत्संभावनादूरीकृतवाक्यादरं प्रभुम् ॥२६१३॥
नष्टानुशोचनव्याजात्सत्स्वप्युपहासिनः । सदयं नो ध्रुवं दुःस्थीकरिष्यन्त्यन्यमन्त्रिणः ॥२६१४॥
2615 सद्यो याच्ञातारतम्याच्छाम्यन्तो नस्त्रपार्पणम् । कार्यनिष्ठामपश्यन्तः[1] कुर्युर्नैत्यपरेऽब्रुवन् ॥२६१५॥
मायामेतां विहितवांस्तैः संमन्त्र्य नृपाहितैः । सिद्धसाध्योऽधुना दस्युर्हसत्यस्मान्ध्रुवं स्थितः ॥२६१६॥
अल्पेतरांस्तु संकल्पानेवं तेषां वितन्वताम् । दत्तानन्ततनुज्यानिः प्रभाता सा विभावरी ॥२६१७॥ कुलकम् ॥
प्राह्णेऽथ राजस्थानीयोऽलंकारः साहसोत्सुकः । डामरं कोट्टमारुह्य निन्ये नयभयैर्वशम् ॥२६१८॥
एकाहं गमने सोऽद्विलम्बस्तत्र वासरे । लोठनं[1] क्षीणदाक्षिण्यः स गच्छेत्यब्रवीत्स्फुटम् ॥२६१९॥

२५९५. [1]) Emended; A जनाम्निग्धां. २५९७. [1]) Emended; A °भोजस्य. २६०३. [1]) Emended; A भोज्यभाव°. २६११. [1]) Emended with G (*sec. manu*); A °कैलित°. २६१५. [1]) Emended with C; A °पश्यन्त. २६१९. [1]) Emended; A लोठने.

उपन्यास्यंस्ततस्तस्य म्लानिप्रक्षालनक्षमम् । मानिनः कोपि कर्तव्यं कीर्तिव्ययनिबर्हणम् ॥२६२०॥ 2620

कालः सोयं सकलजनतालोचनध्वान्तदायी निस्त्रालोकप्रकटनपटुः किंतु सत्क्षत्रियाणाम् ।
अश्वश्यामाङ्कुलमसिलता स्वर्वधूसंयतापि व्यक्तां सक्तिं दिशति रभसान्मण्डलेनोष्णभानोः ॥२६२१॥

संप्राप्नुवन्ति ननु मण्डलमेकमेव क्ष्मापा जये समरसीम्नि वपुस्तु हित्वा ।
चण्डांशुमण्डलमथाभिमतानि कामं प्रेमार्द्रनिर्जरवधूकुचमण्डलानि ॥२६२२॥

नास्मिन्संततवेष्टनोल्बणतलैस्तल्पैरुदेति व्यथा मन्त्रिभ्यश्चलितैर्न चालमसुभिर्मर्मव्यथा जन्यते ।
क्रन्दद्बन्धुजनार्तनादचकितस्वान्तं न वा स्थीयते नन्वेतन्मरणं सुखस्य सुभगा काप्येव संग्रामभूः ॥२६२३॥

मार्गैः खड्गलतावितानगहनैर्यातः पिता ते दिवं भ्रातृभ्यामसिधेनुकण्टकवने भ्रान्त्वार्जिता सद्गतिः ।
वंशाक्षुण्णमिमं निषेव्य रभसादध्वानमुज्ज्वलया वृत्त्या व्योम्नि विशार्कमण्डलमिह स्वान्तं च तेजस्विनाम् ॥२६२४॥

साम्राज्यं विधिनोपनीतमसकृत्क्लैब्येन यद्धारितं तत्रापि प्रशमोचिते वयसि यत्संचेष्टितं बालवत् ।
प्रायश्चित्तममुष्य लब्धमधुना तद्दैवसंपादितं मा भूद्राज्यमिवैतदप्यसुलभं कर्तव्यमूकस्य ते ॥२६२५॥ 2625

राज्यं प्राप्तमपि प्रनष्टमसमोच्छिष्टाशनैर्यापितः कालः सर्वजनक्षयस्य विषये याता स्थितिर्हेतुताम् ।
इत्यासीत्किमिवोचितं प्रभवतो भिक्षाचरक्ष्मापतेर्निर्व्यूढं तु तदस्य देहविरतौ येनैव सर्वोन्नतः ॥२६२६॥

स तथोत्तेजितोप्योजो नाददे तेजसोज्झितः । न ज्वलत्यग्निसङ्गेपि निर्वीर्यं वानरेन्धनम् ॥२६२७॥

शान्ताहवस्तु संवृत्तनिद्राभङ्ग इवार्भकः । ऐच्छदुच्चैर्भयोद्वेगो रोदितुं प्रसृताधरम् ॥२६२८॥

डामरेणार्पितं नेतुं प्रवृत्तास्तं नृपाश्रिताः । तादृशं वीक्ष्य कारुण्याद्धैर्याधानार्थमभ्यधुः ॥२६२९॥

मा विषीद न देवस्य दयाचन्द्रोदयोज्ज्वले । हृदि प्ररोहति स्वैरं विकारतिमिरान्धता ॥२६३०॥ 2630

स सौजन्यसुधासिन्धुः स स्थिरत्वसुराचलः । स प्रपन्नार्तिसंतापच्छेदचन्दनपादपः ॥२६३१॥

पुण्यां मुद्रां च संलक्ष्य शारदीव सुवाहिनीम् । मूर्तिं तस्योल्बणं चेतः समाश्वास्यत एव ते ॥२६३२॥

निष्कलङ्कैर्विशपूर्वैर्निर्विशेषं सभाजयन् । चारित्रं लाघवभुवो ह्रियस्त्वां सोपनेष्यति ॥२६३३॥

अपकर्तृन्विपन्मग्नान्दयमानः परानपि । क्षमापरीक्षाहेतुत्वात्स वेत्ति ह्युपकारिणः ॥२६३४॥

उत्स्कोति दृष्टस्तैर्लोलस्थूलकूर्चो गृहागतः । व्यालम्बकम्बलो गोष्ठाद्वृद्धोक्ष इव निर्ययौ ॥२६३५॥ 2635

निर्भूषणं म्लानजीर्णवस्त्रशस्त्रं निरीक्ष्य तम् । युग्याधिरूढमायान्तं धन्यो हीनमतां दधे ॥२६३६॥

दीर्घास्पन्देक्षणं रूक्षघनकूर्चास्तविग्रहम् । व्यलोकयद्यथोलूकमिव नष्टं गुहागृहात् ॥२६३७॥

रेजे शैलस्थलद्भिस्तैः शिबिरोद्दीपितानलः । भूपप्रतापस्वर्णस्य कषाश्मस्वमिवागतः ॥२६३८॥

स्कन्धावारे गते वर्त्मसुपारं प्रसभं नभः । अमर्त्यभावे भूभर्तुर्विशां चिच्छेद संशयम् ॥२६३९॥

प्राक्चेत्पतेद्धिमं तावन्म्रियेरन्कुण्ठिताः क्षणात् । पिष्टातकान्तर्गतौटाः प्रविष्टा इव सैनिकाः ॥२६४०॥ 2640

एवमेकान्नविंशेब्दे दशम्यां शुक्लफाल्गुने । न्यूनाब्दषष्टिदेशीयो निबद्धो लोठनः पुनः ॥२६४१॥

दीर्घप्रवासादायातं सत्कर्तुं कटकं पुनः । निर्ममो हर्म्यमुत्तुङ्गमारुरोह महीपतिः ॥२६४२॥

---

२६२०. ¹) Emended; A उपन्यस्यंस्त°. २६२८. ¹) A₁ gloss शान्ता अहवा अहंभावो यस्य. २६३०. ¹) Emended; A देवस्य. २६३७. ¹) Emended; A °कूर्चं स°. २६३८. ¹) A °शिविरो°. २६३९. ¹) A स्कन्धावारे. २६४०. ¹) Emended with G (*sec. manu*); A प्राक्चेत्स°. २६४१. ¹) A °फाल्गुणे.

यथोचितं दानमानसंभाषणविलोकनैः । संतोष्य व्यसृजत्सैन्यं धन्यादीन्मैक्षतागतान् ॥२६४३॥
तेषां पुनश्च दोर्दण्डमूले क्षिप्तकरं भटैः । न्यस्तेनानासिकं वासःप्रान्तेनाच्छादिताननम् ॥२६४४॥
2645 निर्भूषणश्रोत्रपालिप्रविष्टैः श्मश्रुलोमभिः । संलक्ष्यैः प्रव्यक्तकार्श्यक्लेशं कपोलयोः ॥२६४५॥
तथावस्थोक्तिमुखरे पौरलोकेन्तरान्तरा । व्यापारयन्तं नेत्रान्तौ ह्रीमस्तिमिततारकौ ॥२६४६॥
कातर्यदैन्यभीक्षान्तिक्षुद्रलक्ष्मीकटाक्षितम् । वेपमानविनिद्राङ्गं गां शीतेनार्दितामिव ॥२६४७॥
भ्रान्तामिव क्ष्मां पर्यस्तानिवाद्रीन्पतितामिव । विदन्तं च दिवं शोष ----रदच्छदम् ॥२६४८॥
दैशिको वान्तरायोस्तु ध्वान्तं घोरं प्रवर्तताम् । राजीकोभ्यर्णतां यातं त्राता का जरयान्त्रिवदम् ॥२६४९॥
2650 सर्वापकारकृद्राज्ञः स्थास्यामि पुरतः कथम् । पदानि संनिरुन्धानं निर्ध्यायेति पदे पदे ॥२६५०॥अन्तर्युगलम्॥
बहुलोकावृततया स्तोकसंलक्ष्यमैक्षत । प्रतीहारैरथावेद्यमानं लोठनमङ्गने ॥२६५१॥कुलकम्॥
भूसंज्ञया वितीर्णाज्ञो राज्ञा तामारुरोह सः । सभां पारिप्लवाम्भोजामिव प्रेक्षकलोचनैः ॥२६५२॥
दृष्ट्वा निर्दिष्टपार्श्वोर्वीस्थितिः पृथ्वीभुजस्ततः । अस्राक्षीत्क्षितिनिक्षिप्तजानुर्मूर्ध्नाङ्घ्रिपङ्कजे ॥२६५३॥
हस्ताम्बुजाभ्यामालम्ब्य ललाटतटमानतम् । सद्यात्संभ्रमनम्रस्य तस्योदनमयच्छिरः ॥२६५४॥
2655 राज्ञोषधीजुषोः स्पर्शः पाण्योस्तापं स चेतसः । दौर्भाग्यमहरद्देहावास्य श्रीखण्डशीतलः ॥२६५५॥
पुण्यानुभावात्कारुण्यभाजो भूभर्तुरञ्जसा । विस्रम्भसंभावनया स क्षणात्पस्पृशे हृदि ॥२६५६॥
मा भैषीरिति दृष्टोक्तिः सुखं संप्राप्स्यसीति वाक् । अगाम्भीर्येण भवेव मन्युर्न त्वयि सोधुना ॥२६५७॥
इत्युक्ते पूर्ववैराणां भवेदुद्घाटनं कृतम् । बान्धवो नस्त्वमित्यस्मिन्परीहास इव क्षणे ॥२६५८॥
क्लिष्टोसीति व्यक्ततापप्रथाभाषणं भवेत् । ध्यात्वेति भूभृद्धास्य प्राप्यार्थं तु गिराकरोत् ॥२६५९॥तिलकम्॥
2660 अभयार्थनया पादौ स्प्रष्टुं नमयतः शिरः । संस्पर्शी मौलिषु पुनर्विग्रहस्याङ्घ्रिणाकरोत् ॥२६६०॥
का योग्यता सत्क्रियायां ममेति वदता बलात् । अजिग्रहत्पितृव्येण ताम्बूलं स्वकरार्पितम् ॥२६६१॥
नत्वा द्वारेशमूचे भूपक्रमो च इति सस्मितम् । धन्यं पृष्ठं च पस्पर्श प्रष्ठं सव्येन बाहुना ॥२६६२॥
दाक्ष्यदाक्षिण्यगाम्भीर्यविनयाधैर्विभाव्य तम् । भूभृद्गुणैः परीतं स्वं लोठनोमन्यताधरम् ॥२६६३॥
आदिश्य सान्त्वनं धन्यमुखेनाथ प्रपानतम् । पितृव्यं प्राहिणोद्वेश्म भ्राजिष्णु विनयाञ्जलिः ॥२६६४॥
2665 अभियोगे च एवास्य नीतौ चिन्तयतो दृशम् । मुखरागः स एवाभूत्कलाधाप्रावविप्लुतः ॥२६६५॥
नायाति वाडवशिखिकथनेन तापं शैत्यं हिमाद्रिपयसा विशता न चाब्धिः ।
कश्चिद्गभीरमनसां सततं विषादकाले प्रमोदसमये च समोनुभावः ॥२६६६॥
प्रीतिस्थैर्यैर्ज्ञातियोग्यैश्चोपचारैरकृत्रिमैः । क्रमाद्राजाहरल्लज्जां पौरुषभ्रंशजीवयोः ॥२६६७॥
दायादोथ द्वयावेव राष्ट्रे कष्टेपि मन्त्रवित् । भोजेनोत्स्पिञ्जसर्पस्य दन्तं सोन्तरचिन्तयत् ॥२६६८॥
प्रत्रासायासभीत्या स्वैरस्वच्छसंरम्भसंभ्रमैः । जिगीषुर्विद्विषच्छेदैश्चक्रे यत्निष्प्रजागरः ॥२६६९॥
2670 साल्हणिः स तु निस्तीर्णः श्वभ्राच्छून्यगृहे वसन् । पितृव्यविग्रहोदन्तमुपलेभे न कंचन ॥२६७०॥

---

२६४५. [1]) A वलक्ष°. २६४८. [1]) Emended with C; A °पतितामिव.—[2]) Thus A; C supplements शोषबहुशुष्कदर°. २६४९. [1]) Emended with C; A दैशिको न्तरा°. २६५५. [1]) Emended; A °देहवास्य; C °देहवास्य. २६५७. [1]) Emended with G (*sec. manu*); A मन्युना त्वयि साधुना. २६६४. [1]) Emended; A धन्यं मु°. २६६७. [1]) Emended; A °कृत्रिमः. २६६८. [1]) Conjectural reading; A भोजनोत्पिञ्ज°. २६७०. [1]) Emended; A सल्हण:.—[2]) Emended; A निस्तीर्ण:.

राजगृहं[1] स्वलंकारं डामरान्तिकमागतम् । पृष्ठाद्दीक्ष्याभवद्द्रोहद्रोहसंभावनस्तदा ॥२६७१॥
ददर्श च क्रमाद्दूरतया दुर्लक्ष्यविस्तृति[1] । स्कन्धावारं बद्धमालं मार्गे नगरगामिनि ॥२६७२॥
अज्ञातेन विदूरस्थापि नृपेणाश्रितं ततः । युग्यं चासौ धन्यपद्मयुग्ययोरन्तरैक्षत ॥२६७३॥
अचिन्तयच्च को हेतुः कटकमस्थितेरिति । युग्यारूढश्च कोऽत्र स्यात्तृतीयो धन्यपद्मयोः ॥२६७४॥
पृष्टस्तेनावदत्कश्चित्पामरोऽथ प्रमोदभाक् । संधिर्निबद्धो नगरं गतौ लोठनविग्रहौ ॥२६७५॥ 2675
संदेहीजहतद्रोहो[1] भयमुन्मुखतां भजेत्[2] । ज्ञातिखेदेन तस्यासीन्मुहूर्तमपहस्तितम् ॥२६७६॥
सैन्ये गते शून्यतया मिलितैर्विहगैः सरित् । दवाश्रिस्तेन तौ नीतौ क्रन्दन्तीव व्यकल्प्यत[1] ॥२६७७॥
त्वमन्य एव मे दध्याद्यास्थेहस्यमवेत्य ते । पुनर्नयेयुर्धन्याद्याः क्रमादध्यायदिति सः ॥२६७८॥
स्वं नेतुं पार्थिवचमूं प्रत्यावृत्तां विनादिनीम् । श्रुतेन्तरान्तरा घोषे निर्झरा गामशङ्कत ॥२६७९॥
अथाजायत जीमूतवितीर्णतिमिरं जगत् । वन्ध्यं मध्यंदिनेनेव निशीथव्यथितश्रिया ॥२६८०॥ 2680
राधमासावधि दधुस्ततः प्रभृति वारिदाः । दीक्षां क्षोण्यां तुषारौघसन्नासुत्रणकर्मणि ॥२६८१॥
विश्रब्धघात्यभव्योऽहं निर्ब्रह्मण्यो ह्रियोज्झितः । निन्दन्स्वमिति भोजाग्रे ततो दस्युरुपाविशत् ॥२६८२॥
समयापेक्षयाक्षोभो मन्युं संस्तभ्य[1] साल्हाणेः । सान्त्वयन्निव नास्त्यागस्तवात्रेति जगाद तम् ॥२६८३॥
ऊचे च संश्रितापत्यघात्याद्यापद्गतं त्वया । मामुपेतस्कृतं तत्र गर्हां नार्हसि कस्यचित् ॥२६८४॥
तत्र द्रोहस्पृहा स्याच्चेदानृशंस्यं भवेन्मयि । परत्रलाभवत्तस्मादियं कालानुरोधतः ॥२६८५॥ 2685
राज्ञश्च हर्षभूभर्तृवंश्या इव न वा वयम् । उच्छेद्याः किं तु संयम्या राजधर्मानुरोधिनः ॥२६८६॥
स्वस्याख्यातिस्तयोर्बाधा राज्ञश्चामार्गगामिता । शेषं मां[1] रक्षता हन्त निषिद्धा धीमता त्वया ॥२६८७॥
इत्युक्तवन्तं तं स्वच्छलज्जाभार इवावदत् । साक्षी त्वमेव[1] सर्वत्र ममेति सततं स्तुवन् ॥२६८८॥
क्षणेन च प्रविशु भामधुनेत्यभिधायिनम् । तमेव हिमवृष्ट्यन्ते कर्तास्मीत्युक्तवान्ययौ ॥२६८९॥
त्वयि दस्युर्विपर्यस्येन्मन्युं[1] जानन्नभोजनम् । भोजस्तत्रेति केनापि कथितो व्यधिताशनम् ॥२६९०॥ 2690
स्पृशंश्चान्नं चिरात्प्राप्तमिदं विक्रीय तावितिं[1] । ध्यायञ्ज्ञात्योर्देहमांसं तयोर्भुक्तममन्यत ॥२६९१॥
दस्युस्तु हिमवृष्ट्यन्ते त्वां प्रहेष्यामि निश्चयात् । श्वो वाद्य वेति[1] कथयन्द्वौ मासौ न मुमोच तम् ॥२६९२॥
मां शास्त्रेव स्थितं राज्ञः[1] कुमारश्चोर्ईमात्यये । विक्रीणात्येष मत्वेति भोजोऽधाद्गमने त्वराम् ॥२६९३॥
सिधं यं यं निषेधाय गमनायोदपादयत् । दस्युस्तं तं समुच्छेद्य सापराधं व्यधत्त तम् ॥२६९४॥
तेजोनाम्नो[1] बलहराख्संजातो[2] भ्रातृमातुरः । अभ्यधाद्वाल्यमाश्वास्य लम्बकम्बलकावृतः ॥२६९५॥ 2695
तेजोविस्फूर्जितां मन्त्रहीरोत्कर्षकषोपले । हैराज्ये सौस्सले सैन्ये पङ्क्तिपावनतां गतः ॥२६९६॥
पितुरामतया राज्ञा वर्धितस्तदनन्तरम् । एवैनकादिविषयाधीकारित्वं क्रमाद्भजन् ॥२६९७॥

२६७१. 1) Emended; A राज्ञा गृहं स्वलङ्कारडामर°; cf. viii. 2925. 2618. २६७२. 1) Emended; A °विस्तृति.—2) A स्कन्धा°. २६७५. 1) Emended; A पृष्टसेना°. २६७६. 1) Thus A; the text of this *pâda* appears to be corrupt; perhaps read संदेहे जहसौ द्रोहमयु°.—2) भजेत् corr. by A1 from भजेत. २६७७. 1) Emended; A व्यकल्पत. २६८३. 1) Emended with C; A संस्तम्भ्य. २६८७. 1) Emended; A शेषं मां; C त्वां सर्वां. २६८८. 1) Emended with G; A समेव. २६९०. 1) Emended; A दस्युक्षिप°. २६९१. 1) Conjectural reading; A विक्रीयतामिति; cf. for the context viii. 2598 flg. २६९२. 1) Emended with C; A हेति. २६९३. 1) Emended; A राज्ञा. २६९५. 1) Emended; A भोओ°; cf. viii. 2862 and the vv. ll. सिओ, ओओ viii. 1084.—2) Emended; A °जातं.—3) The text of this *pâda* is corrupt. २६९६. 1) Emended with G; A °विस्तांस्त°.

विमुखे राज्ञि मार्गेण खुयाश्रमभुवा कृते । तं राजवदनो नाम विजिगीषू ररक्ष तम् ॥२६९८॥ चक्कलकम् ॥
आनृशंस्यं भृत्यभावाद्दलवन्त्यतयास्य च । प्रत्यवस्थित्यसामर्थ्यं राज्ञि सर्वे शशङ्किरे ॥२६९९॥
2700 अतोलंकारचक्रेण कुर्वतोस्वर्यमर्थनाम्[1] । राज्येच्छो राजवीजी तदा न स समर्प्यत ॥२७००॥ युगलकम् ॥
भीतः प्रत्यक्षतां दूरस्थितेप्युदयने स तम् । विमृष्टवति बुभुक्षुस्त्यक्तुमेनं न चाशकत् ॥२७०१॥
राज्ञा कर्तुं विनिमयं भोजस्य प्रहितो धनैः । प्राप[1] ब्रङ्गामलंकारो विषयाधिकृतस्ततः ॥२७०२॥
तत्पार्श्वमुपेतं गन्तुं मां समुत्सृज्य[1] यासि चेत् । त्यक्ष्यामि तदसूनेवमूचे भोजस्तु डामरम् ॥२७०३॥
श्वस्त्वां प्रभाते द्रक्ष्यामीत्येतावत्तत्र जल्पति । कोष्ठादनुक्त्वैव निशस्तुर्ययामे विनिर्ययौ ॥२७०४॥
2705 वनपर्वेष्वमर्षेण मार्गान्वेषी गवेषणम् । यावच्चक्रे क्षपान्ते तं तावच्छुश्राव निर्गतम् ॥२७०५॥
असाध्यप्रतिषेधोथ तमङ्घ्यनुजगाम सः । प्रस्थितं शारदादेवीस्थानं यावन्मितानुगः ॥२७०६॥
एकसार्थगतौ ज्ञाती विना तौ ज्ञातियोचिताम् । दाक्षिण्यादक्षमः स्थातुमभ्रे सागा भवन्निव ॥२७०७॥
प्रवयाः पन्थवान्वारान्व्यधादारब्धिमेव तु । युवाप्यकल्यः कौलीनमिति स्वस्य च चिन्तयन् ॥२७०८॥
दुराण्डगमने खण्डितेच्छः संभिन्य दारदान् । संयुगुत्स्वर्मधुमतीरोधसा मार्गमग्रहीत् ॥२७०९॥ तिलकम् ॥
2710 क्वापि श्यानाश्मसूच्यभिमृत्युदंष्ट्राङ्कुरोत्कटान् । क्वचिद्गुद्धप्रकाशाभ्रकालपाशान्धकारितान् ॥२७१०॥
प्रभ्रश्यद्धिमसंघातगजव्यूहोल्बणान्क्वचित् । क्वापि निर्झरफूत्कारनाराचक्षतविग्रहान् ॥२७११॥
क्वचित्तुषारस्पर्शपवनस्पष्टस्फुटदसृग्धरान् । क्वाप्यातपक्षतहिमज्योतिर्निहतदृक्पथान्[1] ॥२७१२॥
दूरावरोहं[1] प्रसृते स्फुटमप्रहते विदन् । ऊर्ध्वावरोहमसकृन्मन्यमानोप्यधोगते: ॥२७१३॥
तुषारकालविषमान्पद्समान्पथि वासरान् । उल्लङ्घ्य स दरद्राष्ट्रसीमान्तग्राममासदत् ॥२७१४॥ कुलकम् ॥
2715 गृहार्पितात्मसामग्रीहतार्किंचन्यलाघवम् । तं दुग्धघाटकोट्टेशः प्रणम्यानयदर्च्यताम् ॥२७१५॥
दूरस्थितो[1] विड्डुसीहस्तद्दूतोक्तनदागमः । प्रक्रियां प्राहिणोच्छत्रचामरादिश्रायां[2] नृपोचिताम् ॥२७१६॥
आदिष्टदिष्टवृद्धिश्च राष्ट्रे कोट्टाधिपेन सः । अचारयत्स्वकोशस्य स्वामित्वं राजवीजिनः ॥२७१७॥
राजायमानो भोजोथ राजवासगतोर्चितुम्[1] । आनिन्ये राजवदनापत्येनाभ्येत्य पक्ष्यताम् ॥२७१८॥
2720 स पित्रैकान्ततो राज्ञो भिन्नेन प्रहितोन्तिकम् । तेनाज्ञाप्यरिनीत्युमपाशामस्थापनोपमः ॥२७१९॥
कार्यगौरवविश्वासाभावव्यतिकरोचितम् । संदिश्य प्राहिणोत्तं स न स्वीकुर्वन्न चोत्सृजन् ॥२७२०॥
किमाप्तोहं किमेकान्तभिन्नो राज्ञः शनैरिति । मां शास्यसीति तं दूतैः स राजवदनोवदत् ॥२७२१
तस्य दार्ढ्यं दर्शयितुं गोत्रिवैरिमिषान्नृपे[1] । कृपाणेथ विदोषत्वं नागाद्यैरग्रहीद्रणम् ॥२७२२॥
साम्यूनः[1] शनैः स्थैर्यं ततः साम्यमथ क्रमात् । आधिक्यं चादधे तेषां त्रिभिर्धैर्यनिष्ठुरः ॥२७२३॥
तथा प्रतिष्ठां स प्राप तस्यापूर्वस्य भूमिजाः । हास्यमेत्य यथा व्रीडां नागुर्नागस्य बान्धवाः ॥२७२४॥
2725 स हि त्यागक्षमास्तम्भालोभादिगुणभूषितः । अभिगम्योभवन्नित्याभ्यस्तभूतिरिवोर्म्मिवन् ॥२७२५॥

---

२७००. [1]) Emended; A कुर्वताख°. २७०२. [1]) Emended, A प्राप्य. २७०३. [1]) Conjectural reading; A गन्तु मामुत्सृज्य; C मासमुत्सृज्य. २७१२ [1]) Emended; A °निहित°. २७१३. [1]) Emended; A °रोहे. २७१५. [1]) Thus A; cf. दुग्धघातम् viii 2468. २७१६. [1]) Emended with C; A °गमम्.—[2]) Emended; A °चादिवाद्यानृपो°. २७१८. [1]) Emended; A °गतोञ्चितुम C °गतोर्चितं; G °गतोर्चिताम्. २७२२. [1]) Emended; A °नृपे. २७२३. [1]) Conjectural reading; A सामग्री नः.

स्थैर्यं पृथ्वीहरादीनां साभयानां न कौतुकम् । आडम्बरो निरालम्बस्यास्य त्वस्य तु विस्तृतः ॥२७२६॥
मथ्नन्पृथुलान्व्यूहांश्चीराटविकयोधिकैः । क्रान्तमामोथ तस्थौ स भोजादीनभिपालयन् ॥२७२७॥
जहुरन्योन्यसंघर्षसेर्ष्यामात्यमतेन यां । ततो लुण्ठिप्रियस्वाद्वा नीतिमन्येपि डामराः ॥२७२८॥
उद्घातध्वंसितां विग्रहेच्छा लोठनबन्धने । बाधा तेषां तदानीं सा जगाम शतशाखताम् ॥२७२९॥
त्रिल्लको जयराजश्च राज्ञा संवर्धितावपि । अकार्ष्टां नैव तपसा विवशौ चक्रमीलनात् ॥२७३०॥ 2730
यो घूकानामिव श्वभ्रमामयानामिव क्षयः । दैत्यानामिव पाताले यादसामिव सागरः ॥२७३१॥
आश्रयः सर्वदस्यूनां त्रिल्लको माययोल्बणः । स देवसरसाधीशं संबध्नन्विग्रहं व्यधात् ॥२७३२॥ युग्मम् ॥
काकुन्तोथ तदाक्षेपं क्षोणीत्राणार्थिनो द्विजाः । प्रायं नृपतिमुद्दिश्य चक्रिरे विजयेश्वरे ॥२७३३॥
अकालदस्युनिर्माथं आनतो[1]ऽभ्यर्थनां न ते । राज्ञोगृह्णंस्ततः सोभूद्दाक्षिण्यात्तत्सभानुगः ॥२७३४॥
प्रस्थातुं पार्थिवे सज्जे ज्यायान्यो विश्रुतेष्वभूत् । स जातोत्पातपिटको जयराजो व्यपद्यत ॥२७३५॥ 2735
भाग्यवानेकतोजातदस्युवैविक्त्यमीशिता । ततो मडवराज्यं स विप्रप्रीत्यै विनिर्ययौ ॥२७३६॥
अमात्यदत्तवैमत्यैः स्वशाद्यमडवै[1]रथ । द्विजैर्निषिद्धोलंकारो मन्त्री राज्ञोज्झितोन्तिकात् ॥२७३७॥
स व्यवस्थापने दुःस्थदस्यूनां सोद्यमः सदा । सेर्ष्याणां प्रत्यभात्तेषां तद्दोषपरिपोषकः ॥२७३८॥
त्रिल्लकोन्मूलनं कुर्यां कृत्वा द्वैराज्यभञ्जनम् । प्रतिज्ञायेति नृपतिर्विपाप्मायाक्यवीश्वरत् ॥२७३९॥
त्रस्तोथ त्रिल्लकस्तैस्तैरप्रियैरुदवेजयत् । अनुद्भिन्नमुखो गूढामयो रोगान्तरैरिव ॥२७४०॥ 2740
जयराजानुजं राज्ञा यशोराजं निवेशितम् । तन्मतेनावचस्कन्द भ्रातृव्यं राजकाभिधः ॥२७४१॥
त्रातुं तं देवसरसं द्रमारात्याभिनं गतः । सङ्घपालोल्पसैन्यत्वात्संदिग्धविजयोभवत् ॥२७४२॥
ज्ञातोदन्तस्ततोभ्येत्य रिल्हणो रणमुल्बणम् । जयलक्ष्मीकटाक्षाणां प्रथमातिथितामगात् ॥२७४३॥
मन्दरेणाथ तेनारिवारिराशौ विलोडिते । कल्योभूत्सङ्घपालाध्वंस्तुच्छा[1]रातिजलाहतौ ॥२७४४॥
जितेपि राजके स्वोर्व्यां विनानुपादकं क्षमः । न बभूव यशोराजः शून्ये बाल इवासितुम् ॥२७४५॥ 2745
प्रतीक्षमाणो[1] द्वैराज्यपर्याप्तिं क्ष्माभुजेकरोत् । त्रिल्लकः कालहरणं तैस्तैर्मायामतिक्रमैः ॥२७४६॥
यथाकालं ततो गूढोपोढान्मण्डलकण्टकान् । स्वपक्षसूचीविशिखान्दिक्षु श्वाविदिवाक्षिपत् ॥२७४७॥
अथ पार्थ्वीहरिर्योभूच्चतुष्को लोष्ठकानुजः[1] । राज्ञ आज्ञा समं बद्धः कारागारात्पलायितः ॥२७४८॥
स तेन निजजामात्रा रक्षितः स्वोपवेशने । असंख्यडामरयुतः शमालां संप्रवेशितः ॥२७४९॥ युग्मम् ॥
आकर्ण्य कुररस्येव[1] निनादं तस्य भेजिरे । व्यक्ततां दस्यवो गूढा ह्रदस्थाः शफरा इव ॥२७५०॥ 2750
कुप्यन्तं राजवदनं षष्ठचन्द्रोथ गग्गजः[1] । ररोध प्रलयोद्वृत्तं वेलाद्रिरिव वारिधिम् ॥२७५१॥
वर्धमानक्षीयमाणसंपत्तौ तौ व्यजायताम् । घर्मे सजम्बालहिमौ तुषाराद्रितटाविव ॥२७५२॥
षष्ठस्य जयचन्द्रश्च श्रीचन्द्रश्चानुजौ ततः । दूरविप्रकृतौ राजमन्दिरावासवेतनौ ॥२७५३॥
ज्ञातनिःस्वपर्यायौ धुर्यकार्यवशादियात् । प्रतीक्ष्यावधजाग्राद्यः शङ्कितावशुभागमम् ॥२७५४॥

---

२७२८ [1]) Emended; A जुः. २७३४. [1]) Emended; A आनने°. २७३७. [1]) Doubtful emendation; A स्वशाद्यं मड°. २७४४. [1]) Emended: A °पालाविधस्तुच्छा°. २७४६. [1]) Emended; A प्रतिक्षमाणो. २७४८. [1]) Emended; A °ष्कः कोष्ठका°: comp. for the name of Pṛthvīhari's elder son, viii. 2912. 2790. 2496. 3313. २७५०. [1]) A₂ gloss कुररस्येति कुररः मदुटट इति भाषया कदर्येषु प्रसिद्धः. २७५१. [1]) Thus corr. by A₂ from गर्गजः.

2755 कटकाद्विमुखौ राजवदनान्तिकमागतौ । अभूर्तावपि भूभर्तुरागतौ प्रतियोगिताम्¹ ॥२७५५॥
शैलप्रस्थानपथिकैरसंख्यैरथ खाशकैः । स पूर्वराजकोशार्थी भूतेश्वरमलुण्टयत् ॥२७५६॥
तस्कराक्रान्त्यशरणं बलवद्विहताबलम् । अराजकमिवाशेषं राष्ट्रं कष्टां दशामगात् ॥२७५७॥
उदयं कम्पनाधीशं¹ रिल्हणं च ततो नृपः । चतुष्कयुग्ममादिश्य नगरं विवशोऽविशत् ॥२७५८॥
पार्श्वाद्धरिस्तु दुःसाधो महाव्याधिरिवौषधैः । स्तम्भितोऽभूत्तयोः सैन्यैः संहन्तुं न त्वशक्यत ॥२७५९॥
2760 कालापेक्षां स्वपक्ष्याणां बुद्धिं चानुरुन्धतः । आसीन्मन्दप्रतापत्वं रिल्हणस्यापि तत्क्षणम् ॥२७६०॥
विड्डसीहस्तु विज्ञातभोजोदन्तो व्यसर्जयत् । दूतानानेतुमुर्वीशान्सुबहूनुत्तरापथे ॥२७६१॥
अपि विस्तेश्वनितारहोविद्यास्यवेदिभिः । अपि किंमानुषपुरीगीतोद्गारिदरीगृहैः ॥२७६२॥
अप्यौष्ण्याहालुकाम्भोधेः शीतावेदिभिरेकतः । अपि भूङ्गानिलैः प्रीतान्कुर्वाणैरुत्तरान्कुरून् ॥२७६३॥
हिमाद्रिकच्छैर्म्लेच्छेशाः प्रधावन्तोऽधिशिशिभियुः । दिशास्तुरंगैरुन्धन्तः स्कन्धावारं¹ दरत्पतेः ॥२७६४॥ तिलकम् ॥
2765 राज्ञां संघटने यावच्चधादेवं दरन्नृपः । दिग्भ्यो भोजान्तिकं तावत्सामन्ताः प्रपेदिरे ॥२७६५॥
स पिप्रिये तानज्ञातालापान्वीक्ष्य गिरिव्रजात् । प्रीतिप्रकृष्टमणयानवरूढाञ्कपीनिव ॥२७६६॥
जयचन्द्रादयो राजवदनप्रहिता अपि । कीराः काश्मीरका¹ः पार्श्वमभजन्नाजवीजिनः ॥२७६७॥
अभ्यर्णस्थान्बलहरप्रमुखांश्च विदूरगान् । अपुष्णात्साल्हणिः स्वर्णैः परां कोशेशतां भजन् ॥२७६८॥
ततः सुजनितोत्सिच्छ्रतया निश्चोद्यचक्रिकः । भोजेन राजवदनः समगंस्तापसाध्वसम् ॥२७६९॥
2770 तयोरकृतकर्तव्यविशेषेणेतरेतरम् । जातसौष्ठवयोः क्षिप्रमविश्वासो व्यशीर्यत ॥२७७०॥
अभ्यमित्रीणतां तस्यानिच्छतो दरदं विना । महात्साहायकायैच्छन्मितानेव स तान्हयान् ॥२७७१॥
स्युर्बलसोढाभिमाटोपाः कटकस्यारय नो द्विषः । तस्माज्जयमुन्मिषेद्यद्वा भङ्गो भूयोऽपि योगभित् ॥२७७२॥
तस्मात्सर्वाभिसारेण रणमेकं प्रमेच्छतः । विजयावजयावाप्तिरेकाहान्तरिता मता ॥२७७३॥
व्याजहारेति यद्वोजस्तदेवोथ हसन्स्मयात् । निन्ये तद्दारदं सैन्यमुपेक्ष्यागामिनीं¹ श्रमूः ॥२७७४॥ तिलकम् ॥
2775 संकटान्ते विशीर्णानुयायस्तेषां प्रसर्पताम् । स राजवीजी शुश्राव दरद्राजमथागतम् ॥२७७५॥
तत्संगमाय व्यावृत्ते तस्मिन्कोट्टान्तिकं पुनः । प्रावेशयद्वल्लहरो मातृग्रामं स तद्बलम् ॥२७७६॥
दिशास्ततो वीक्ष्य वहिर्भ्रान्तवातमृगा इव । निसर्गधीरधीर्गाग्गिर्न धैर्यात्पर्यहीयत ॥२७७७॥
तस्य सर्वेऽपि नीलाश्वडामराः स्वे च सैनिकाः । विपक्षैः सह बद्धैक्याः सैन्यान्मुमुक्षवो ययुः ॥२७७८॥
स तथा विषमस्थोऽपि प्रस्थित्यै प्रार्थितो निजैः । म्लानाननः प्रभुं द्रष्टुं न क्षमोऽस्मीत्यभाषत ॥२७७९॥
2780 स सूर्यवर्मचन्द्रस्य न जातः कश्चिदन्वये¹ । उपयोगाय यो नागान्महाभिजनजन्मनाम् ॥२७८०॥
भोजं सभाजयित्वाथ विड्डसीहः सपार्थिवः । सारैः समं स्वसामन्तैर्विजयाय व्यसर्जयत् ॥२७८१॥
ततो म्लेच्छगणाकीर्णां प्रजन्संवाहयंश्चमूः । प्रयाणमात्रान्तरितः पृष्ठे तस्य बभूव च ॥२७८२॥
प्रादुष्कृतजगत्क्षोभे बले तत्रानुयायिनि । उत्साहात्साल्हणिर्मेने कृत्स्नां हस्तगतां महीम् ॥२७८३॥

---

२७५५. ¹) Emended; A प्रातयाग्यताम्. २७५८. ¹) Emended; A कम्पनाधीशरि°. २७६४. ¹) A स्कन्धा°. २७६७. ¹) Emended; A काश्मीरिकाः. २७७४. ¹) Emended; A° गामिनी°. २७८०. ¹) Emended; A कैश्चि°.

वाजिभिस्तर्जिते म्लेच्छराजैश्च बलमूर्जितम् । स्थाने समुद्रधाराख्ये निबबन्धाथ तत्पदम् ॥२७८४॥
स राजवदनस्थाद्गुर्जैथाम्थबलोज्ज्वलः । मृत्युदन्तान्तरे दिष्टं षष्ठचन्द्रममन्यत ॥२७८५॥ 2785
ततः प्रावृट्पयोवाहकृतोदीर्णपरिप्लुता । संजायते स्म वसुधा समीभूतजलस्थला ॥२७८६॥
धरित्रीपानपात्रेभ्यः सीधुपूर्णे दधुर्द्रुमाः । ममा लक्ष्यशिखामात्रा बलश्रीलोत्पलोपमाम् ॥२७८७॥
षष्ठस्य संकटं जानन्भूभृच्छेषैर्बलैः समम् । अथोदयद्वारपतिं तं च धन्यं व्यसर्जयत् ॥२७८८॥
वाहिनीरुद्धमार्गौ तौ पदवीमनुसस्रतुः । मार्गे धनंजयस्येव शैनेयपवनात्मजौ ॥२७८९॥
लम्बाम्बुदेम्बरे दूरं वारिपूर्णे च भूतले । स्यूतेव विद्युद्दृशे भिन्नधोतननिःस्वना ॥२७९०॥ 2790
शोभामात्रोदिताशर्हपरिबर्हाद्बहिष्कृतः । तत्राविभक्तकटकः पार्थिवः समजायत ॥२७९१॥
अनास्थो राजवदने सत्त्वावष्टम्भयोः पुरा । अत्रापरो न निक्षेप्यो राजबीजीति दारदान् ॥२७९२॥
त्रिल्लकः संदिशन्दूतैर्वृद्धिं पार्थ्वीद्दरिं नयन् । तयोरेकस्य सामर्थ्यादैच्छत्तं हस्तपातिनम् ॥२७९३॥ युग्मम् ॥
अभित्तिलिखितालेख्यकल्पं बलहरस्य तत् । तादृग्विलोक्य सामर्थ्यमथ राज्ञश्च सर्वतः ॥२७९४॥
विभक्ताशेषसैन्यस्य तत्र तत्रारिसंकटे । ज्ञात्वाप्रतिसमाधेयच्छिद्रमुन्मुद्रदुर्नयः ॥२७९५॥ 2795
अकृशश्वाविदाचारधिरं स्वाङ्गैः स गोपितम् । बहिर्दुर्धर्षमत्याक्षीद्द्वितीयमपि कण्टकम् ॥२७९६॥ तिलकम् ॥
ध्वान्तेम्बुधरजालान्ध्यमहावाते रजोभरः । स्वपक्षभेदयोर्ज्ञातकर्णेजपमहोद्यमः ॥२७९७॥
कुलच्छेदकृतो राज्ञस्तत्र तत्रातिसंकटे । अशान्तजागरोत्यर्थमनर्थपरिपोषकः ॥२७९८॥
सोथ भूरपुरेकस्माद्बहुभिः सह डामरैः । तेन संपूरितः पृथ्वीहरजो लोठकोपतत् ॥२७९९॥ तिलकम् ॥
तस्य संघटतः कन्यां प्रयातं वैकृतं चिरात् । पालीभङ्गे तटस्येव प्रावृट्पूर्णस्य लक्ष्यताम् ॥२८००॥ 2800
निद्राणोपेन्द्रजठरप्रसादनिसृतं जगत् । समेतमिव तत्सैन्यं प्रत्यभाज्जलदागमे ॥२८०१॥
यावद्भिः पार्यते नेदृक्संख्यातुमपि तद्बलम् । भर्तव्यकल्पैः सुस्वल्पपर्यैधमध्यगतैरपि ॥२८०२॥
तावद्भिरनुगैः पिङ्गदेवत्रङ्गाधिपो युधि । तद्योधान्याम्यहरितः सरितश्चातिथीन्व्यधात् ॥२८०३॥ युग्मम् ॥
तटोज्ज्वलैश्चिताचक्रैर्बिम्बितैस्तटिनीजले । मृतानामपि संस्कारः क्रियमाण इवाभवत् ॥२८०४॥
इति विस्मृतमृत्युः स कुर्वन्नेकाहमाहवम् । कथंचिदाप्तैरन्येद्युर्भ्रमसारोपसारितः ॥२८०५॥ 2805
पुरे स शून्ये सैन्यानि संगृह्णंस्तत्र सर्वतः । त्रिचैरहोभिर्नगरं गुप्तमाप्यममन्यत ॥२८०६॥
इच्छां पद्मपुरास्कन्दे मन्दत्वं त्रिल्लकोनयत् । पृष्ठस्थयोर्यशोराजकम्पनाधीशयोर्भयात् ॥२८०७॥
न भृत्यैस्ताद्विधः सिद्धास्यैकस्मिन्नसंमते । विधेयान्यल्पवन्यस्य डामरे होलडोकसि ॥२८०८॥
द्वैराज्ये सुस्सलस्यापि नैवादृश्यत तादृशः । अनर्थो यादृगुत्तस्थौ तत्सुतस्य समन्ततः ॥२८०९॥
चतुष्कमवधीर्याथ राज्ञा पादगदोपमम् । रिल्हणः प्रैषि तं मीवागण्डतुल्यं व्यपोहितुम् ॥२८१०॥ 2810
प्रस्थितस्तत्क्षमाथाय शमालैः सोन्वबध्यत । व्रजन्प्राग्ज्योतिषं हन्तुं पार्थः संशप्तकैरिव ॥२८११॥
अधावताभ्यमित्रीणस्तान्व्यावृत्य निपातयन् । पद्माकरोन्मुखः पृष्ठलग्नान्भृङ्गानिव द्विपः ॥२८१२॥

---

२७८४. [1]) Doubtful emendation; A °स्तर्जितो. २७८६. [1]) Emended with C; A प्रावृड्पयो°. २७८७. [1]) A °सीधु°. २७९९. [1]) Thus A; comp. for this name viii. 2496. 2748. 2912. 3313. २८०३. [1]) Emended with C; A °हरित. २८०८. [1]) A होलडोकसि. २८१०. [1]) Emended with G; A रिल्हणप्रेषितं.

रणभ्रान्तेन गमिता त्रियामा तेन रामटे[1] । गर्जत्कुल्या[2]र्पितारातिपृतनाशवसत्क्रिये ॥२८१३॥

तं[1] कल्याणपुरं प्राप्तं विश्रान्तं सोममागतः । रुरोधाभ्येत्य भूयोपि बलैर्भरितदिङ्मुखः ॥२८१४॥

2815 आपतन्नेव चारातिपदातीन्संमुखागतान् । दृष्टनष्टान्व्यधाच्छागानिवाजगरो गिलन् ॥२८१५॥

उद्धूतमारुतस्येव तस्यापाते पदातिभिः । तत्यजे रिल्हणः पर्णैर्हेमन्त इव पादपः ॥२८१६॥

पश्यतस्तस्य ते विद्रवन्तो जिह्मा न जिह्रियुः । देवस्पृहापारमित्यै कस्यौचित्यमनत्ययम् ॥२८१७॥

आप्तैरथापसृत्य स्वैरर्थितो रिल्हणोब्रवीत् । नयन्प्रजाद्यजा साम्यं[1] स्वामिभक्तिस्मृतेः स्मितम् ॥२८१८॥

ह्रीं[1]——वाविशेषेपि जन्तोर्जन्तोर्यदीशिता । भृत्यभावेपि यो लुप्तकृत्यो धिक्तस्य जीवितम् ॥२८१९॥

2820 जातं वक्त्रसरः श्मश्रुराजिनीलाब्जभाजनम्[1] । जराकैरवगौरं च राज्ञः पादान्प्रपद्य यान् ॥२८२०॥

म्लायत्सु तेषु भ्रूभङ्गभृङ्गभ्राजिष्णुभिर्भवेत् । कथं लक्ष्मीविलासैस्तदखण्डैरविडम्बितम् ॥२८२१॥युग्मम्॥

एषा कापुरुषासेव्या धीराणां नैव पद्धतिः । यदायासलवत्रासात्सौख्यवैमुख्यभागिता ॥२८२२॥

वस्त्रापासन एव शीतजनितस्त्रासोथ तीर्थाम्बुभिः स्नाने ह्लादसुखोपलब्धिरसमब्रह्मानुभावोपमा ।
वैकल्यं[1] समरे वपुर्विजहतामेवं किलोपक्रमे कैवल्या[2]ख्यसुखोपलम्भपरमा पश्चात्पुनर्निर्वृतिः ॥२८२३॥

एवमुक्त्वा परानीकमेकाकी स व्यगाहत । गृह्णञ्शरान्हरिग्रीवभाससंदिग्धभूलतान् ॥२८२४॥

2825 स्वर्णत्सरुप्रभाजाल[1]हरितालोज्ज्वलोभजत् । खड्गपट्टनटस्तस्य रणरङ्गोत्तरङ्गताम् ॥२८२५॥

तत्खड्गस्य प्रतः खड्गाज्जीवैर्जालघकलाङ्कुवम् । उत्थाय लग्नं शत्रूणां तृणैस्तृणमणेरिव ॥२८२६॥

आजौ तमनुजग्मुस्ते धैरगण्यन्त वैरिणः । तिर्यञ्चोलक्ष्यतां यातास्तेषां प्राणास्तृणान्यपि ॥२८२७॥

संप्रविष्टो मुखान्मृत्योः कैश्चिन्मार्गैः स निर्गतः । तिमेः संमीलितास्यस्य श्रोत्ररन्ध्रैरिवोदकम् ॥२८२८॥

श्राध्यत्कुर्वन्परावृत्तीः श्रमशान्त्यै विनिर्गतः । प्रक्षीणभूयिष्ठबलो लब्धोत्सेको रिपात्मभूत् ॥२८२९॥

2830 पृष्ठतोथ पपाताथ चतुष्कः पुष्कलैर्बलैः । साहायकागतं प्राक्स यं स्वं कंचिदमन्यत ॥२८३०॥

तस्योभयमुखस्यारिसैन्यस्याहेरिवेक्षणात् । न संरम्भः[1] शिखण्डीव परं ताण्डवितोभवत् ॥२८३१॥

तौ व्यूहावथ पर्यायैर्मुखपृष्ठं प्रदर्शयन् । सोक्षिणोद्युधि मन्थाद्रिर्मथनेब्धितटाविव ॥२८३२॥

कीलनिश्चलयोर्भ्राम्यन्नसकृद्धान्तरे द्वयोः । कुविन्द इव ---[1] तुरंगमत्वरान्वितः[2] ॥२८३३॥

भासः प्रत्यग्रहीत्तस्य तमेकपृतनारयम्[1] । एकतोम्भोभरं द्वीपस्येव कूलविलोद्गमः ॥२८३४॥

2835 तेन वैरिचमूश्चक्रे लुलितायुधकुण्डला[1] । क्रीडता चण्डवेगेन पुरुषायितुमक्षमा ॥२८३५॥

श्वासपाण्डून्द्विषां वक्त्रकुम्भान्स्वेदाम्भसाञ्चितान् । स कुर्वन्भूभुजं[1] जाने भूयो राज्येभ्यषेचयत् ॥२८३६॥

स च पार्श्वीहरिश्चास्तामन्योन्यस्य क्षपाक्षणे । सज्जौ मान्त्रिकवेतालाविव रन्ध्रगवेषिणौ ॥२८३७॥

साहायकागतान्साक्षीकृत्य[1] क्ष्मापतिसैनिकान् । अन्येद्युः सोकरोच्छत्रुं वनमार्गावगाहिनम् ॥२८३८॥

पर्यस्तशौचान्संचिन्त्य त्रिल्लकादीनथाययौ । सल्लपालस्तृतीयस्मिन्दिवसे रिल्हणान्तिकम् ॥२८३९॥

---

२८१३. 1) Should probably be रामुषे, cf. ii. 55.—2) Emended; A गर्जन्कुल्या°. २८१४. 1) Emended; A सत्कल्या°. २८१८. 1) Thus A; perhaps read with G (sec. manu) प्रजाद्यजाद्यात्स्वं. २८१९. 1) Thus A; C ह्रीप्रभावाविशेषे. २८२०. 1) Emended; A °भाजनम्. २८२३. 1) Thus corr. by a later hand from A1 वैकल्यं.—2) Conjectural reading; A वैकल्या°. २८२५. 1) Emended with C; A °प्रजाजाल°. २८३१. 1) Emended; A संरम्भे. २८३३. 1) Thus A; C supplements पूर्णोत्सुरंग°.—2) Emended, A °गमतुरान्वितः. २८३४. 1) Emended with C; A पृतनारवम्. २८३५. 1) Emended with C; A °कुण्डल. २८३८. 1) Emended; A साक्षीकृतक्ष्मा°.

नृपप्रतापग्लपितः स ताभ्यां पर्यशोष्यत । वनान्तः शुचिशुक्राभ्यां घुणक्षीण इव द्रुमः ॥२८४०॥ 2840

चितानल इवासारैर्युद्धैः शममनाश्रितः । उदयेन शनैर्निन्ये चतुष्कोपि मितोष्मताम् ॥२८४१॥

दारदं[1] बलं[2] रुष्यद्धेमसंनाहवाहिभिः । हयैरवतरोहाद्रिकुहराद्दाहवोन्मुखम् ॥२८४२॥

तुरुष्कलोकेनाक्रान्तान्देशांस्तद्दशमीयुषः । शङ्कमानैर्जनैर्शाता कृत्वा म्लेच्छावृतेव भूः ॥२८४३॥

प्रयाणमात्रान्तरिते धन्ये द्वारपतावपि । साहसं निःसहायस्य तस्खारैरमतोभवत्[1] ॥२८४४॥

ज्वलत्कनकसंनाहं तत्सैन्यं स द्विषोरुधत् । कनज्ज्वालावलिं दावं सनिर्झर इवाचलः ॥२८४५॥ 2845

विधूय जयचन्द्रादीनग्रस्थानरोधिनः । बलबाहुल्यदृप्तास्ते व्यगाहन्ताहवावनिम् ॥२८४६॥

तेषां हयसहस्राणि त्रिंशद्द्विशस्तुरंगमैः । रंहसा प्रतिजग्राह निजग्राह च गर्गजः ॥२८४७॥

तस्यास्तुरङ्गैर्देवशो पौरुषं तदमानुषम् । एकैकस्यामतो यस्य वैश्वरूप्यमिवादधे ॥२८४८॥

अश्वत्रक्रामविन्यस्तत्रक्त्रास्ते विद्रुताः क्षणात् । जगाहिरे कापुरुषा गिरीन्किंपुरुषा इव ॥२८४९॥

अभूमिज्ञतया शाद्याद्येव जातः पराभवः । श्वस्तदस्मान्पुरस्कृत्य जयं प्रत्याहरिष्यथ ॥२८५०॥ 2850

इत्युक्त्वा राजवदनजयचन्द्रादिभिर्निशि । तथेति मिथ्याकथयन्दारदा विग्रहोन्मुखाः ॥२८५१॥ युग्मम् ॥

प्रवेश्य धन्यद्वारेशौ दूरं बल्हरो बली । ऐच्छत्सत्त्वभिसंधातुं दृष्ट्वा पाश्चात्यपद्धतीः ॥२८५२॥

स्कन्धावारेण सार्धं च दरदां राजबीजिनम्[1] । विधातुं विदधे बुद्धिं तं ततस्तारमूलके[2] ॥२८५३॥

चिकीर्षति ततस्तस्मिन्मत्तेष्वन्धेषु दस्युषु । उत्सेहे साल्हणिः कृत्स्नं राज्यं निखिलं[1] निर्जितम् ॥२८५४॥

जयाभावेप्यनन्तैर्दृक्सामन्तसहितस्ततः[1] । भव्योस्मि भवितेत्येवं विचिन्त्येशिसाविचे च सः ॥२८५५॥ 2855

पद्मोन्माथाद्विरददशनैरप्रियैः पद्मबन्धोरिन्दौ स्पर्धिन्युदयति वपुः खण्डशः स्वं भिद्येत ।

तापस्त्यज्येत च रुचिरतां[1]भागिभिः सूर्यकान्तैर्भद्राभद्रं व्यसनसमये संभवेदप्रतर्क्यम् ॥२८५६॥

यो डामरतया भिक्षोः शश्वत्कृच्छ्रेप्युपेक्षणम् । टिक्कादीनां च कौटुम्ब्याद्भर्तुर्द्रोग्धुमूर्धनि ॥२८५७॥

अत्यन्यतयानन्यसामान्याश्चर्यवर्धनात् । ततः कृष्णोपयोगाच्च विश्वासस्येव मूर्धनि ॥२८५८॥

तौ नागराजवदनौ व्यसनावसरे तदा । चित्रं स्वकार्यतात्पर्याद्भुतादरमां गतौ[1] ॥२८५९॥ तिलकम् ॥

स्वयं त्रिभेयं नागोन्यकृतं तं वीक्ष्य विभ्रमम् । अदूरमर्थमन्येन कृतं कविरिवाभुषत् ॥२८६०॥ 2860

क्ष्माभृद्विपक्षं स्वं पक्षीकर्तुं कृपाननं ततः । संत्यज्य राजवदनं मां भजस्वेत्यभावत ॥२८६१॥

संभाप्तं वः प्रतीक्षध्वं[1] तेजोबलहरात्मजम्[2] । युग्याधिरूढं किं नारीसेवतां यामिको यथा ॥२८६२॥

इति ते संदिशन्तं च व्यसहन्स विहाय तम् । कामधेनुसमं नागं छागाप्तेषाद्विधि यत्[1] ॥२८६३॥

सर्वः स्वकार्यतात्पर्यात्प्रवर्तेत प्रियाप्रिये । स्नेहवैरेष्वदीये तु न किंचिदधिगच्छति ॥२८६४॥

ज्योतिस्तर्जितकान्ति दन्तयुगलं बाध्यं सुधादीधितेर्दानास्वादधिया प्रिया मधुलिहां कुम्भस्थली कुम्भिनः ।

वासस्यैवं[1] विरोधभाक्सरसिजस्येत्यत्र नेन्दो रतिस्तस्याप्यायकृतो द्वितीयमिति नाप्यस्य द्विरेफा द्विपः॥२८६५॥ 2865

---

२८४२. [1]) Thus A; C तत्रूलं.—[2]) Emended with C; A रुष्यद्धेम°. २८४४. [1]) Doubtful emendation of C; A तस्खाल-भैरम°. २८५३. [1]) A स्कन्धा°.—[2]) Emended; A राजबीजिनाम. २८५४. [1]) Emended with G (sec. manu); A निखिलानि°. २८५५. [1]) Emended; A °सहितांस्ततः. २८५६. [1]) Emended; A रुचिरमाभा°. २८५९. [1]) Emended with C; A तात्याकय. २८६२. [1]) Emended with C; A प्रतीक्ष्यध्वं.—[2]) Cf. कोशोनाम्रो बलहरास्तंघातौ viii. 2695 and note.—[3]) Thus A; perhaps read नाडींसै°. २८६३. [1]) The text of this verse is evidently corrupt; A as above. C reads व्यसहन् संविहाय तं । कामधेनुसमं नागं छागाप्तेषां विधिनं यत्. २८६५. [1]) Doubtful; A वा¯स्यैव; C सूरस्यैव.

प्रतिष्ठालोठनं कर्तुं ततो बलहरस्य सः । आजन्म वैरं संरेभे तेन भूभृद्धितेच्छया ॥२८६६॥
स तथा दारदान्भग्नानभिज्ञो भूभुजैष यः । सभोजाज्राजवदनो हन्यादित्यभ्यधाज्जनैः ॥२८६७॥
दरद्राजानकानीतनेतारौ कम्पनापती । प्रख्यातक्षेमवदनमत्त— —[1]भिधावुभौ ॥२८६८॥
त्रस्यच्चोजसनामा च कोट्टेशो मन्त्रितं रहः । ब्रुवाणास्तद्व्यहस्यन्त भोजेनान्तरवेदिना ॥२८६९॥
2870 स्फाटिकेनेव सैन्येन तेनापि रुद्धमप्यथ । दिधक्षु[1] राजार्कमहो विड्डसीहेन्[2]धनेपतत् ॥२८७०॥
पार्थिवानर्थदुश्चिन्तामययक्ष्मपरिक्षतः । स यत्कृष्णक्षपाक्षीणसोमसाम्यं समाययौ ॥२८७१॥
रोगग्रस्ते रणग्रष्ठे पृष्ठगोप्तरि भर्तरि । तथाभियोज्ये स्थाने च भयजर्जरतां गते ॥२८७२॥
आहारस्यं बलहरं विहाय निखिलास्ततः । पलायिषत[1] तेऽन्येद्युर्विगाह्य हरिभिर्गिरीन् ॥२८७३॥ युग्मम् ॥
दृष्ट्वा बहुमतं प्रातरागन्तारः पुनर्वयम् । कथयित्वेति संप्रार्थ्य साल्हणिं सह तेनयन् ॥२८७४॥
2875 प्राक्पीतकोशो[1] वैवश्यात्स तेषामनुगोभवत् । भ्रष्टकार्यस्तु वैकल्यं भग्ने मज्जाविवादधे ॥२८७५॥
मुहुः सर्वशिरोद्रिक्त[1]रक्तपूर्णमिव ज्वलन्[2] । अवरोहदनच्छाम्बुसोपानाश्मनिभं मुहुः ॥२८७६॥
ज्ञातेन पतितेनेव मुहुर्व्योम्ना महीसमम् । व्रजतस्तस्य वैलक्ष्यादलक्ष्याक्षमभून्मुखम् ॥२८७७॥
दध्यौ च भिक्षुं ये शश्वत्प्रभावं वयमीदृशाम् । राज्ञो दृष्ट्वाप्यनात्मज्ञा जानीमो मर्त्यधर्मताम् ॥२८७८॥
प्रतिभाप्रौढनिर्भाततत्त्वानां नान्यथा गिरः । महाकवीनामेतावृक्प्रतापानलवर्णने ॥२८७९॥
2880 राज्ञः प्रतापशिखिनः कणाः क्षोणौ न सन्ति चेत् । तत्कस्मादयमायाताः पदन्यासेष्वधीरताम् ॥२८८०॥
अनेकशाङ्कैर्वीराणां पीतधाराम्बुडम्बरे । शोषः प्रादुष्कृतो न स्यात्तज्ज्वालासंज्वरं विना ॥२८८१॥
किमन्तरेण तद्धूममालान्ध्यं प्रोन्मिषद्दृशः । मार्गामार्गविभागस्य परिज्ञाने विमूढता ॥२८८२॥
मधुमत्यास्तटेऽन्यस्मिन्विवर्ज्य दरदः स्थितान् । वीचीजवनिकाच्छन्नः सोवाप्याथ तटेवसत् ॥२८८३॥
क्रमादुत्खातखेदस्तैर्नीत्वा स्वशिबिरा[1]न्तरम् । तत्रैष्यतेति संधातुं रोहद्रोहस्पृहा[2]तुरैः ॥२८८४॥
2885 नृपं तेषां ह्यगण्यार्थवर्षिणं नयनैपुणात् । उपजीवितुमिच्छाभूत्तद्रक्षणवणिज्यया ॥२८८५॥
नानेहा विग्रहस्यायं प्रत्यासन्नो हिमागमः । मधुमासि विधास्यामः पुनरारब्धिमुत्तमाम् ॥२८८६॥
कालक्षेपेक्षमस्त्वं चेत्क्षुद्रराष्ट्राध्वनाधुना । त्वान्तर्निदध्मो बलिनस्त्रिहुद्धकस्योपवेशने ॥२८८७॥
राजानं राजवदनः भितस्तैरित्यसावतः । उत्क्षिप्यत स्वराष्ट्रान्तर्युक्त्या बन्धुं नराधमैः ॥२८८८॥ तिलकम् ॥
अपि राजपुरीयाणां कौटिल्यं तैर्हि जीयते । दैर्घ्यं निदाघघस्रा[1]णां वियोगदिवसैरिव ॥२८८९॥
2890 तथा यातमुपालेभे दूतैर्बलहरोऽथ तम् । ग्रहे निहितवांस्त्वस्मीति त्रोटितव्रटाकरः ॥२८९०॥
उत्साहदाहवस्थोपि स तथा गार्गिम[1]भिमम् । आयान्तं च नृपानीकमुत्साहार्तं[2] व्यचिन्तयत् ॥२८९१॥
अकस्माद्विद्रुतदरद्राजभोजादिवार्तया । न व्यदीर्यत यद्धैर्यपर्याप्तेस्तत्किलाद्भुतम् ॥२८९२॥
आडम्बरालम्बनस्य भेदेप्यच्छिन्नविग्रहः । यदयुद्धोद्धतं सिध्येत्तत्कस्यामानुषं विना ॥२८९३॥

---

२८६८. [1]) Thus A; the *akshara* before the *lacuna* could be read also श्च; C °वदनमधुभक्ताभिधा°. २८७०. [1]) Emended with C; A दिवक्षु.—[2]) Emended; A विड्डसूहेन्धने°. २८७३. [1]) Emended; A पलायिसतेन्ध°. २८७५. [1]) A °कोषो. २८७६. [1]) Doubtful emendation; A सर्वशिरोदृक°.—[2]) Emended; A °ज्वलन्. २८८४. [1]) A स्वशिबिरा°.—[2]) Emended; A रोहडोहः स्पृहा°. २८८९. [1]) Emended; A °स्त्राणां. २८९१. [1]) Emended with C; A गर्मिम°.—[2]) Doubtful emendation; A °कमु – हाव; C °भीकं दृष्ट्वापि नष्ट°.

कालानुरोधात्संधिस्तु धन्यद्वाराधिपावथ । सोयोजयद्विलम्बेन भोजप्रत्यागमाशया ॥२८९४॥
ततोलंकारचक्रः स नेतुं साल्हणिमाययौ । शातेषाद्वारदानेस्य प्रार्थिता परिपन्थिनीः ॥२८९५॥ 2895
बुद्ध्वा तदनुबन्धेपि द्रोहनिर्बन्धिनीः सभाः । अग्रहीन्मार्गसेत्वग्रे निधनाध्यवसायिताम् ॥२८९६॥
भृत्यैः सह युवप्रायैर्वीक्ष्य तं मर्तुमुद्यतम् । दरातुरं दरद्राजसैन्यं तत्सैन्यमाययौ ॥२८९७॥
व्यपोहन्ती चलल्लहरी बाहुभिः कलहं सरित् । कल्लोलास्फालनोल्लापैर्निनिन्देव दरद्बलम् ॥२८९८॥
ह्रेपितः स्वावरोधैश्च सेर्ष्यैश्च म्लेच्छपार्थिवैः । सैन्यैः कदनभीतैश्च विड्डसीहोथ तं जहौ ॥२८९९॥
पुरःसरैर्भ्रमसेतुपालैः पारं परं ततः । विद्राव्य तानि स प्राप भिन्दंस्तूर्यरवैर्दिशः ॥२९००॥ 2900
असामर्थ्ये वरूथिन्याः स्वस्य प्रार्थितसंधिना । आनीतो विड्डसीहेन दूतः प्रोक्तोथ भूपतेः ॥२९०१॥
अमानुषानुभावेन तावत्स्वस्वामिना भवेत् । प्रातिसीमिकसामन्तबुद्ध्या स्पर्धोद्य धीवरः ॥२९०२॥
अभद्रेयानुसंधान एव यान्तौ यमान्तिकम् । जयराजोस्मि चामुष्य प्रभावावेदकौ द्विषि ॥२९०३॥
तेन दिव्यानुभावेन निर्जयोपि जयो मम । पान्थस्य कूलविभ्रंशात्तीर्थे पतनमुन्नतिः ॥२९०४॥
अथायातः पुरे स्थित्वा कंचित्कालं निजेविशत् । यमराड्गमसत्कीर्तिलसन्नन्दनमालिकम् ॥२९०५॥ 2905
अबुद्ध्वा भोजमायान्तं संधिं तत्रैव वासरे । सार्धं हारेशधन्याभ्यां स राजवदनोप्यगात् ॥२९०६॥
अभ्यागतं तं व्यावृत्य षष्ठं षष्ठं मनस्विनाम् । आदाय तावथाभ्यर्णे प्राविक्षातां क्षमापतेः ॥२९०७॥
अहंकाराद्विमोहाद्वाविमर्शेन बहिष्कृतौ । उपेक्षामक्षते भोजेभजतां राजबीजिनि ॥२९०८॥
आहूतस्तु हठोत्कण्ठाभाजापि प्रभुणासकृत् । अनिःशेषीकृतारातिर्न व्यावर्तत रिल्हणः ॥२९०९॥
प्रभोः पुरस्तात्कार्यान्ते तेन स्थातुमशक्यत । प्रसादाकाङ्क्षिणा सूदेनेव भोक्तुं न हि क्वचित् ॥२९१०॥ 2910
द्विधा कृता येन युद्धे पृथ्वीहरचमूद्वयी । मगधेन्द्राकृतिर्भीमेनेव कार्याक्षमाभवत् ॥२९११॥
मातृकुक्षिमिव स्वोर्वीं तेनाजौ लोष्टकः कृतः । खाण्डवं खण्डितः सर्प इव गाण्डीविनाविशत् ॥२९१२॥
भजंश्चतुष्कः संकोचं दुर्भेदं त्रिल्लकालयम् । स्वकायकर्परं दर्पोज्झितः कूर्म इवाविशत् ॥२९१३॥
निःशेषीकृतकार्यः स शौर्येणैव महीपतेः । पार्श्वे पावनखज्योतिःपट्टबन्धाप्तये ययौ ॥२९१४॥
प्रतापैर्नृपतेरित्थं विप्लवः शोषितोप्यभूत् । अमात्यमतिदोषेण भूयः प्रादुष्कृताङ्कुरः ॥२९१५॥ 2915
दण्डार्हो राजवदनो दानेनाप्यायितो यतः । निर्भयं भोजमायान्तं प्रतिजमाह तं पुनः ॥२९१६॥
उत्कोचपरिणामार्तः सोथ स्थापयति स्म तम् । दिन्नाग्रामाभिधे स्थाने खाशकानां निवेशने ॥२९१७॥
इत्येनमब्रवीच्छ्वश्चेदायास्यो नानुगामिनः । मितानुयायी हारेशः प्रायात्स्वगोचरान्मम ॥२९१८॥
सोत्कम्पः साहसस्रोतःपातेनीयत नौरिव । त्रिल्लकेनापि स स्थैर्यं नीतिरज्जुप्रसारणात् ॥२९१९॥
व्यसनोल्लासवैवश्यं विशां पत्युर्व्यचिन्तयत् । येनाव्यवस्थाप्राथम्यं स आल्मः पुनरग्रहीत् ॥२९२०॥ 2920
अलंकारादिभिः स्वास्थ्ये स्थाप्यमानोपि मन्त्रिभिः । अत्यजन्नैव कौटिल्यमजितात्मेव दुर्मदम् ॥२९२१॥

२८९५. ¹) Emended; A °हारसावैव; the text is corrupt. २९००. ¹) Emended; A विद्राविनानि. २९०१. ¹) Emended; A वरूथिन्या. २९०२. ¹) Emended; A ताव स्वामिना. २९०३. ¹) Emended with C; A यान्तो. २९०५. ¹) Emended; A °मालिकाम्. २९०७. ¹) The letter corresponding to थ cannot be read with certainty in A; C तावत्ताभ्यर्णे. २९०८. ¹) A °विमर्षेन.—²) Emended; A भजते. २९१२. ¹) Comp. note to लोष्टक: viii. 2496. २९१३. ¹) Emended with C; A भजंस्तु°. २९१९. ¹) Emended with C; A °स्रोतपाते°. २९२१. ¹) Emended; A अत्यजन्नेव and °जितात्मैव.

यदं भैष इवापाकं तमवज्ञाय पार्थिवः । पक्वगण्डानिवारेभे रिपून्पाटयितुं परान् ॥२९२२॥

आगन्तव्यं त्वया पश्चात्त्वरस्मात्प्रकम्प्यताम् । भोजमुक्त्वेत्यलंकारचक्रोगाद्विम्बोधनः[1] ॥२९२३॥

तं जयानन्दवाडाख्यो[1] दस्युरानन्दवाडजः । अन्वयुर्विक्रमोदग्राः परेपि क्रमराज्यजाः ॥२९२४॥

2925 अपस्थितो राजगृह्योलंकारः स्वल्पसैनिकः । वालुकासेतुकल्पस्तैर्जज्ञे[1] सिन्धुरयैरिव ॥२९२५॥

स तु रामचराख्याजिक्षोभसंभावनां[1] विधाम् । तदपादयदेकाकी कुर्वन्बहुभिराहवम् ॥२९२६॥

आपानरभसक्षुभ्यद्रक्षःसंभ्रमदक्षिणम् । रणं जगाम गञ्जास्त्वमञ्जसाजपरिप्लुतः ॥२९२७॥

स तूलकूटमिव तत्कटकं विकटं द्विषाम् । किमन्यत्पैरयत्क्वापि प्रभञ्जन इवाञ्जसा ॥२९२८॥

मासाय गृध्रकङ्कादिपक्षिभ्रातस्य[1] तत्यजे । आनन्दवाडस्तनुः[2] स हत्वा तेनेषुणा रणे ॥२९२९॥

2930 भोजस्योत्थातुकामस्य जिघृक्षोः क्ष्माभुजथ तम् । पङ्कप्रधावत्ककरव्याधन्यायो व्यवर्धत ॥२९३०॥

अनुद्यमनसामर्थ्यः भ्राम्यति ककरो यथा । धावन्पङ्के पतन्व्याधोप्यनुधावत्यथान्वहम् ॥२९३१॥

प्रसङ्गे साहसस्यैवं भोजः क्लैब्यमगात्तदा । तं प्राप्तुमिच्छुर्भूपोपि मतिमोहं मुहुर्मुहुः ॥२९३२॥ युग्मम् ॥

दिन्नाग्रामस्थिते भोजे स राजवदनोप्यगात्[1] । पुनः किं चौरचण्डालाः प्रेषसीत्युक्तिमीशितुः ॥२९३३॥

डामरा भग्नसंघाता भूयः पूर्वाधिकां ततः । कन्थां ते मन्थयामासुर्मुहुर्यो शौर्यशालिनः ॥२९३४॥

2935 ते द्वारपतिमायातं सोढुं शेकुर्न केवलम् । अशक्यैरादृतैर्यावत्पर्यायादुदवेजयन् ॥२९३५॥

तेषां त्राणार्थमन्येषामुत्थानार्थमथाययौ । कृष्टोलंकारचक्रेण नीविं दत्त्वा स साल्हणिः ॥२९३६॥

तेषां परेद्युः पार्श्वं स ययाद्वरसकृद्यदा । हायाश्रमं भ्रान्तसैन्यो द्वारेशोबुद्ध तं तदा ॥२९३७॥

अजानन्निव तेषां स व्याजसंधिं निबद्धवान्[1] । मिषात्कुतोप्यगात्तिर्यक्स्थितं सत्तारमूलकम् ॥२९३८॥

तस्मिंस्तत्र स्थिते दूरात्कुतस्त्यामपि फूत्कृतिम् । श्रुत्वा भोजोथ तत्सार्थं किमपि व्याकुलीभवन् ॥२९३९॥

2940 निजैर्विहस्यमानोपि त्रासात्तस्मादहेतुकात् । व्यरंसीत्संभ्रमाद्यासौ चक्रे सज्जांस्तु वाजिनः ॥२९४०॥

त्रस्तोलंकारचक्रोथ दशग्राम्यमतो श्रुतम् । क्व राजपुत्र इत्येवं कथयित्वा पलायितः ॥२९४१॥

उदतिष्ठत्ततो ग्राममध्यात्तूर्यध्वनिर्महान् । आस्कन्दावेदकः सेनानिनादश्च क्षपामुखे ॥२९४२॥

अलक्षितो ध्वान्तमध्ये भेजे भोजः पलायनम् । श्वः कर्तव्येष्वलंकारचक्रो युद्धाय संदधे ॥२९४३॥

इत्तो द्वाराधिपनाभिर्गिरिवर्त्म प्रकाशयन् । ध्वान्तध्वस्तात्मनां[1] तेषां तदाभूदुपकारकः ॥२९४४॥

2945 द्वाराधिपस्य क्षाम्यन्तः संधिं[1] भोजप्रतीक्षया । श्रुत्वा तमथ वृत्तान्तं भङ्क्ते ते डामरा ययुः ॥२९४५॥

असंस्पृशन्नपत्यादिबन्धं धीरोबलाभयात् । आजिं स भोजोलंकारचक्रेणामङ्गलाग्रहम् ॥२९४६॥

........................[1] । भोजस्तथाप्यभूत्पर्णाहारादिक्लेशान्वितः ॥२९४७॥

बाणाग्निजस्त्रिपुरनिर्दहने प्रतापः पाथोनिधेः प्रमथने बडवाग्निजन्मा ।

आसाद्य मन्दरनगेन समागमं हि न क्वापि पन्नगपतेः सुखसख्यमासीत् ॥२९४८॥

---

२९२३. [1]) Emended with C; A °चक्रेगाद्वि°. २९२४. [1]) A °वाडाख्यो and °वाडजः. २९२५. [1]) Emended with G (*see. manu*); A °कल्पस्तं जज्ञे. २९२६. [1]) Conjectural reading; A राम°राधा°; C रामुभिराधा°. २९२९. [1]) Emended A °पक्षिभ्रातस्य; C °पक्षिभ्रा°.—[2]) A आनन्दवाड°. २९३३. [1]) Emended; A तस्माप्तु°. २९३८. [1]) Emended; A सन्धा°. २९४४. [1]) Emended; A °स्तमना. २९४५. [1]) Emended with C; A °सन्धन्तः. २९४७. [1]) Two or more *pâdas* seem to be lost here; A does not indicate the *lacuna*; C supplements संरम्भात्कर्मारेभे सामर्थ्यं च चावने.

क्षुत्पिपासाश्रमं हन्तुं प्राप्तः स्वविषयावनौ । अलंकारात्मजैर्भूयो बन्धुं¹ भोजोऽभ्यलष्यत ॥२९४९॥
पितुर्मतेन बुद्ध्या वा स्वया तत्तद्विधित्सतः । सोऽभिलाषाय निर्यातः प्रापाय विषयान्तरम् ॥२९५०॥ 2950
ततो बलहरेणैव कृत्यं निश्चित्य कार्यवित् । अनास्थोऽन्यबलेष्वन्येषु दिक्षाग्रामं पुनर्ययौ ॥२९५१॥
द्वाराधिपोऽहितोद्धारधीरोऽप्यशान्तरेक्षमः । चक्षूरोगेण भग्नाभियोगोऽकस्मादभ्यधीयत ॥२९५२॥
भोजाय दातुमिच्छन्तो डामरास्ते द्रुते ददौ । पर्माण्डये गुल्हणाय राजजाय च निर्जितः ॥२९५३॥
रोगोऽखण्डतया दण्डप्रयोगावसरे कृते । तत्र वाम प्रयुज्यैव द्वारेशो विषशोऽविशत् ॥२९५४॥
अभियोगक्षणे तस्मिन्व्यथौ भारसहः क्षयम् । दुर्नामकामयक्षामः षष्ठचन्द्रोऽपि गर्गजः ॥२९५५॥ 2955
तत्रामयाविन्येवासोद्वेकौ तदनुजौ निजौ¹ । चकाते वसुधां दुःस्थामास्कन्दाद्यैरुपद्रवैः ॥२९५६॥
त्रिल्लकः प्रबलैरन्यैः सहाभेदं प्रवर्धयन् । नाग्रहीद्विग्रहैकामः सान्त्वनामपि भूपतेः ॥२९५७॥
षष्ठे निद्रां गते रोगमग्ने द्वारपतावपि । नियुक्तः क्ष्माभुजा धन्यो¹ निरगात्सारमूलकम् ॥२९५८॥
भोजश्च्युतोऽमुतोऽन्येषां बलिनां गोचरे पतेत् । ग्रामप्रतिष्ठो निस्तीर्णो देशाद्वासाध्यतां व्रजेत् ॥२९५९॥
इति संचिन्त्य सामाद्यैरुपायैस्तं जिघृक्षुणा । क्ष्माभुजामन्दसंरम्भो विदधे सोऽभियोगभाक् ॥२९६०॥ युग्मम् ॥ 2960
अज्ञातोदर्कवैषम्या दुर्नीतिः सा महीभुजम्¹ । व्यावृत्याबाधताच्छिन्नपुच्छाकृष्टेव पन्नगी ॥२९६१॥
बलिनं राजवदनं नृपं व्यावेत्य निर्बलम् । आभ्यन्तराश्च बाह्याश्च विक्रियां वक्रमाययुः ॥२९६२॥
छिद्रान्तराणि सुलभानि सदैव हन्त पातालरन्ध्रसरणेरिव दण्डनीतेः ।
वह्नीभवत्प्रसरमन्तरसंप्रविष्टो यात्यप्रतर्क्यनियमात्पतनं भजेद्वा ॥२९६३॥
भोजत्यागोऽर्थितो राज्ञा क्षीणार्थोऽसौ व्रजेदितः । उक्त्वेत्यमुं बलहरस्तस्य वृत्तिमकारयत् ॥२९६४॥
तां लब्धप्रसरां मायां राजपक्षे विलोक्य सः । युक्त्यन्तराणि संलेभे प्रयोक्तुं नीतिकौशलात् ॥२९६५॥ 2965
संधिं पदे पदे बद्ध्वा सार्धं बलहरादिभिः । कुर्वन्गतागतं धन्यो जनस्यावाप हास्यताम् ॥२९६६॥
शश्वद्यावर्तमानस्य राजकार्यस्य नावधिम् । अरघट्टघटीयन्त्रगुणस्येवाससाद सः ॥२९६७॥
तस्य चक्र इवोद्भ्रान्ते कर्तव्ये तैक्ष्ण्यभागपि । भेत्तुं परोढुं वाप्यासीन्नयो बाण इवाक्षमः ॥२९६८॥
नीतराजद्वयो व्यग्रः शेषस्यैकस्य विग्रहे । चतुरङ्ग इव क्रीडन्विवशोऽभूद्दिशां पतिः ॥२९६९॥
बद्धलक्ष्यः प्रदानार्थं ततश्च छद्मना परान् । भञ्जनो वाजिपत्त्यादि नाप्यासीन्नाप्यजीगणत् ॥२९७०॥ 2970
दस्युषु स्यूनसङ्गेषु शीतापायप्रतीक्षिषु । नागाद्बलहरः स्वेषामुन्मूलनमशङ्कत ॥२९७१॥
सामर्थ्यशिथिलामित्रभावे सूत्रितविप्रिये । तस्मिन्धावति धन्ये च शङ्कस्तोऽवेपताकुलः ॥२९७२॥
संमन्त्र्य सार्धं भोजेन धन्यं समदिशत्ततः । बद्धार्पयत नागं मे भोजं दास्यामि वस्ततः ॥२९७३॥
भूरिकार्यकृतं स्वस्य बन्धनार्थोद्यतां¹ रिपोः । धन्यो व्यसनवैवश्याद्धियं नाबुद्ध तस्य ताम् ॥२९७४॥
पार्थिवाः स्वार्थसंसिद्धित्वरान्विरतसत्त्वया । धियाविशुद्धं यत्किंचित्कुर्वन्तीति न नूतनम् ॥२९७५॥ 2975
काकुत्स्थोऽपि प्रियाप्राप्त्यै व्यग्रः सुग्रीवसंपदे । वीरोऽविधेयं स्वार्थान्ध्याद्वधं व्यधित वालिनः ॥२९७६॥

२९४९. ¹) A बन्धुं. २९५६. ¹) Emended; A तदनुजं निजम्; cf. ... viii. 2753. २९५८. ¹) Emended; A धन्यै. २९६१. ¹) Emended; A °भुजाम्. २९७०. ¹) Emended; A °द्ववर्त°. २९७१. ¹) A has written first यूनसङ्गेषु and subsequently indicated the reading स्यून°. २९७४. ¹) Emended; A °यं. २९७६. ¹) Emended with C; A काकुस्थोऽपि.

संहृत्य सत्यनिस्थत्वं राज्यमर्वाविशुद्धधीः । आचार्ये पाण्डवो राजा धर्मनिम्नोप्यपातयत् ||२९७७||

आ भिक्षुविग्रहाविस्थन्नोग्धुर्नागस्य विग्रहः । स्वार्थापेक्षी तटस्थस्य तत्काले न विगर्हितः ||२९७८||

अगृहीत्वा तु भूभर्त्रा कंचिद्भोजार्पणे पणम् । सोत्राष्टम्भीत्यभूत्तस्मिन्मन्युर्मतिमतां मनाक् ||२९७९||

2980 यथा तत्कृत्यमायत्यां हितं जातं तथैव चेत् । विचार्याकारि राज्ञा तच्छेमुषीयममानुषी ||२९८०||

विभिन्न इव भोजस्तु नागं समदिशद्यथा । दिल्हुर्बल्लहरो राज्ञे स्वदर्पणपणेन माम् ||२९८१||

बन्धमभद्रधानोस्य राज्ञस्त्रासादसौ भयेत् । स विदन्नथ माध्यस्थ्यमिति तं हि तथाब्रवन् ||२९८२||

षष्ठचन्द्रे गते निष्ठां जयचन्द्रेण पार्थिवः । संगृहीतेन तं नागं पार्श्वं प्रावेशयत्ततः ||२९८३||

पक्षीकृतः क्ष्माभुजायं हन्यादस्मान्भयादिति । चलन्तमपि तं भोजस्तन्मन्त्रिणमबोधयत् ||२९८४||

2985 तथेति जानन्नपि तं कृष्टोस्म्येतैरनीशताम् । यातः किमपि हन्तेति दूतैर्नागोप्यभाषत ||२९८५||

नियतं नियतिस्रोतोगर्भे जन्तोर्निमज्जतः । कथ्यमानं तटस्थेन श्रोतुं न श्रवणौ क्षमौ ||२९८६||

नागे बद्धे तत्कुटुम्बैर्भीतैरेत्य समाश्रितः । मायाशाली बल्लहरो दुर्दर्शः समपद्यत ||२९८७||

भोजनिष्क्रयविक्रेयं तमादाय ययौ ततः । रिल्हणेन समं धन्यो धावन्बल्लहरान्तिकम् ||२९८८||

सान्त्वहासोमोहयत्तौ प्राङ्नागं दत्त मे ततः । भोजं दास्यामि व इति ब्रुवन्भ्रामयति स्म सः ||२९८९||

2990 बद्धमूलतया दूरं दुर्धर्षो योद्धुमागतम् । सर्वं तत्र तयोः सैन्यं निन्ये कृत्यविधेयताम् ||२९९०||

वर्षयुद्धापकर्षादि खिन्नौ तौ ततोभ्यधात् । हतोपहतयोः कुर्यां युवयोर्मतमित्यसौ ||२९९१||

एकप्रयाणान्तरिते स्थितयोः पथि चाकरोत् । कार्यान्तःपातवैवश्ये तयोर्मतिविमोहनम् ||२९९२||

काचिद्बल्लहरस्यासीत्पर्याप्तिर्धैर्यसत्त्वयोः । निश्चोद्यायतने काले वीराणां विरलैव या ||२९९३||

तया हारितमार्गाय साहसात्पार्श्वमीयुषे । ब्रुद्यति स्म न धन्याय लोभाद्राजाय नापि यः ||२९९४||

2995 मतिमोहेन नागं चेद्धुर्मे सचिवास्ततः । कुर्यां तं स्वपदेभ्यर्थ्य चकारेति च चेतसि ||२९९५||

नागासांनिध्यलब्धार्द्धदार्ढ्यार्थं गूढवैकृतः । भ्रातृव्योपानयन्नागं धन्यायैल्लोष्ठकाभिधः ||२९९६||

सचिवैर्निहते नागे निर्हेत्वहितमोहितैः । दुर्मन्त्रितं नरपतेः स्वैः परैश्च व्यगर्ह्यत ||२९९७||

स्वजातीयवधक्रोधाद्विरुद्धैः सर्वडामरैः । नागानुगैश्चाश्रितोभूत्ततो बल्लहरो बली ||२९९८||

देहिनो व्यसनापातवैवश्याद्भ्रमतोपथि । अकार्यं कुर्वतः कार्यं सिद्धः संसाधयेद्विधिः ||२९९९||

दुर्वाहुःसहविस्तरानवतया बद्धावधाने मनस्युन्मार्गभ्रमगेवशस्य रभसाच्छ्वभ्रे परिभ्राम्यतः ।

3000 अन्योपाहितकोशपृष्ठलुठनात्संदर्शिनाङ्क्षनैर्जन्तोर्हन्त तनोति दुर्गतिशमं रम्यानुलोम्यो विधिः ||३०००||

तथा निरनुसंधानं नागं धीसचिवैर्हतम् । नाबुद्ध भोजः संजातत्रासस्त्वेवं व्यकल्पयत् ||३००१||

लब्धवर्णस्य नावर्णावहं कर्मेदमीशितुः । अलब्धपणबन्धस्य वाञ्छितान्यै विशङ्क्यते ||३००२||

[1]यथ युद्धमिति व्यर्थं[2] हर्षाद्वाचामवापि यः । भोजमन्यकरस्थोयमशक्यो ह्यन्यथा मम ||३००३||

---

२९७७. [1]) Emended; A सोवष्टम्भो°. २९८१. [1]) Emended; A °बल्लहरे. २९८४. [1]) Thus A, perhaps read °न्मन्त्रितमबो°. २९८५ [1]) Emended; A °स्मीत्स्वैतैर°. २९८८. [1]) Emended with C; A भोजोमि°.—[2]) Emended with C; A °न्बलहरोन्तिकम्. २९८९. [1]) Emended; A मोहयन्तौ. २९९१. [1]) Thus A; C °कर्षाद्विसङ्ग्विनौ.—[2]) Thus corr. by A₁ from °व्यधात्. २९९५. [1]) A₁ has written मतिमोहे; न supplied apparently by A₂. ३००३. [1]) The text of this verse is evidently corrupt; emendation doubtful.—[2]) Perhaps read युद्धमतिव्यग्रं.

उक्तोऽसि मोहयन्धन्यमुक्त्वा – – दिमं संदिशेत्[1] | इति मां राजवदनः स्थितस्तन्मूनमन्यथा ||३००४|| युग्मम् ||

आ भिक्षुविप्रवाग्रोहत्वभिक्षस्यानुबन्धिनः | किं राजवदनोऽप्येष लोभात्संभाव्यते न भूः ||३००५|| 3005

अथाविशाङ्क्लिनस्त्रासत्युदासायास्य खाशकाः | रक्तार्द्रकृतिश्वसाङ्कि कोशपानं प्रचक्रिरे ||३००६||

प्रादुष्कृतभियः क्षिप्ररक्षिणोऽमुष्य तिष्ठतः | विश्वासार्थं बलहरो विरलः पार्श्वमाययौ ||३००७||

अमात्यमतिजाड्येन नष्टे कृत्येऽथ कृत्यवित् | स्वयमुत्तम्भने नीतः संरम्भसंभ्रमो नृपः ||३००८||

चैत्रः पादपमण्डलस्य तटिनीतोयस्य वर्षागमः सत्कारो गुणगौरवस्य नयनप्रेम्णोऽन्तिकालेवनम् |

ऐश्वर्यस्य महोद्यमो जयविधेर्गोष्ठाविषादग्रहः कर्तव्यस्य च सिद्धदेवनृपतिर्म्लानौ न तस्यावहः ||३००९||

प्रवाहेणेव कृत्यस्य हठेन हरतोऽन्तरे | प्रातिलोम्यं भिन्नबला पारं गन्तुं न पार्यते ||३०१०|| 3010

अतो धूर्तो नृपो मुग्ध इति ज्ञातोऽरिभिर्मुधा | मौग्ध्यं प्रदर्शयंस्तेषां यततेस्माभिसंधये ||३०११||

स हि यत्नप्रदानेन भजन्भोजान्तिकस्थितीन् | तस्याविश्वासपात्रत्वं मन्त्रस्तस्याभितोऽनयत् ||३०१२||

गन्धेन वासितोत्सङ्गाः कुरङ्गार्यङ्गजन्मना | प्रज्वलन्त्यो विभाव्यन्ते तटिन्योऽपि कवाटिभिः ||३०१३||

मीडक्कान्तः सरन्ध्रस्य सर्वतो हि भयं स्पृशन् | जाले हारामबद्धे च निर्गमे पतनं विदन् ||३०१४||

ताम्येद्यथा खगो भोजस्तथान्तःस्थेऽप्यविश्वसन् | बहिर्भूपेन रुद्धाध्वा प्रस्थानेऽप्यभजद्भयम् ||३०१५|| युग्मम् || 3015

तदा स दौस्थ्यातिथितां प्राप्तः प्रैक्षत न क्षणम् | मनोविनोदनं किंचित्कृत्यं लोकद्वयोचितम् ||३०१६||

स्वाभिषङ्गमनुपङ्क्ति परस्य दुःखं हन्ताश्रयं व्यथयति प्रसभार्द्रभावम् |

बद्धः सरोजकुहरे विरहार्तनादैश्चक्राभिधस्य मधुपोऽधिकमेति दैन्यम् ||३०१७||

रणे पूर्णव्रणाद्यानशोणितो लूनकुन्तलः | केणोद्गार्याननः क्रन्दंस्तेनैकः प्रैक्ष्यत द्विजः ||३०१८||

स पृष्टो विप्लुतिर्नीतं सर्वस्वं विक्षतं तथा | स्वं डामरैर्निवेद्यैनं निनिन्द भ्रातुमक्षमम् ||३०१९||

स्वदौस्थ्यार्तमनास्तस्य दुःखेन व्यथितोऽन्वहम् | घट्टितार्द्रव्रण इव प्राह स्मेति स सान्त्वयन्[1] ||३०२०|| 3020

गर्हार्होऽस्मि न ते ब्रह्मन्योऽनुमाद्योऽहमीदृशः | विषमे वर्तमानश्चेत्यथ सोऽपि तमब्रवीत् ||३०२१||

दुर्मेदेनामुना ब्रूहि कोऽर्थः पार्थिवपुत्र ते | सारासारविदो यूनः कुले जातस्य मानिनः[1] ||३०२२||

प्राणान्संदेहमारोप्य प्रणम्य प्राकृताशयान् | पीडयित्वा विशः क्लेशैः कार्यं किमिव पश्यसि ||३०२३||

वध ते प्रतिभात्येव जेतव्यो विहितो न किम् | अमिशीचः स सारङ्गः परशौर्याभिमज्जने ||३०२४||

यत्र शास्त्रशलाकापि विकला तद्विधीयते | इन्दीवरदलद्रोण्या घटनं स्फाटिकाश्मनः ||३०२५|| 3025

पृथ्वीहराग्रतारादिमत्यनीकिजितः परे | के नामात्र न संघर्षे क्षुद्रमाया हरिद्रति ||३०२६||

किं दृप्यां पत्र कुड्डापि कृत्यं दैराज्यजीविनाम् | भृत्याशायाः फणिमाहिगृहीता इव भोगिनः ||३०२७||

जातैः क्ष्मातलयोद्वहे फणिकुले धिग्भोगिडिम्भैर्मुदा[2] व्यालग्राहिविकासितास्यकुहरैर्ग्रासस्य[3] हा गृह्यते |

एतान्भिक्षयितुं न तु प्रथयितुं ते जीविकार्थे जनत्रासार्थं ननु कारयन्ति हि हतैर्निर्मज्जनोन्मज्जनम् ||३०२८||

इत्युक्तवन्तं तं सान्त्वयित्वा भोजो व्यसर्जयत् | तदैवं चाशु व्याकोशविवेकः समपद्यत[1] ||३०२९||

३००४.[1]) Thus A; C °मुख्याम्मुग्धोऽस्मि सन्दिशेत्.—[2]) Perhaps read संदिशन्. ३०११. [1]) Emended with C; A °भीतः ३०२२. [1]) सारसा no longer legible in A; found in R G C. ३०२०. [1]) Emended; A दृष्ट्वा. ३०२८. [1]) Emended with G (sec. manu); A °कुलैर्भोगि°.—[2]) Emended; A मुदा.—[3]) Emended with G (sec. manu); A °कासितस्य कुहरैर्ग्रासस्य ३०२९. [1]) Emended; A तदैव.

भव्यात्मत्वं प्रशममहिमोल्लासने हन्त हेतुर्भावानां तु ध्रुवमपरथा मार्दवं क्रूरता वा ।
3030 स्पृष्टं[1] पादैरमृतमहसः स्यात्कठोरं हिमांशोर्याति ग्रावाप्यहह रभसादार्द्रतां चन्द्रकान्तः ॥३०३०॥
राजन्याभिजने जातोप्यलज्जत्वमशिक्षितः । सोन्तरं स्वस्य राज्ञश्च मुहुर्महदचिन्तयत् ॥३०३१॥
गुणैः शौर्यनयत्यागसत्यसत्त्वादिभिः प्रभोः । पूर्वेप्युर्वीभुजः खर्वाः क्षुद्राः स्पर्धासु के वयम् ॥३०३२॥
तस्य प्रभावदीप्तेपि समये क्षान्तिशीतला । शक्तिः क्षयजडत्वेपि मुग्धानां नो महोष्मता ॥३०३३॥
क्ष्वेडाभितापनिस्त्रिंशोरगसंगमेपि तुङ्गस्य चन्दनतरोरपि शीतलत्वम् ।
काले हिमर्तुपरिपिञ्जरसंज्वरेपि निम्नस्य कूपकुहरस्य महोष्मयोगः ॥३०३४॥
3035 कुतोपि पर्ययात्कार्यं प्राप्तं नृपममुं विना । प्राप्य कस्य पुनः प्राप्यमप्यभुक्त्वा न बाधितम्[1] ॥३०३५॥
भ्रष्टं निर्झरवारि शुभ्रमचलैः स्वीयेन भूयः क्वचिल्लभ्यं लभ्यमथाभ्रतः कलुषतादुष्टं प्रकृष्टं न तत् ।
निर्यन्निर्झरनिम्नगाम्बु नभसः प्राप्येत नित्यं द्रवत्प्रालेयत्वमुपेत्य शुद्धिमधिकां नाद्रेर्हिमाद्रेर्नगैः ॥३०३६॥
तदर्थमेव प्रथितो योनर्थोमथितात्मनः । स तेन स्वस्थतां नेतुमर्थितो न स्पृशेद्रुषम् ॥३०३७॥
प्लोषाय योस्य दववह्निमदावमुष्मिन्स्वकस्थे स तेन शिखिना ग्लपितः समीपम् ।
अभ्येति चन्दनतरोर्दववह्निदाहशान्त्यै यदि प्रियकृदेव न तस्य किं स्यात् ॥३०३८॥
सममंतुर्गतावर्हदपकर्तैव[1] भूपतिम् । लोकनाथं तमुद्धर्तुं धीरं धन्यः पुनः पुनः ॥३०३९॥
3040 राजप्रसादनोपायान्वेषी बलहरान्तिकम् । राजदूतमथायान्तमेकदैकं[1] व्यलोकयत् ॥३०४०॥
दरंदर्शी व्रजन्दृष्टवान्प्राक्प्रज्ञातमन्तिकम्[1] । स नमन्तं तमानीय ततः स्मेर इवाब्रवीत् ॥३०४१॥
राज्ञः किमन्यसंधानैः संधिं बध्नात्वसौ[1] मया । प्राज्ञैर्हि भिषजा भोज्यमातुराय समर्प्यते ॥३०४२॥
ततस्तस्याभ्युपधानस्य नर्मस्मेरस्य जानतः । प्रत्ययोत्पादनं तैस्तैरालापैः किंचन व्यधात् ॥३०४३॥
निर्दम्भभावितैरुच्चैर्विस्रम्भः स कथान्तरे । अथाभिगम्य राजानं सुतम्भोजमभाषत ॥३०४४॥
3045 राजपुत्राभिजातस्य पादच्छायास्य लभ्यते । स्वर्णाद्रेरिव कल्याणप्रकृतेः पुण्यभागिभिः ॥३०४५॥
अनुवृत्त्यातिमृद्व्यापि तस्यापोह्येत[1] वैकृतम् । ज्योत्स्नयेव शरच्चानुपरितापौष्ण्यमम्भसः ॥३०४६॥
अपि स्मरसि चारत्वे[1] नियुक्तोस्मि महीभुजा । त्रिशतस्ते दरद्देशामभूवं पुरतः पुरा ॥३०४७॥
ततो निवृत्तो वृत्तान्तं मुख्यमाख्याय तावकम् । कालं क्षेप्तुं कथा[1] दैर्घ्यं नयन्मध्ये तमभ्यधाम्[2] ॥३०४८॥
क्षुत्तृडध्वक्लमभ्रान्तान्[1]देव त्वामवलोक्य माम् । निम्नतः स्वानुगान्भोजो[2] निर्भर्त्स्यैवं तदाब्रवीत् ॥३०४९॥
3050 स दैवतमिवास्माकं कुलालंकरणं प्रभो । वयं त्वत्सुकृतो यस्य नामुमः पादसेवनम् ॥३०५०॥
गण्याः पर्यन्तनिःसारास्तत्संबन्धादिमे वयम् । चन्दनभ्रान्तिकृत्काष्ठं यस्यास्तद्गन्धवासितम् ॥३०५१॥
तन्मुखेव दयार्द्रत्वं त्वयि यातः स लक्षितः । पृष्टकम्पितेव किं गर्भरूपो वक्तीति मां पुनः ॥३०५२॥
तन्निशम्यैव[1] भोजस्य द्रवीभूतमभून्मनः । सोन्तर्बाष्पोप्यपश्यत्तं सान्त्वयन्तमिवामतः ॥३०५३॥

३०३०. [1]) Emended with C; A स्पष्टं. ३०३५. [1]) Emended; A बाधितुम्. ३०३९. [1]) Emended with G (sec. manu); A समपोद्ध°. ३०४०. [1]) Emended with G (sec. manu); A °मेकमेकं. ३०४१. [1]) Emended; A °न्दृष्टवाक्प्रज्ञान्तम°; C °वाक्प्रज्ञातुम°. ३०४२. [1]) Emended with C; A सन्धिबन्धास्वसौ. ३०४६. [1]) Emended; A °पोह्यत. ३०४७. [1]) Emended; A चारुत्वे. ३०४८. [1]) Emended; A कथादैर्घ्यं.—[2]) Emended; A तमभ्यधात्. ३०४९. [1]) Doubtful emendation of C; A क्षुन्दस्व°.—[2]) Emended; A भोजं. ३०५३. [1]) व omitted in A; supplied with C.

सत्यक्षमाश्वासबोधमुग्धत्वेन विहीयते । तत्त्वविस्कारणाज्ञानादन्तःकरणवेदनम् ॥३०५४॥

अश्रद्दधानस्तामिच्छां भोजस्याकृष्णवर्त्मिनः । प्रतिकूलीकृते तस्मिन्धन्यो न प्रत्ययं दधे ॥३०५५॥ 3055

दर्विताभूद्यथा नागवृत्तान्ते न भवेत्तथा । महीभुजं मोहयितुं मायया दीव्यते मया ॥३०५६॥

मा भूद्विमोघमित्येवमुक्त्वा बलहरं रहः । व्याजार्जवेन भोजस्तु संधिबन्धाय तत्वरे ॥३०५७॥युग्मम्॥

तत्कालयोग्यसाचिव्यशक्तिकाचतुरस्तथा । तेनाशु दैशिकापत्यमेको दूत्ये न्ययोज्यत ॥३०५८॥

स बालकतया नित्यस्वतन्त्रशक्तिकां स्वयम् । आचरेदिति नाशङ्कां भोजे बलहरोभजत् ॥३०५९॥

पार्थिवः प्रार्थितः संधिदूतमाप्तं प्रतीक्षते । प्रत्यागतेन तेनेति ततो भोजोभ्यधीयत ॥३०६०॥ 3060

तत्रासंनिहितान्याप्तः स्त्रीत्वादप्रतिभामपि । धात्रीं नोनाभिधानां स्वां राज्ञोभ्यर्णे व्यसर्जयत् ॥३०६१॥

मृतेन पित्रा मात्रा च हीनं[1] तमनुयातया । मातृकृत्यं ययाश्रासीच्छैशवे माननीयया ॥३०६२॥

पत्युः प्रीत्यै विसंधानध्वंसाकल्पादिकल्पनात् । सखीकृत्यं सपत्नीनां यया शान्तेर्ष्यया कृतम् ॥३०६३॥

ह्रासोल्लासे[1] हि कार्याणां योग्यकृत्याप्रनिश्चयात् । न यां सुक्षत्रियां क्ष्माभृत्संभ्रान्तो जातु वीक्षते ॥३०६४॥

श्वशुरेण प्रजाभिश्च कृतं राज्ञोभिषेचने । आशास्यं यां महादेवीपट्टबन्धं समादधे ॥३०६५॥ 3065

अपत्याप्रयताभोगलोभभर्तृप्रसादनैः । प्रेर्यमाणाप्यकार्येषु बुद्धिर्यस्या न धावति ॥३०६६॥

स्वजनान्यत्र च संधाने जाते भर्तुरभिसधीः । भाग्योदयेष्वनुत्सिक्ता या चाखण्डितसङ्गता ॥३०६७॥

आ बाल्याद्भावविद्भर्तुः कुसृत्यनुसृतौ न सा । कार्यमध्यं विगाहेत मानाभिजनरक्षिणी ॥३०६८॥

इति कल्हणिकादेव्या माध्यस्थ्ये स धियं व्यधात् । प्रस्थानपदयात्रां सा सीमान्तप्रापणावधि ॥३०६९॥कुलकम्॥

गुप्त्यै लम्पकविन्नादि पराध्ये मध्यपातिनाम् । पाथेयार्थं पृथुस्वर्णभाजि कोशादि चात्मनः ॥३०७०॥ 3070

प्रापयामास किं चाष्टौ प्रकृष्टाभिजनोद्भवान् । पालनार्थं राजपुत्रान्देवी यस्सर्वसंविदम् ॥३०७१॥युगलकम्॥

बालकं तद्गृहीत्वा तामागमत्पार्थिवेन सः । धात्रीं स कारयन्धन्यो बद्धेच्छासिद्धिनिश्चयाम् ॥३०७२॥

विहितप्रत्ययस्तस्याः सद्यः स्यात्तु महीपतिः । राजधर्मस्य च वसन्नासीद्दोलाकुलाशयः ॥३०७३॥

स हि दध्यौ निर्विरोधो वैराग्येणाथ मायया । संकटान्मोचितव्योसौ[1] यायात्कालेन विक्रियाम् ॥३०७४॥

अनिःशेषितजीमूतजालमाविर्भवद्रविः । अनूनक्लेशदोषं च विवेको न स्फुरेच्चिरम् ॥३०७५॥ 3075

मुग्धाब्धिरनुसंधाननागबाधावशस्य नः । स्वार्थस्य सिद्धये माया तेनेयं निरमायि वा ॥३०७६॥

लब्धलक्षेपरिक्षीणे शक्ते[1] यूनि गणाश्रिते । क्षत्रधर्मस्थिते नेदृग्विवेकः क्वापि लक्ष्यते ॥३०७७॥

अवलि कुङ्कुमं पुष्पमपुष्पं क्षीरिणः फलम् । अकालपर्ययापेक्षं वैराग्यं वा महात्मनाम् ॥३०७८॥

न त्याज्यो राजपुत्रोसावेवं मायानिधिर्यदि । एवंविवर्तवत्यस्मिन्नदृष्टे किं दृशोः फलम् ॥३०७९॥

राज्ञी राजात्मजार्थिते प्रतिज्ञाभङ्गशंसिनः । ऋजुभावात्सुस्पष्टमन्यत्कार्यं न मन्यते ॥३०८०॥ 3080

अटन्ती[1] कुटिलं स्पष्टं सरित्सर्वेन[2] लक्ष्यते । कान्ताकुन्तलनिष्यन्दी तोयबिन्दुरिव क्रमः ॥३०८१॥

---

३०५४. [1]) Emended with G (*sec. manu*); A °कारणज्ञा°. ३०६२. [1]) Emended; A हीने. ३०६४. [1]) Emended; A °ह्रासो. ३०६६. [1]) Emended; A या. ३०६९. [1]) Emended; A सीमन्ताप्रा°. ३०७०. [1]) Emended; A °पातिनम्. ३०७१. [1]) Emended with C; A प्रापयामास.—[2]) Emended with G (*sec. manu*); A °न्देवीयत्स°. ३०७४. [1]) Doubtful emendation; A °तव्यासौ. ३०७६. [1]) Emended; A मुग्धाशिर°. ३०७७. [1]) Emended; A शक्तौ. ३०८१. [1]) Emended with C, A, has first written अ—तं and then supplied हि over the *lacuna*.—[2]) Emended with C; A सरस्व°.

इति ध्यात्वा राजधर्मे सत्यप्रशोधितं व्यधात् । धन्यरिल्हणयोः कार्ये भुतावन्याग्विसर्जयम् ||३०८२||
स्वस्यैवार्यस्य दार्ढ्याय साल्हणिस्त्वां विदृक्षते । समागमायेत्युक्ताथ धन्यो दूतैरनीयत ||३०८३||
मा भैषीर्देव संधिस्थः[1] सैन्यादिति मितानुगः । अवर्तिष्ट तटिन्याः स द्वीपान्तस्तत्प्रतीक्षया ||३०८४||
3085 सरित्सा जानुदघ्नाम्भा भूत्वा घर्मद्रुते हिमे । गगनालिङ्गिभिर्भीमा तरङ्गैः समपद्यत ||३०८५||
अवाप्ता चेर्ष्यया लङ्घ्यभावं यान्त्यपि दन्तिनाम् । रुद्धः सिन्ध्वाभवत्सोथ द्विषां रन्ध्रैषिणां वशे ||३०८६||
सिन्धोरुभयतस्तीर्थैर्व्याप्ततीरभुवोन्तरे । ते डिण्डीरोपमां[1] प्रापुः पिण्डिताः पाण्डुवाससः ||३०८७||
खाशकानां[1] सहस्राणि भोजस्य पतितं[2] बले । स्थितवन्ति निहन्तुं तं तथास्थितमचिन्तयन्[3] ||३०८८||
दृग्भ्यां संभ्रमदीनाभ्यामपशान्त्यै स्पृशन्निव । कर्णे सल्हणसूनुस्तान्संतर्ज्यावृजिनोब्रवीत् ||३०८९||
3090 निर्दम्भमस्य विस्रम्भाद्दावसो विहिते वधे[1] । निरत्ययो निपातः स्यान्नियतं निरये पुनः ||३०९०||
हतेस्मिन्बहुभृत्यस्य न च शक्तिक्षयः प्रभोः । नैकपक्षक्षये तार्क्ष्यैरहः संहारमर्हति ||३०९१||
अपि वा वाच्यता राज्ञामेवं विस्रब्धबाधनात्[1] । तुल्यस्तुल्येन कर्तव्यं किमनुध्याय बध्यते ||३०९२||
यथायं भृत्ययेनन्यकर्मा भूपं[1] निषेवते । तथा ममापि यत्नोयं तत्सेवासादने यतः ||३०९३||
युक्तमित्यादि तेनोक्ता अपि निश्चलनिश्चयाः । ते न्यषिध्यन्त निर्बन्धात्प्रतिज्ञायात्मनो वधम् ||३०९४||
3095 राज्ञी तथैवादरिद्राम्भिकद्रं तद्रक्षितुं ततः । कारिताः कोशपानं ते तमर्थं सोपि बोधितः ||३०९५||
तेनावेदितनिर्व्याजतया धीरो महीपतिः । अनुध्यायाथ संदिग्धं संधिसिद्धिममुग्धधीः ||३०९६||
अज्ञातनिश्चयः सिद्धेर्विनान्तःकरणं परैः । अथ प्रास्थापयद्देवीं सामात्यां तारमूलकम् ||३०९७||
राजधर्मविधेयत्वाद्वार्यक्रूरशङ्किनी । प्रस्थानप्रार्थनां भर्तुः सा स्वीकृत्य ततोब्रवीत् ||३०९८||
असामान्येष्वमात्येषु कुसृत्यालोकनात्सकृत् । आर्यपुत्र विचार्योस्ति[1] विस्रम्भः किं विरोधिनाम् ||३०९९||
3100 यद्वा निर्मानुषोन्मेषं[1] शेमुषीत्वं विगाहितुम् । प्रयते नु कथंकारं मूर्तत्वं मर्त्यधर्मिणाम् ||३१००||
देहोपकरणत्वं ते प्राणैर्मम विचिन्त्यते । सतीधर्मस्तु सहते राजधर्मस्य नोचितम् ||३१०१||
स्वच्छितास्यसदाचारं कलिकृत्यं क्षिपि त्वयि । प्रारब्धो देव भोजेन हिमाद्रौ हिमविक्रयः ||३१०२||
न गृह्णाति शर्मं वेत्ति स्वस्यान्यस्य न चान्तरम् । निर्व्यूढमददोषोथ प्रायेण प्राकृतो जनः ||३१०३||
पुत्रमन्वयविरोधादिबुद्ध्यभुद्धा प्रभावति । साध्वाचारोपि भूपालः कुर्वन्विस्रब्धबाधने ||३१०४||
3105 समयालङ्घनामोघगिरा देवेन पीयते । लोकपथैकपाथेस्मिन्वशो नूनं मया सह ||३१०५||
वातव्यसंक्षयोपेक्ष्यमाणायास्त्वन्यदाशयः । ममैवास्वादयन्त्यावादात्मंभरिपुरास्थितिः[1] ||३१०६||
इत्युक्त्वा विरतां सत्यसंधः साध्वीं धरापतिः । शान्तशङ्कामकृत्वा तां समामन्त्र्य न्ययोजयत् ||३१०७||
भर्तुः सर्वानयं वातुं प्रयोक्तुं वेतनं नृपः । संरम्भे किमयं ध्यायत्यन्तः सर्वोप्यचिन्तयत् ||३१०८||

---

३०८३. [1]) Emended; A °णिस्तां. ३०८४. [1]) Emended; A भेषीरिव सन्धिस्थ. ३०८७. [1]) Emended with C; A °रोपमतां. ३०८८. [1]) Emended; A खश°.—[2]) Emended; A पतिते.—[3]) Emended; A° चिन्तयत्. ३०८९. [1]) Emended; A °तजर्ज वृजिनो°. ३०९०. [1]) Emendod; A विधेः. ३०९२. [1]) Emended; A °बोधनात्. ३०९३. [1]) Emended; A रूपं. ३०९७. [1]) The *akshara* स्थां could also be read न्यां; thus C. ३०९९. [1]) Doubtful emendation; A विचार्योसि. ३१००. [1]) Conjectural reading; A °न्मायां. ३१०४. [1]) Emended with C; A कुर्वन् वि°. ३१०६. [1]) Thus A; the text of this verse requires emendation. ३१०७. [1]) Conjectural reading; A has written originally ---- न्यवो° and subsequently filled up the *lacuna* with माता मन्त्रा; G (*sec. manu*) सोनामन्त्र्य.

उपायेषु प्रयुक्तेषु देवीसंप्रेषणावधि । नान्यदस्य प्रयोक्तव्यं यदवाशिष्यत क्वचित् ॥३१०९॥

स्वपक्षभेदाद्भर्तुः सबलस्याबलस्ययोः । परीक्षकत्वाद्ये केचिन्माध्यस्थ्येनावसन्क्वचित् ॥३११०॥ 3110

तेप्यल्पे वा महान्तो वा क्षीणदाक्षिण्यभृत्कुलाः । भोजगृह्यैः सहाबध्नन्कन्थां सर्वेपि डामराः ॥३१११॥

ते धन्विकतटस्थत्वाद्वैराज्येस्माभिरीदृशाः । भोजः संजात इत्याशु माध्यस्थ्यं परिजह्रिरे ॥३११२॥

त्रिल्लको भोजसविधं तनूजं प्राहिणोत्सुतम् । प्रावेशयच्छमालां च चतुष्कं पुष्कलैर्बलैः ॥३११३॥

ये भिक्षुविल्लवेप्यासन्नाजदाक्षिण्यरक्षिणः । विरोधिसंनिधिं प्रापुस्तेपि नीलाश्वडामराः ॥३११४॥

लहरादेवसरसाहोलडातश्च[1] डामराः । त्रयो नीलाश्वतश्चैका डामरी पर्यशिष्यत ॥३११५॥ 3115

न व्यरंसीदिमं तत्तद्वन्ये साल्हणेर्बले[1] । पतत्प्रावृट्प्रमत्तौघघोषोम्भोधाविवोन्नतः[2] ॥३११६॥

भोजस्तु देवीमायान्तीं[1] श्रुत्वा बल्हरं ततः[2] । ध्रुवं संधिस्तया बद्ध इति सुव्यक्तमभ्यधात् ॥३११७॥

एतावन्ति दिनान्यासील्पुंसो भ्रमयिता पुमान् । संबन्धिनीनां माध्यस्थ्ये स्वकुल्यात्कोन्यथा भवेत् ॥३११८॥

कुलचूडामणिः प्रेम्णा स यथैवं प्रवर्तते । किं स्यादगण्यप्रायाणां कार्कश्यं तत्र मादृशाम् ॥३११९॥

यत्र मायामिमां ब्रूथ तत्तथास्त्वस्मि वञ्चितः । विश्वास्यैव भविष्यामि नाकीर्तीनां निकेतनम् ॥३१२०॥ 3120

मा च भूद्विजयाशा वः समेता निखिला इति । अद्राक्ष्म चेदृशान्व्यूहानवाहक्षाम[1] वोन्नतेः ।३१२१॥

युक्तियुक्तमिदं चान्यथोक्तवान्बहु निश्चयात् । नाशक्यतान्यथा कर्तुं भोजो बलहरादिभिः ॥३१२२॥

द्विमाहान्तरितेमित्रप्रमाथेपरथा कथम् । फलकालेसि संवृत्तमिति तं चावदन्नृपाः ॥३१२३॥

नारमूलस्थितौ[1] राज्यां ससैन्यौ[2] धन्यरिल्हणौ । राजपुत्रैः सह ततः पाञ्चिग्राममवापतुः ॥३१२४॥

ग्रामाग्रवेश्य तौ मधास्तीरेश्वाश्वि कृतस्थितौ । परस्मिन्कूलगहने भोजोप्येतावुपाविशत् ॥३१२५॥ 3125

अभ्रान्तं विशतो दिङ्मुखेभ्यस्तत्कटकं भटान् । पश्यन्तः केपि संधिं न श्रद्धुर्नृपतेर्बले ॥३१२६॥

हठप्रविष्टान्निर्यातुमक्षमानल्पसैनिकान् । धन्यादीन्राजवदनो हन्तुं शश्वदचिन्तयत् ॥३१२७॥

छित्त्वा सुय्यपुरात्सेतुं राज्ञः सैन्यं जिघांसवः । महापद्मसरोनीपेषु निभृतं केचनावसन् ॥३१२८॥

अन्ये तत्साहसोदन्तान्वेषिणः पतनोन्मुखाः । स्वैः स्वैर्मार्गैस्तत्र तत्र तस्थुर्भूभृदसंमताः ॥३१२९॥

आस्कन्दं भाङ्गिलेयाद्याः पुरे शंकरवर्मणः । शमाला[1]क्षिप्तिकावाप्तिं डामराः समचिन्तयन् ॥३१३०॥ 3130

प्राप्यं महासरित्कूलं त्रिल्लकाद्यैरगण्यत । नीलाश्वडामरैर्याशा[1] कार्या च नगरान्तरे ॥३१३१॥

किमन्यत्राजगृध्राणां समं सर्वे जिघांसवः । कारण्डवानां तोयान्तर्वेष्टितानामिवाभवन्[1] ॥३१३२॥

संदिग्धशिक्षितं कार्यं सर्वतः समतां तदा । प्राप वृष्टेरवग्राहप्रयोगान्तरस्थितेः ॥३१३३॥

पदे पदे राजन्नमूपधायोत्थानमिच्छतः । छिन्दन्बलहरस्येच्छां भोजो व्यग्रत्वमग्रहीत् ॥३१३४॥

क्षणे क्षणे विसंधानध्यायिना तेन कश्चन । बध्यमानास्वन्तरायः[1] संविधासु व्यधीयत ॥३१३५॥ 3135

घटनामुपयौ यो यो विरोधः कटकद्वयात् । सन्धिकामः स्वयं भोजस्तं त्वरितमच्छिनत् ॥३१३६॥

---

३११५. [1]) A °होलडातश्च. ३११६. [1]) Emended; A साल्हणे बले.—[2]) Emended with C; A °प्रमत्तौघ°. ३११७. [1]) Doubtful emendation; A दीपीमायान्ती. —[2]) Emended A² हरस्ततः. ३१२१. [1]) Doubtful emendation; A चेदृशां व्यूहानवक्ष्याम; C चेदृशं व्यूहमवरोत्स्यामि. ३१२४. [1]) Doubtful emendation; A °स्थिते राज्यां; C °स्थिते राज्ञि.—[2]) Emended with C; A °सैन्य°. ३१३०. [1]) A₁ gloss भाग. ३१३१. [1]) Thus A; C °रैरीर्ष्या. ३१३२. [1]) Emended with C; A °भवत्. ३१३५. [1]) Emended; A बध्यमानस्वान्त°.

दूत्ये च कल्यकल्ये वा येऽरुचन्नाजरञ्जकाः । भयेन प्रययुस्ते यद्वैकल्यं कार्यसंकटे ॥३१३७॥

कर्णे तत्कथयन्ति दुन्दुभिरवैं राष्ट्रे यदुद्घोषितं तत्रव्याकुलतयां वदन्ति करुणं[3] यस्मादपायान्भवेत् ।
श्राव्यन्ते तदुदीर्यते यदरिणाप्युग्रं न[4] मर्मान्तकृद्ये केचिन्ननु शाठ्यमौग्ध्यनिधयस्ते भूभुजो रञ्जकाः ॥३१३८॥

भण्डस्ताण्डवमण्डपे कटुकथावीथीषु कन्थाकविर्गोष्ठश्वा स्वगृहाङ्गने शिखरिभूगर्ते[2] खटाकुः स्फुटम् ।
पिण्डीभूततया विटश्च पटुतां भूभृद्गृहे गाहते गच्छन्ति द्रुतकृष्टकच्छपतुलां चित्रं ततोऽन्यत्र ते ॥३१३९॥

3140 भूरोद्रेकविपर्यासाच्छान्तोष्मक्ष्माभृतस्ततः । वासरः शारणीचक्रे तुङ्गस्योत्तुङ्गमञ्जसा ॥३१४०॥

भानुर्दत्तपदानुरोर्भ्रातुर्गोवलयान्तरे । क्ष्माभृच्छिरोर्पितकरो रक्तमण्डलतां दधे ॥३१४१॥

अहस्त्रियामामुखयो -- [1] मध्यस्थया दधे । संध्यया वन्दनीयत्वं जनस्य[2] व्यञ्जिताञ्जलेः ॥३१४२॥

कचाटिदन्तैर्विस्फोटाश्चन्द्रकान्तैः सितोद्गमः । श्वयथुः पयसां पत्या दधे राज्युदयोन्मुखे ॥३१४३॥

सद्दैन्येश्वरविन्देषु हीनद्वन्द्वोपजीवनैः । कचाटिनां घटेष्वेव षट्पदैर्घटितं पदम् ॥३१४४॥

3145 अदृष्टकार्यपर्यन्तास्ततस्ते विषमस्थिताः । सरित्तटे सकटकाः पर्यतप्यन्त मन्त्रिणः ॥३१४५॥

न किंचित्प्रत्यभात्सर्वं[1] लघु भ्रान्तं च जानताम् । ओघेन ह्रियमाणानामिवैषामवलम्बनम् ॥३१४६॥

तीरे परस्मिन्सरितो वसन्बल्लहरः पुनः । रुद्धः कन्दलितास्कन्दबुद्धिः[1] साल्हणिना[2]सकृत् ॥३१४७॥

कार्यातिपातादायातं मन्त्रिणां तन्मितं बलम् । तस्य प्रवर्धमानस्य सुखोच्छेदं बभूव यत् ॥३१४८॥

वितस्तासिन्धुसंभेदयात्रायां नगरे यथा । तथा तथापतत्त्रासी[1] लोकोभ्रान्तो व्यवर्तत ॥३१४९॥

3150 लेखैर्डामरसंहारखण्डनाय विसर्जितैः । सान्त्वैर्मथिता बाधिर्नानायै राजबीजिनः ॥३१५०॥

शाठ्यान्वितैरनुसरैस्तुमुलोत्पादनैरपि । धीरो धैर्यान्निश्चयाद्वा स्वैः स क्रष्टुं न पारितः ॥३१५१॥

सामन्तानामागतानामविस्रम्भादसंभ्रमम् । न्यक्कृतोयं निपत्याशु कुर्याद्दत्याहित रुषा ॥३१५२॥

कृते च कदनोंकारेनेन --[1] समुन्मिषेत् । द्विजानामिव दस्यूनां समूहस्तेन सर्वतः ॥३१५३॥

इति निर्ध्याय दुर्धुक्षुरिव भोजः क्षपात्यये । कुर्मः साहसमित्युक्त्वा निन्ये बल्लहरं समम् ॥३१५४॥तिलकम्॥

3155 एषां मदर्थायातानां सामन्तानां सभोजनः[2] । दाक्षिण्यादिति नाभोजि तेनाप्यभिजनस्पृशा ॥३१५५॥

तथा स्वमत्यावैमत्यं तमज्ञात्वा तु मन्त्रिणः । निष्प्रत्ययास्तेन जातममन्यन्त नयात्ययम् ॥३१५६॥

पक्षिपक्षस्फुटास्फालशफरस्फुरितेष्वथात् । तेषामासन्निधास्कन्द[1]ः प्रधावदहितभ्रमम् ॥३१५७॥

कूले परस्मिन्कूलिन्याः स्वाभिसंधाननिर्वृतैः । समभाव्यत तैर्नान्यो रथाङ्गेभ्योभिषङ्गभाक् ॥३१५८॥

महत्काकुत्स्थदूतस्य[1] कपेस्तीर्णाम्बुधेः पिता । ततान तेषां दूतानां सरित्पारगती --[2] ॥३१५९॥

---

३१३८. 1) This verse and the following are found in *Vallabhadeva's Subhâshitâvali*, 462-463 (ed. Peterson and Durgâprasâda).—2) व्याकुलतया supplied by $A_3$ in space left by $A_1$.—3) Thus corr. by $A_1$ from करुणां.—4) Thus corr. by $A_3$ from $A_1$ अपायान्°.—5) Thus in *Subhâshitâvali*; A °च्युमेण.—6) Thus corr. by $A_3$ from $A_1$ कर्मा°.—7) मनु supplied by $A_3$ in space left by $A_1$. ३१३९. 1) Emended; A कटुकथावीथीषु; *Subhâsh.* चटुकथावीथिषु.—2) Thus $A_1$ in margin and *Subhâsh.*; $A_1$ in text भूगर्ते. ३१४०. 1) तुङ्ग supplied by $A_3$ in space left by $A_1$. ३१४२. 1) Thus $A_1$; C supplements °योरपि.—2) Emended with C; A जनवन्न्यस्त्रि°. ३१४६. 1) Emended; A °भात्स्वं. ३१४७. 1) Emended with C; A °स्कन्धोद्बुद्धि:.—2) Emended with C; A साल्हणना°. ३१४९. 1) Emended A °पतत्रासो. ३१५३. 1) मेन supplied by $A_3$; $A_1$ indicated originally a *lacuna* of four *aksharas*; C supplements सर्व. ३१५४. 1) A दुद्दु°. ३१५५. 1) Doubtful emendation; A एतां मदर्थेवा.—2) Doubtful emendation; A सभोजनि:; C सामन्तानामभोजने. ३१५६. 1) Doubtful emendation; A समत्यावै°. ३१५७. 1) Emended; A °स्कन्धम°. ३१५९. 1) Emended with C; A काकुस्थ°.—2) Thus A; C fills up the *lacuna* with बलम्.

कीर्णकर्णज्वरांधारीन्पीत्कृतैस्तीरभूरुहाम् । आभित्योत्त्रिन्नकेणेत्थं निन्युस्ते तां निशीथिनीम् ॥३१६०॥ 3160

क्षपान्ते क्ष्माधरोत्तंसहेमतामरसभ्रमम् । उद्गच्छतो रवेर्यावच्चिच्छिदुर्न करच्छटाः ॥३१६१॥

चक्राह्वविरहालोकसशोकानामिवागलत् । कुड्मलाक्षिपुटाद्यावदेषां नाम्भश्च वीरुधाम् ॥३१६२॥

मितपत्तियुतस्तावत्तरुकच्छाद्विनिर्गतः । ---[1]स्त्वरयन्युद्धवाहान्मूर्ध्यङ्घ्रिणा स्पृशन् ॥३१६३॥

रोद्धुकामाण्डामरीयान्वीरान्दृष्टैर्विलोकितैः । सर्वतो धावतः कुर्वन्योधान्प्रतिहतौजसः ॥३१६४॥

पारश्रधी चारुवेषो युवा संमुखमापतन् । युग्याधिरूढस्तैः प्रैक्षि संभ्रमः सरितस्तटम् ॥३१६५॥कुलकम्॥ 3165

अदृष्टपूर्वं तं दृष्ट्वा श्रीखण्डोल्लिखितालकम् । कुङ्कुमालेपिनं चैने भोजोयमिति मेनिरे ॥३१६६॥

अतिवाह्य निशां राजवदनं तं विमोहयन् । प्रातश्च तरसामन्त्र्य स तथा संमुखोभ्यभूत् ॥३१६७॥

प्रविष्टयुग्यं तोयान्तः पाराद्धावितवाजिनः । धन्यादयस्तमभ्येत्य मुदिताः पर्यवारयन् ॥३१६८॥

उदभूत्तुमुलः शब्दस्ततः कटकयोर्द्वयोः । एकत्राक्रन्दमुखरः परत्रानन्दनिर्भरः ॥३१६९॥

नादमाकर्ण्य संग्रामवृद्ध्या दिग्भ्यः प्रधावितैः । तं परैर्मिलितं वीक्ष्य मूर्च्छ्यतावत डामरैः[1] ॥३१७०॥ 3170

तस्याभिनन्दनालापप्रमुखा प्रक्रियाभवत्[1] । अदैन्यभुग्धन्यादिष्वनुज्झितनिजक्रमा ॥३१७१॥

प्रवमानं मनोहर्षं वेगात्संस्तभ्य[1] सर्वतः । अथेत्थं स्तुवता तत्तस्य धन्येनाभ्यधीयत ॥३१७२॥

राजपुत्र पवित्रेयं पृथिवी स्थैर्यशालिना । त्वया धाम्ना सुमनसां मरुणा वा महीभृता ॥३१७३॥

गवां जयति सर्वासां निर्विकारतया वसन् । विक्रियोपहतं गौस्ते क्षीरं ---[1] क्षीरवारिधेः ॥३१७४॥

कस्य पुंस्कोकिलस्येव त्वां विनाधममभ्यतः । निर्गत्य निजकुल्यानां सिद्धं मध्यावगाहनम् ॥३१७५॥ 3175

सदाचारस्य भवता प्रथमं प्रहते पथि । न तद्विदं संचरामश्चरमं चेत्ततोधिकम् ॥३१७६॥

इत्यादिप्रसृतालापदत्तोल्लापोधिरोह्य[1] सः । जयोत्तरङ्गं तुरगं स्तुवद्भिस्तैरनीयत ॥३१७७॥

लवन्याः कतिचित्क्रोशान्विक्रोशन्तस्तदा ययुः । स्वकुल्यैर्नीयमानं तं काका इव पिकान्तिकम् ॥३१७८॥

स एवमेकविंशेऽब्दे ज्येष्ठस्य[1] दशमेऽहनि । त्रयस्त्रिंशद्वर्षदेश्यः समगृह्यत भूभुजा ॥३१७९॥

राज्ञी कृतप्रणामं तं प्रियं पुत्रमिवागतम् । अभ्यनन्दच्छान्तभृत्यमस्याहारमकल्पयत् ॥३१८०॥ 3180

इन्दुवंशा[1]भिसंवादिगुणग्राममवेक्ष्य तम् । प्रागदृष्टवती मेने वञ्चिते सा विलोचने ॥३१८१॥

गुणैरश्लाघ्यदाक्षिण्यमाधुर्याद्यैरकृत्रिमैः । तस्या विशदशीलं स क्ष्मापतिममन्यत ॥३१८२॥

मुखरागो[1] मनोवृत्तेर्हारौज्ज्वल्यं गृहश्रियः । भर्तृस्वभावस्यात्यागो योषितामनुमापकः ॥३१८३॥

दिनक्षयव्यञ्जिनाध्वक्रमं[1] प्रस्थातुमुत्सुकम् । राज्ञोभ्यर्णे विशोत्थेनं[2] दाक्षिण्यात्कोपि नाब्रवीत् ॥३१८४॥

कथंचिद्युद्धमाध्यस्थ्यवैमत्यैः सन्निवेश्य । स स्वादिक्षत्परपतिराशान्तेर्ध्यौभ्यधीयत[1] ॥३१८५॥ 3185

राज्ञोभ्यर्णे विशोत्युक्तेरपोह्यातोपमं वचः । तत्तस्य श्रोत्रशष्कुल्यां ---[1] शङ्कुक्रियां व्यधात् ॥३१८६॥

---

३१६३. [1]) Thus A; C स वीरस्त्वर°.—[2]) Emended with C; A °न्युद्धपथा°.—[3]) The letter न cannot be read with certainty; C °स्पृशन्. ३१६९. [1]) Emended; A °क्रान्दि°. ३१७०. [1]) Thus corr. by A, from डामरैर्मि°. ३१७१. [1]) Emended with G (*sec. manu*); A °मुखापकि°. ३१७२. [1]) Emended with C; A °स्तम्भ्य. ३१७४. [1]) Thus A; C supplements नं. ३१७७. [1]) Emended; A °दत्तोल्लापोधिरोह. ३१७८. [1]) Emended; A °स्कोशानि°. ३१७९. [1]) Emended with C; A ज्येष्ठस्व. ३१८१. [1]) Emended; A इन्दुवंशा°. ३१८३. [1]) Emended; A मुखरागमनो°. ३१८४. [1]) Emended with C; A °क्रमां.—[2]) Emended; A विशल्येनं. ३१८५. [1]) Doubtful emendation: A स स्वादिक्षुर्नरपतिराशान्तेध्यौभ्य°. ३१८६. [1]) Emended; A विशात्यु°.—[2]) Thus A; C supplements तदा.

चिरात्ताडितमर्मेव समाश्वास्यैक्षताथ सः । मध्यस्थानां स्थितं स्थैर्य[1] दाक्षिण्यादोष्ठयोः परम् ॥३१८७॥
प्राणान्मुमुक्षोस्ते रूक्षभाषिणस्तस्य सान्त्वनैः । मन्दत्वं विक्रियां निन्युर्विनयानतमौलयः ॥३१८८॥
आचारं चैनमाश्लिष्यमपि न्याय्यं वचस्विनम् । न कोपि प्रतिवाक्येन शक्यं जेतुममन्यत ॥३१८९॥
3190 अथ स्वान्तस्थितस्वामिवैवश्यं दर्शयन्निव । दशनांशुवनैर्धन्यो वीरः स्निग्धमभाषत ॥३१९०॥
पद्धतिं राजधर्माणां सदाचारे स्थितां च ते । जानतोपि कथं मोहः क्रमायातेषु वस्तुषु ॥३१९१॥
किं संधिः सोभिधीयेत यत्र संधेयदर्शनम् । अकृत्वा गम्यत इति प्राज्ञो कथमजीगणः ॥३१९२॥
अनद्यतनभूभर्तृसुलभं[1] भूभुजं[2] नव । ज्ञात्वा सत्त्वोज्ज्वलं ज्ञातिधर्मजातप्रवर्तनम् ॥३१९३॥
नास्य दम्भस्मयस्तम्भाप्रीतिस्थैर्यखलोक्तयः । आदरादर्शवैशद्ये निःश्वासस्यापि काः श्रियः ॥३१९४॥
3195 अस्योपजीवनाद्या श्रीः साम्राज्यासादनाच्च सा[1] । प्रकाशो बिम्बितो[2] योर्कादीपास्स्याज्ज्वलतः स किम् ॥३१९५॥
निर्वाणगोष्ठीनिष्ठत्वं शामिनामाभयेषु यत् । तत्पर्यवस्य राजर्षेः --[1]न्मृन्दानुबन्धिनः ॥३१९६॥
एवं स्वगृहसंप्राप्यप्रायोनिःश्रेयसस्य ते । स्थानैः श्रियः समाप्याथ किं स्याद्न्यैर्महीधरैः ॥३१९७॥
मुग्धा न केचन परे गणिताः फणिभ्यः कालानुकूलनिजकुण्डजलत्यजो[1] ये ।
श्लिष्यन्ति चन्दनतरुङ्किशशिराग्निदाघे माघेप्यशीतमनघं[2] विवरं विशन्ति ॥३१९८॥
प्राणोपकरणं राज्ञो राज्ञी राजात्मजाश्च ये । तद्धिते यदनौचित्यं तेषामौचित्यमेव तत् ॥३१९९॥
3200 स्वक्रोष्मवैकृतं पाथ इव क्वथितशीतलम् । अनुतापेन ते कृत्यं भूयो वैरस्यमेष्यति ॥३२००॥
तथा समर्थी सामर्थ्यादप्रत्याख्याय[1] भारतीम् । कुण्डशाद्वलवस्तस्थौ प्रस्थानार्थे स मन्थरः ॥३२०१॥
पथि संप्रथितस्तोत्रान्वास्तव्यान्वीक्ष्य सर्वतः । अजायताथ संरूढकृत्यसाधुत्वदार्ढ्यधीः ॥३२०२॥
पदातिचरणक्षुण्णरेणुव्याजाददृश्यत । बद्धधरातलं बद्धसंधीव नभसा समम् ॥३२०३॥
दध्यौ ----[1] भोजः कच्चित्संप्राप्नुयां नृपम् । कच्चिदमुष्य विघ्नयेत दर्शनं विप्रलम्भकैः ॥३२०४॥
3205 आराधन --[1]धाम्नि नान्तरान्तरितो विटैः । स्वामिनां क इवाप्नोति गुणाविष्करणक्षणम् ॥३२०५॥
शीतोपचारकरणाद्व्यथितो भवेयमौर्वार्दितस्य जलधेः प्रसृतं धियेति ।
क्रोतो हिमाद्रिपयसो विनिपात एव मासीकृतं तिमिभिराहत ---[1]स्यात् ॥३२०६॥
इत्यादिचिन्तास्तैमित्यात्पुरक्षोभावलक्षयन् । सैन्यस्य रुद्धाभ्रतयामुद्रासद्म[1] नृपास्पदम् ॥३२०७॥
नातिप्रांशुं नातिकृशं सूर्यांशुश्यामलाननम् । सरोजकर्णिकागौरं शिथिलश्लथविग्रहम् ॥३२०८॥
ककुद्मत्ककुदोत्सेधिस्कन्धमायतवक्षसम् । श्मश्रुणानतिदीर्घेण व्यक्तगण्डगलोन्नतिम् ॥३२०९॥
3210 उन्नसं पक्वबिम्बोष्ठं विस्तीर्णानुल्बणालिकम् । तिर्यग्विप्रेक्ष्य ---[1]धीरमन्थरगामिनम् ॥३२१०॥
समाहितांशुकोष्णीष --[1]श्रीखण्डव --[2]म् । सीमन्त --[3]चुम्बिन्या रेखया चन्द्रगौरया ॥३२११॥

---

३१८७. 1) Emended with C; A स्थौर्यं. ३१९३. 1) Emended: A सुलभे.—2) Emended; A भूभुजां. ३१९४. 1) Emended with G (sec. manu); A °स्तम्भप्री°. ३१९५. 1) Emended with C; A सः.—2) Emended with C; A बिम्बतो. ३१९६. 1) Thus A; perhaps read राजर्षेर्विदृन्दा°; C °र्षेर्ज्जन्मान् दृन्दा°. ३१९८. 1) Emended with C; A °जल--जो.—2) Emended with C; A °शीतम--वं. ३२०१. 1) Doubtful emendation; A समर्थासामर्थ्या--प्रत्या°; C °सामर्थ्याक प्रत्या°. ३२०४. 1) Thus A; C supplements विज्ञसरो. ३२०५. 1) Thus A; C आराधयन् प्रभुं धाम्नि. ३२०६. 1) Thus A; C °हतमिव तन् स्यात्. ३२०७. 1) Emended; A °सद्मनृपास्पदम्. ३२१०. 1) Thus A; C °प्रेक्षमाणास्यं. ३२११. 1) Thus A; C °ष्णीषमौलिं.—2) Thus A; C श्रीखण्डवर्त्तुलं.—3) Thus A; C सीमन्तस्थानचु°.

अथावक्षं हर्म्यस्थसचिवैः परिवारितः[1] । ------[2]मायान्तं तमवैक्षत पार्थिवः[3] ॥३२१२॥ कुलकम् ॥
प्रीतिविस्फारितदृशा राज्ञा पृष्ठस्ततः सभाम् । सोध्यारुरोह संबाधां कौतुकोत्कन्धरैर्जनैः ॥३२१३॥
स्पृष्ट्वा पादौ निषण्णोग्रे नृपस्यानीय पाणिना । खड्गधेनुं पाणिबद्धामासन्नाग्रे समार्पयत्[1] ॥३२१४॥
पाणिं सफणिवल्लीकं विवृताग्राङ्गुलिद्वयम् । ततोस्य चिबुकोपान्ते विन्यस्यन्पार्थिवोब्रवीत् ॥३२१५॥ 3215
न विगृह्य गृहीतोसि नाधुनापि निबध्यसे[1] । तदङ्ग कस्माद्दृक्षीमः शस्त्रमेतत्त्वयार्पितम् ॥३२१६॥
व्यजिज्ञपत्स भूपालं देव शस्त्रस्य धारणम् । स्वामिसंरक्षणं स्वस्य परित्राणस्य कारणम् ॥३२१७॥
देवे निजप्रतापाग्निगुप्तसप्तसरित्पतौ । सेवावकाशो विरलः स्वशस्त्रस्यापि दृश्यते ॥३२१८॥
लोकान्तरेपि शरणं चरणाश्रयणं प्रभोः । तथात्र लोके किं कार्यं त्राणोपकरणैः परैः ॥३२१९॥
राजा जगाद तं सख्यस्पर्धाबन्धेधुना भवान् । निर्व्यूढकृत्यो वादीव कृत्यं नो वर्तते परम् ॥३२२०॥ 3220
भोजो बभाषे दाक्षिण्यजननायाधुना प्रभोः । इष्टाहते मया किंचिन्नोपचारार्थमुच्यते ॥३२२१॥
किं ते न चिन्तितं दुष्टं किं किं न कृतमप्रियम् । यदसिद्धं न तद्व्यक्तिमगादित्यवधार्यताम् ॥३२२२॥
किं न मद्वान्वये कश्चित्कारणेष्वुदितो भवान् । विद्मः स्मानन्यकुल्यं माग्यं वयं धर्मचक्षुषः ॥३२२३॥
यदा यदा देव वाञ्छामकार्ष्म भवदप्रिये । भूमिस्तदा तदा भूता भूप ---[1] भूयसः ॥३२२४॥
यावत्कवीनां निर्भाति प्रतिभानेन भास्वरः । देवाभवच्च मत्यसः प्रतापस्तादृशस्तव ॥३२२५॥ 3225
न शेखरे न प्रदरे न दरेष्वुज्झितो[1] मया । प्रालेये भूभुजः कुञ्जे संज्वरस्त्वत्प्रतापजः ॥३२२६॥
ततः प्रभृत्यवनतिप्रणयः शरणैषिणः । सिद्धः संध्याद्विवन्ध्यत्वाद्देव दूरस्थितेर्न मे[2] ॥३२२७॥
अथाभेदाभिलाषेण पापायत्किल चेष्टितम् । स्फुरत्तामात्रकव्यक्त्यै न तु तद्विग्रहाग्रहात् ॥३२२८॥
त्वत्संबन्धादिमे दिक्षु प्रतीक्ष्याः क्ष्माभुजां[1] वयम् । सङ्गाद्गङ्गाम्भसः काचकुम्भसंभावना भुवि ॥३२२९॥
अद्यापि द्योतते शाहिराज्येन[1] दिगन्तरे । तत्संतानभवोनन्तः समूहः क्षत्रजन्मनाम् ॥३२३०॥ 3230
त्वय्यर्पिते पार्वतीयभूभृत्सङ्गेन्यदादि[1] नः । कदन्नाशनतु--मुखैः[2] खेदोन्मुखैरभूत् ॥३२३१॥
इतीदृशीभिः[1] ---[2] प्रमाणमथ वा प्रभुः । इत्युक्त्वा भूपतेर्मूर्ध्ना सोस्पृक्षच्चरणौ पुनः ॥३२३२॥
प्रणामसंभ्रमभ्रस्तोष्णीषशीर्षं ततो नृपः । तस्योत्थितस्य स्वशिरोवाससा समवस्त्रयत् ॥३२३३॥
स्वां तां च शस्त्रीं तत्कक्ष्यस्थामुत्सङ्गे सान्त्वयन्न्यधात् । तस्यासंक्षोभगाम्भीर्यस्तम्भे च निषेधिनम् ॥३२३४॥
दत्ते[1] मया बिभृहि वा स्वमेते पूजयाथ वा । न शस्त्रग्रहवैमुख्यं कार्यं मच्छासनं त्वया ॥३२३५॥ 3235
अवन्ध्यवासने --[1]स्यनुबध्नति[2] ते न्यधात् । शस्त्रीं[3] राजानुगत्यैव बध्नित्वाङ्के स कालवित् ॥३२३६॥
ततो निर्यन्त्रणस्वस्य मर्मणः सान्त्वनस्य च । चिरसेवीव तत्कालं राज्ञोजायत भाजनम् ॥३२३७॥

---

३२१२. 1) Emended; A °रितम्.—2) Thus A; C अनङ्गगुल्मनावान्तं.—3) Emended with C; A पार्थिवम्. ३२१४. 1) Emended with C; A समर्पयत्. ३२१६. 1) Emended; A न बध्यसे. ३२२३. 1) Emended with C; A विद्म स्मा°. ३२२४. 1) Thus A; C तदा भूता पार्थ कम्पस्य भूयसः; perhaps read भूता भूः प्रकम्पस्य भूयसः. ३२२६. 1) Emended; A °ज्झिते. ३२२७. 1) Emended; A संध्याविव°.—2) Emended; A दूरस्थितैर्न. ३२२८. 1) Emended with C; A पा°यत्किल. ३२२९. 1) Emended; A क्ष्माभुजा. ३२३०. 1) Emended; A शाहेराह्°. ३२३१. 1) Thus A; doubtful.—2) Thus A; C कदन्नाशनदुर्मोगाद्यैः खे°. ३२३२. 1) Emended with C; A इतीदृ°.—2) Thus A; C supplements स्तुतिभिः. ३२३५. 1) Emended; A दत्तं. ३२३६. 1) Emended; A °वासनो—; perhaps read अवन्ध्यवासने राज्ञीस्वनु°; C °वासनोमानी°.—2) Emended; A °स्यनुबध्नति ते; the *lacuna* not indicated.—3) Emended; शस्त्री.

अन्यस्मविष्टो धन्योथ स्वार्थाम --[1]धन्कृती । कृतप्रणामो भूपाल त्वद्गुणाकर्णनं विना ॥३२३८॥

न प्राणा द्रविणं नाथ गण्यं निर्विक्रिया पुनः । सत्क्रिया स्वामिनोप्यर्थे[1] तस्मात्पार्थिव चिन्त्यताम् ॥३२३९॥

3240 तथापि कथ्यमानं तत्र स्यात्संभावनाभुवि । यदस्मिं[1]श्चिन्त्यतेस्माभिरिति भूपो व्यभाषत ॥३२४०॥

क्षणमुच्चावचां चर्चां विरचय्य विशां पतिः । भोजेन सार्धं शुद्धान्तं रड्डादेव्यास्ततो ययौ ॥३२४१॥

कृतप्रणामस्तां वीक्ष्य सौजन्यादिगुणोज्ज्वलाम् । स राजपारिजातं तं मेने कल्पलतायुतम् ॥३२४२॥

मान्योयं देवि सौजन्यख्यातेयाभ्यामिहागतः । विशिष्यतेसौ पुत्रेषु क्ष्माभृद्योपेत्य[1]भाषत ॥३२४३॥

सभाजनाय सौजन्यनिधिर्भोजान्वितस्ततः । उदूढकार्यभाराणां दाराणामप्यगाद्गृहान् ॥३२४४॥

3245 अभाणीन्निपुणा राज्ञी भोजं राज्ञा सहागतम् । अधुनैव नृपस्याप्तः संवृत्तोसीति[1] सस्मितम् ॥३२४५॥

लज्जास्मितमुखी पत्युः प्रणत्या स्वागतोक्तिषु । ददत्येवोत्तरं भोजं निर्दिशन्त्यप्यभाषत ॥३२४६॥

आर्यपुत्र न विस्मार्यं प्रत्याख्यातामन्त्रितम् । मानैकशरणस्यास्य ज्ञातिप्रीतिप्रवर्तनम् ॥३२४७॥

पूर्वोपकर्तृ सलिलं वृद्धावस्पृशतोन्वहम् । पश्चात्स्वकुलपद्मानां युक्तं जेतुं भवादृशाम् ॥३२४८॥

कार्यकृच्छ्रेवसन्नानाममुष्यागमनं विना । सिध्येद्दौसत्यसंरक्षा नेह प्रत्यागमश्च नः ॥३२४९॥

3250 उदीपे[1] रक्षतस्तीरं शरीराभयिणी भवेत् । ध्रुवं वनस्पतेर्वीरु[2]त्संनिपातानुपातिनी ॥३२५०॥

पतिगत्यनुगामित्वं प्राणानां परिचिन्तितम् । तथा कार्यं यथा न स्याज्जातव्यस्यान्यथात्मनः ॥३२५१॥

राजा जगाद तां देवि सर्वकर्तव्यसाक्षिणी । अन्यथाप्रतिपत्त्यं[1] मे त्वमप्यस्यं[2] न मन्यसे ॥३२५२॥

निगृहीतवतो दुष्टौ सुज्जिमल्लार्जुनावपि । निस्तापं मम नाद्यापि प्राप्तानुशयमाशयम् ॥३२५३॥

अथ राज्ञार्थितः स्थातुं परार्ध्ये धाम्नि सानुगः । भोजो नामन्यतान्यत्र राजधान्यां[1] स्थिरां स्थितिम् ॥३२५४॥

3255 विदूराश्रयनिर्गोप्रभावाप्रचुरदर्शनैः । आराधनं धराभर्तुरसाध्यं ध्यातवान्हि सः ॥३२५५॥

रक्षितृनमहीक्ष्मापास्थि[1]रं च समकल्पयत् । [2]अनया - नृपं कार्या न सुराराधनागमे ॥३२५६॥

विज्ञाय भावं प्रीतेन राज्ञा दत्तं[1] ततो गृहम् । सर्वोपकरणापूर्णं राजधान्यन्तरेभजत् ॥३२५७॥

राजापि ममतास्फीतप्रीतिभिः स्वैः परैस्तथा । उपासितस्तत्र रतिं चिराभिन इवाययौ ॥३२५८॥

भोगवेलोचिताश्चर्यदर्शनादौ नृपोपि तम् । प्रियं पुत्रमिवास्मार्षीद्दूतैः पार्श्वं निनाय च ॥३२५९॥

3260 जगाह दक्षिणे पार्श्वे भुञ्जानं ज्ञातिगौरवात् । स्पर्शास्वादितभोज्यादिदाने नैव व्यवर्जयत् ॥३२६०॥

अकृत्रिमं तथा स्नेहमुवाह[1] ---[2] यथा । लडितं ज्ञातिवत्तस्मिं[3]स्तद्वालापस्यकैः समम् ॥३२६१॥

तामेवालम्बत व्यक्तां[1] सोपि वृत्तिं यथा यथा । राजा सपरिवर्होपि विस्रम्भमविगर्हितम् ॥३२६२॥

आसन्नाभ्यन्तरा भिन्ना ये द्वैधे तानदर्शयत् । राज्ञां[1] विरक्तिं स्वस्यारिबाहुल्यं न व्यसर्जयत् ॥३२६३॥

---

३२३८. [1]) Thus A; C स्वार्थांममलयन्कृती. ३२३९. [1]) Emended with C; A स्वामिनो-र्थे. ३२४०. [1]) Emended; A यदास्मिं°. ३२४३. [1]) Emended with C; A क्ष्माभृद्योपेत्य°. ३२४५. [1]) Emended; A संवृत्तोर्मीति; C संवृत्तोऽस्मीति. ३२५०. [1]) $A_1$ gloss उदीप: अतिवृष्ट्या अम्बुप्रिक्कजलागमः.—[2]) Emended with C; A °वीरुत्तनि°. ३२५२. [1]) Emended; A प्रतिपत्त्यं.—[2]) Emended with C; A त्वमन्य-. ३२५४. [1]) Emended; A °धान्यां. ३२५६. [1]) Emended; A °क्ष्मापास्थिरं.—[2]) Thus A; the text is here evidently corrupt; C अनयास्तं नृपं; G (*sec. manu*) अनुयान्तं नृपं कार्याकृत्सुराराधनागमे. ३२५७. [1]) Emended with C; A दत्तुं. ३२६०. [1])—[1]) Written by $A_5$ on new paper. ३२६१. [1])—[1]) Written by $A_5$ on new paper.—[2]) Thus A; C supplements जनकी.—[3]) Emended; A° स्तद्वलापत्यकैः. ३२६२. [1]) Conjectural reading; A तमेवालम्बत व्यक्तिं. ३२६३. [1]) Emended; A राज्ञां.

अकृत्रिमात्समाधानात्करणानां सभान्तरे । न प्रत्यभाज्जडो नापि धृष्टो नापि बकव्रतः ॥३२६४॥
प्रमादस्खलिते हीनातिरिक्तत्वे च भूपतेः । कार्ये नावदधे क्षुद्रः कवितेव महाकवेः ॥३२६५॥ 3265
न विक्रमकथास्तस्य ----[1] व्यकत्थत । प्राग्वृत्तमन्तरा पृष्टः सोपस्कारं च नाभ्यधात् ॥३२६६॥
वि--कास्त्रभोः साम्यसकुल्यत्वादिवादुभिः । धीराधृष्टैर्दृष्टिपातैरपुनर्भाविणो ऽग्रभात् ॥३२६७॥
तथा स्पृष्टोऽप्यनुत्तानाशयोभूदवगाहितुम् । न शेकुस्तं यथा जाल्मनर्मविस्पिशुनादयः ॥३२६८॥
क्षणेष्ववसितालोकक्षोभादिविशरारुषु । प्रा--[1]वसथं गच्छञ्शङ्कां[2] कामपि नातनोत् ॥३२६९॥
यथा यथास्य विस्रम्भाद्भूपोभूच्छिथिलाग्रहः । तथा तथैव सिद्धोध्व इव नाधावदुद्धतम् ॥३२७०॥ 3270
सदैवाभेसरोन्यत्र पश्चाद्रुद्धपदोभवत् । अनिषिद्धोपि शुद्धान्तमन्त्रागाराबगाहने ॥३२७१॥
विज्ञप्त्यौपयिकावाप्तिप्रार्थनमादरात्स्वयम् । दूरीचक्रे परापेक्षां शश्वत्संशयिताशयः ॥३२७२॥
अना---समये तस्या---[1]रक्षिणः । न स्वप्नवृत्तमप्यासीदनावेद्यं महीभुजे ॥३२७३॥
मन्त्र्यान्तःपुरिकादीनां परस्परविगर्हणम् । नावर्णयद्विस्मृतिं च दुष्टत्वमभिधान्यत्[1] ॥३२७४॥
सचेतनोपि दुर्नर्मगोष्ठीष्वनुरणन्वचः । अवदत्स्फुरदप्यन्तर्विटानां नाम लाघवम् ॥३२७५॥ 3275
एवं शुद्धानुभावस्य तस्य कृत्स्नेन कृत्यवित् । पुत्रेभ्योप्यधिकां प्रीतिं बिभ्रन्भेजे[1] क्रमान्नृपः ॥३२७६॥
कलिकालमहीपालदुस्तरः सिंहभुजा । सोयं गोत्रपरित्राणे नवः सेतुः प्रवर्तितः ॥३२७७॥
इत्थं विद्रावितारोषोपद्रवस्त्रिंशद्दक्कुरतनः । अमि--[1]मपि स्वास्थ्य--[2] भूभृदचिन्तयत् ॥३२७८॥
असौ हि निर्हिमोर्वीभृन्मार्गे काले पलायनम् । शाठ्यं सत्त्वस्य दुःसाध्यं वद्धं ध्यायन्व्यलम्बत ॥३२७९॥
अतः सुमेधा यात्रायां यावत्क्षणमपैक्षत । सज्जपालिनाविचारात्तावत्प्रारम्भि धावनम् ॥३२८०॥ 3280
अल्पाधिष्ठानसुभटः स देवसरसोत्कटैः । बहुभिः सहितः सैन्यैर्मार्ताण्डे विदधे पदम् ॥३२८१॥
निर्निरोधप्रवेशः स प्रदेशः परिपन्थिनाम् । नाद्याश्च योधा निःसारा दर्पान्नेति विवेद सः ॥३२८२॥
त्रिलक्कानुचरा युद्धमसंनिहितसायकाः । तेन सार्धं विदधिरे न चाहीयन्त पौरुषम् ॥३२८३॥
निःसीमसैन्यसहितो लवन्योन्यत्र डामरे । तत्र सर्वाभिसारेण धावतो युयुधे क्रुधा ॥३२८४॥
लुण्ठितद्रविणापूर्णास्ते देवसरसौकसः । सर्वे ततः सज्जपालं विद्रुताः परिजहिरे[1] ॥३२८५॥ 3285
द्विषत्संवर्तवर्षाल्यां सर्वत्र त्रुडितेष्वभवन् । अधिष्ठानभटा एव कुलशैला इवोद्धताः ॥३२८६॥
ते तीक्ष्णतीक्ष्णतरणैः सोढारातिरुपश्चिरम् । बहुभिर्हतवन्तोन्यांस्तत्र तत्राहवे हताः ॥३२८७॥
[1]क्षतेषु युधि सर्वेषु विन्दानैर्मण्डलं निजैः । भूरेषु तत्र मार्ताण्डोप्यासीदविरलव्रणः[1] ॥३२८८॥
रराजाजौ साज्ञपालिर्गयापालो हतेषु यः । त्रिषु वाजिषु[2] चातुर्यात्पदातिर्नोपलक्षितः ॥३२८९॥

---

३२६६. [1]) Thus A; C supplements °सवानार्थैः स्वं व्य°. ३२६७. [1]) Thus A; possible emendations would be विजय-कान्त्रभोः or विगर्हकान्त्रभोः; C विचारकात्मभोः. ३२६९. [1]) Thus A; C प्रासोऽस्याव°.—[2]) Emended; A गच्छच्छ--ङ्कां. ३२७१. [1]) Emended with C; A °गाहने. ३२७२. [1]) Conjectural reading; A मार्थन--दरात्स्वयम्; C °मार्थनः स दरात्स्वयम् ३२७३. [1]) Thus A; C अनातसमये तस्य न वधुः पथि रक्षिणः. ३२७४. [1])—[1]) Written by $A_5$ on new paper. ३२७६. [1]) Emended with C; A भीजे. ३२७८. [1]) Thus A; C अमिप्रोपमपि स्वास्थ्यहेतुं भू°. ३२८४. [1]) Emended with C; A निःसीम. सै°. ३२८५. [1]) Emended; A °जहिरे. ३२८६. [1]) Thus corr. by a later hand from $A_1$ अधिष्ठाने भटा.—[2]) Emended with C; A इवेद्धताः. ३२८७. [1]) Emended with C; A बहुभिर्ह°. ३२८८. [1])—[1]) Written by $A_5$ on new paper. ३२८९. [1]) Emended; A सज्ञपालि°.—[2]) Emended; A गयपालः; cf. viii. 3322.—[3]) Emended; A वाजिष्वचा°; C वाजिष्वचा°.

3290 तस्मायस्योपलब्धाजिर्जर्जरस्तदनुजः शिशुः । निनाय विस्मयं वीरान्दृष्टांसंख्यमहाहवान्[1] ॥३२९०॥

दक्षिणं दोर्न तच्चक्रे यद्वामं कम्पनापतेः । मद्देभांस्तापयस्यर्कः कुर्याञ्जमरदाम्बुधुः ॥३२९१॥

स धावन्वाजिनाराजदेकदोःस्फुरितायुधः । सधूमदण्डो[1] दावाग्निः सपक्षेद्राविवं[2] स्थितः ॥३२९२॥

तं वैरितुमुले बाणव्रणभङ्गेष्ववसी पुनः । पृष्ठादलोठयद्वाजी — — [1]बांबद्धपद्धतिः ॥३२९३॥

धर्मगौरवभूपृष्ठकाठिन्याघातपीडितः । स विसंज्ञो द्विपन्मध्यात्तनयाभ्यां विनिर्हृतः ॥३२९४॥

3295 कटके सर्वतो नष्टे मार्ताण्डमाङ्गनान्तरे । विरोध्यसाक्षि क्षिप्त्वा तं तावपासरतां ततः ॥३२९५॥

तत्रस्थं — —[1]ना क्ष्माभृत्स्थितः पृथुलैर्बलैः । तावद्भिः प्राप्यमप्याशु डामरं पिण्डितं व्यधात् ॥३२९६॥

क्ष्मापाले विजयक्षेत्रं प्राप्ते घोटितवेष्टनः । सञ्जपालो लवन्यस्य वसतीर्निरदाहयत् ॥३२९७॥

स तादृगपि भूपाले कुर्वे[1] वशीकृतभुवि । अदरिद्रो गिरिद्रोणीश्रेणिभूसुलभाशनः ॥३२९८॥

संवृत्तो निःसहायश्च परिग्रहबहिष्कृतः । आपत्सुलभपाण्डित्यभृत्योपालम्भभाजनम् ॥३२९९॥

3300 निकृत्तकरशाखोथ क्ष्मापकोपकपेर्व्यधात् । निरालम्बतया — —[1] स स्वशीर्षफलार्थनाम् ॥३३००॥

रड्डादेवीतनूजानां ज्यायांसं गुल्हणाभिधम् । श्रीमांल्लोहरराज्येथ क्ष्मावृषा[1] सोभ्यषेचयत्[2] ॥३३०१॥

षट्सप्तहायनो[1] राजतनयः स वयोधिकान् । चूताङ्कुरो जीर्णतरुनिवेशानजयद्गुणैः ॥३३०२॥

अभिषेक्तुं सुतं देव्या यातायाः क्ष्माभुजो व्यधुः । शिरःशोणाश्मकिरणैश्चरणौ यावकारुणौ ॥३३०३॥

तत्राभिषिक्ते वसुधामुमावमदशोषिताम् । देवीभावाभिषेकार्थमिवासिञ्चन्पयोमुचः ॥३३०४॥

3305 भूयोपि राजवदनो विप्लवोत्पादनोत्सुकः । अमन्दमत्रचस्कन्द जयचन्द्रं नृपाज्ञया ॥३३०५॥

नागभ्रातृव्यसहिता गार्गैरनुप्रवेशिनः । पश्चात्प्रसर्पिणीः सेनाः सोवधीत्संकटेध्वनि ॥३३०६॥

गार्गिः परिभवम्लानाननं तिष्ठन्दिनैस्ततः । नागभ्रातृसुतामध्य[1]मदधाल्लोष्ठकं[2] मृधे ॥३३०७॥

दुर्गमत्वादनाक्रान्तमन्यैर्वेगात्प्रविश्य च । दग्ध्वा च[1] दिन्नाग्रामं स निरगाल्लघुविक्रमः ॥३३०८॥

तथापि राजवदनो न शौर्यात्पर्यहीयत । न संदधे न चुक्रोध शक्यमस्य विनिर्गमम् ॥३३०९॥

3310 अहन्यहनि हीनाभिः सेनाभिर्न्यपतन्नृपे । जयचन्द्रमुखाच्छश्वदसुखान्यत्रधीभवत्[1] ॥३३१०॥

क्ष्मानायकोथ निःसीमनखबाहुप्रसारणः । रणान्तरेव तं तीक्ष्णैर्गूढन्यस्तैरघातयत् ॥३३११॥

तन्मुण्डगण्डलेखेन लुठता खण्डशः कृतः । झटिति त्रुटितः स्वास्थ्यविट्पश्चं[1]कुरणोन्मुखः ॥३३१२॥

पृथ्वीहरकुलाच्छेदस्वच्छया मेदिनीपतिः[1] । अवधील्लोठनमपि कर्वं[2]दण्डप्रयुक्तिभिः ॥३३१३॥

एकवारं वेष्टितोपि रक्षितस्त्रिलङ्ककेन सः । भूमिभृद्भीतिपाशस्य निपातेनाभ्यवर्तत[1] ॥३३१४॥

3315 मल्लकोष्ठक्षुरजय्यसज्जु[1]चन्द्रादयोभवन् । जीवन्मृताश्च शान्ताश्च दारिद्र्योपद्रवार्दिताः ॥३३१५॥

---

३२९०. [1]) Emended with C; A °न्दृष्टसङ्ख्य°. ३२९२. [1]) Emended with C; A °दण्ड.—[2]) Emended with C; A °द्राविव. ३२९३. [1]) Thus A; C सबन्धावद्ध°. ३२९६. [1]) Thus A; C कम्पनात्मा°. ३२९८. [1]) Emended with C; A कुञ्जो.—[2]) Emended with C; A °श्रेण—सुल°. ३३००. [1]) Thus A; C supplements सत्य. ३३०१. [1]) Emended; A श्रीमाल्लो°.—[2])—[2]) Written by $A_2$ on new paper. ३३०२. [1])—[1])Written by $A_3$ on new paper. ३३०७. [1]) Emended with C; A °सुतामध्यामद°.—[2]) Comp. viii. 2996. ३३०८. [1]) Emended; A स. ३३१०. [1]) Doubtful; thus C; A °वान्यबदधीभवत. ३३१२. [1]) Conjectural reading; A °विर्वोस्वङ्कुरो° C °विवारसंकुरणो°. ३३१३. [1]) Emended with C; A °पतेः.—[2]) Comp. regarding this name the note to viii. 2496.—[2]) Emended; A कछवद°. ३३१४. [1]) Emended with C; A °भ्यवर्तिता. ३३१५. [1]) Thus A; misread °मज्जुचन्द्रा° in R C; cf. सज्जुचन्द्रस्य viii. 643.

अचिचिन्त्योचलक्षोणिभृतः प्राणान्निव नश्वरान् । ऐश्वर्यंकविमूढत्वादनिर्व्यूढव्यवस्थिती ॥३३१६॥
मतेनुमितकोशल्यं तत्तद्राजाभ्यर्थाद्गते । कुलोद्वहो विदितवान्सिंहदेवो व्यवस्थितिम् ॥३३१७॥युग्मम्॥
सुल्लाविहारं पैतृव्यं[3] पितुर्देवगृहत्रयम् । तथार्धसिद्धप्रासादं परिपूर्णं व्यधान्नृपः ॥३३१८॥
स एव ग्रामान्संस्थमीमहापणसमर्पणैः । निर्दोषपारिषद्याविद्यासिधोद्यधीर्व्यधात् ॥३३१९॥
अवरोधेन्दुवदनां[1] मृतामुद्दिश्य चन्दलाम्[2] । मत्यत्रापि मठोनूनभीर्द्वारेवारितातिथिः ॥३३२०॥
स्पृष्टो नगरनिर्दाहैः[1] सोपि सूर्यमतीमठः । पूर्वाधिकोपगर्वेण तेनैव निरमीयत ॥३३२१॥
संजाते सज्जपालस्य ततो लोकान्तराश्रये । कम्पने निदधे राजा गयापालस्तदात्मजः ॥३३२२॥
विपाकसुकुमारोपि दुःसहः सूनुनाभवत् । विस्मारितः स सौम्येन[1] शरद्भानुरिवेन्दुना ॥३३२३॥
ग्रीष्मोष्मदोषविषमेष्वविशेषवृत्तेर्मेघोदये तटतरोस्तटिनीप्रवाहः ।
पश्यन्नकाण्डतडिदापतनेन नाशं नाशंसति स्वसलिलस्य विभूतिलाभम् ॥३३२४॥
आ भिक्षुक्षपणाद्द्रोजभञ्जनादपि भूभुजः । विधुरे कार्यभाराणां योभूद्दृढधुरः परम् ॥३३२५॥
तस्य तस्मिन्नृपरते क्षीणप्रक्षीणकण्टके । स धन्योनन्यसामान्यप्रेमा प्रमथमाययौ ॥३३२६॥
ताम्बूलमायान्त्रिकतां नीत्वामूंनामयानिव । आर्पिपन्मधुरावट्टं जीवं यस्य निजः सुतः ॥३३२७॥
स जगज्जीवितेनापि रक्षणीयः क्षमापतिः । पदे पदे विपन्मग्नः प्रजोद्धरणधीरधीः ॥३३२८॥
व्याधितस्य विनिद्रोपि संसक्रान्मङ्गलेच्छुभिः । नान्तक्षणे तस्य पार्श्वान्कृतशोकाचलन्नृपः ॥३३२९॥
प्रियप्रजस्यामात्यस्य स्वरूपविपरीतता । तस्य कंचित्क्षणं जाता जनंजीवितदा भवे ॥३३३०॥
भूभुजामपि मान्धातृमुखानां निधनेन याः । दुःखं ययुः प्रजास्तासां समभावि तदा सुखम् ॥३३३१॥
द्वैराज्योपप्लुते राष्ट्रे नवस्य नृपतेरभूत् । अभ्याहतं[1] यत्साचिव्यं तस्य सर्वाभिषङ्गभित् ॥३३३२॥
कालो बली व्यवहतेर्ननु तद्वशेन पूर्वापराचरणविस्मरणे न कस्य ।
शक्तिः क्षितेर्वहनकर्मणि योग्यतायां निर्दारणे[1] मुरजितस्तु वराहतायाम् ॥३३३३॥
नगराधिकृतो भूत्वा सुज्जेर्निर्वापिते पुरा । चिरप्ररूढां यो देशस्याव्यवस्थां न्यवारयत् ॥३३३४॥
भ्रष्टः क्रयेषु दीनारव्यवहारोव्यवस्थया । निगृह्य तं भ्रंशकार्ये निर्मितण्डः प्रवर्तितः[1] ॥३३३५॥
परिणीताङ्गनाशीलभ्रंशो गृहपतेरभूत् । दण्डप्रवृत्तिर्या तेन सा विचार्य निवारिता ॥३३३६॥
एकान्ततो हितो भूत्वा विशामेवं पुनर्व्यधात् । नगराधिक्रियां लब्ध्वा स एव परिपीडनम्[1] ॥३३३७॥
बद्धाभिर्नर्तकीभिश्च[1] परिणीत[2]गृहस्थितौ । संप्रयुक्तान्कथ्यमानान्हठेनादण्डयद्बहून् ॥३३३८॥

३३१६. 1)—1) Written by $A_3$ on new paper.—2) Emended with C; A ऐश्वर्यं क°. ३३१७. 1)—1) Written by $A_3$ on new paper.—2) Emended; A° स्थितम्. ३३१८. 1)—1) Written by $A_3$ on new paper.—2) Emended with C; A स्वला°; cf. viii. 248.—3) Emended with C; A पैतृव्य.—4) Emended with C; A —नृपः. ३३१९. 1) Emended with G (*sec. manu*); A ग्रामसा°. ३३२०. 1) Emended with C; A °वदनं.—2) Thus A, R; $A_3$ चन्दलाम्; C चन्द्रलाम्. ३३२१. 1) Emended with G (*sec. manu*); A पृष्टो नगरनिर्मोह (पृष्टो written by $A_3$); cf. viii. 1193, 1528. ३३२३. 1) Emended; A सौम्येन. ३३२६. 1) Emended; A धन्यो नान्यसा°. ३३२७. 1) Thus A; perhaps read नीत्वामुना°.—2) Emended with C; A आर्पिपामधु°. ३३२९. 1)—1) Written by $A_3$ on new paper. ३३३०. 1)—1) Written by $A_3$ on new paper. ३३३२. 1) Emended with C; A अभ्याहतं. ३३३३. 1) Emended with C (*sec. manu*); A निर्मारणे. ३३३५. 1) Doubtful emendation; A प्रवर्तत; C प्रवर्तित. ३३३७. 1) Emended; A पीडनम्. ३३३८. 1) Emended with C; $A^1$ बद्धाभि — —कीभिश्च.—2) Conjectural reading, A परि — तगृ°; C परिणीतगृ°.

किंचो---[1]लेशानां तुषाणामिव चिन्तनैः । अद्रोहालोभयोर्भूमिर्न तादृगपरोभवत् ॥३३३९॥

3340 भिक्षुमल्लार्जुनौ[1] कालानुवृत्त्या[2]श्रितवानपि । नासौ जहौ स्वामिहितं[4] न तौ ---[5] नावधीत् ॥३३४०॥

अक्षीणत्यागहीनस्य विभूतिसमयेप्यभूत् । संस्कारौपयिकं नास्य पर्याप्तं निधने धनम् ॥३३४१॥

कृतघ्नतायां राज्ञोन्यत्पर्याप्तं किमुदीर्यताम् । यो जीवित इवानीतान्संविभेजेनुजीविनः ॥३३४२॥

लोकान्तरातिथिं विज्जाभिधामुद्दिश्य वल्लभाम् । धन्यस्य विज्जनामाढ्य[1]विहारारम्भकारिणः ॥३३४३॥

परलोकं प्रयातस्य निर्माण[1]प्रतिपूरणम् । स्थितं व्यवस्थितेः कं च विनियोगं चकार सः ॥३३४४॥ युग्मम् ॥

3345 भूभृद्धार्मिकताख्यातकृतोत्सेकवासवैः । युवैकवृत्तिभिरपि प्रवृत्ते पुण्यकर्मणि ॥३३४५॥

विपक्षाणां सुभिक्षेण तुरुष्कविषया[1]श्रयात् । जन्मभूमेर्वृत्तये यैः क्रौर्यादन्यत्र शिक्षितम् ॥३३४६॥

येपि वृत्तिं विरोध्या[1]र्जिज्यये सुस्सलभूभुजि । कलहावसरेष्वेव[2] कश्मीरेषु प्रपेदिरे ॥३३४७॥

गोत्रे तेषां क्षत्रियाणां जातः कर्मलियानुजः । राजबीजी सङ्क्रियाख्यः प्रतिष्ठां[1] स्वाख्ययाकरोत् ॥३३४८॥

वितस्तापुलिने बाणलिङ्गे तेन निवेशिते । जायते स्वर्धुनीरोधःसंपर्कविमुक्तधीः ॥३३४९॥

3350 तदीयं च मठं चैव तपोधनविभूषितम् । दृष्ट्वा निवर्तते रुद्रलोकालोकनकौतुकम् ॥३३५०॥

लोठनेन्यप्रतिष्ठानामधन्यद्रविणार्पणे । न तेनायतने काले संरब्धं[1] शुद्धबुद्धिना ॥३३५१॥

उदयस्य प्रिया चिन्ताभिधाना कम्पनापतेः । पुलिनोर्वीं वितस्ताया विहारेण व्यभूषयत् ॥३३५२॥

प्रासादपञ्चकव्याजात्तद्विहारस्थितः करः । उदस्त इव धर्मेण प्रोत्तुङ्गाङ्गुलिपञ्चकः ॥३३५३॥

सांधिविग्रहिको मङ्खाख्योलंकारसोदरः । समठस्याभवद्यष्टः श्रीकण्ठस्य प्रतिष्ठया ॥३३५४॥

3355 मठाग्रहारदेवौकोजीर्णोद्धारादिकर्मभिः । अनुजः[1] सुमना नाम रिल्हणस्यासदत्तुलाम् ॥३३५५॥

भूतेश्वरे मठं कृत्वा त्रिग्राम्यामप्यपाययत्[1] । तोयं कनकवाहिन्या वितस्तायाश्च यः पितॄन् ॥३३५६॥

प्रदेशे[1] कश्यपागाराभिधाने नीलभूः सरित् । जीगीषयेव जाह्नव्या यत्र पूर्वां दिशं गता[2] ॥३३५७॥

उत्ताराय गवादीनां यः सेतुं तत्र बन्धयन् । निर्ममे निर्मलं कर्म संसारोत्तरणक्षमम् ॥३३५८॥

नगरेपि स्वनामाङ्कवृषाङ्कागारकारिणा । मठो येन कृतोभ्रष्टजटाधरघटाश्रयः ॥३३५९॥

3360 मम्मेश्वरं स सौवर्णामलसारं[1] चकार यः । सोमतीर्थं तथा तोयोद्यानादुद्द्योतितान्तिकम्[2] ॥३३६०॥

अत्र क्षमाभुजो[1] वंशे वंशौघस्य धनादिषु । सासूयत्वाद्यमास्यानां धनप्राणादिहारिणः ॥३३६१॥

कुध्यन्नवासनाध्यासासूयया वासवोपि वा । प्राभ्रंशयद्दिवो देवो[1] मान्धातारं धराभुजम् ॥३३६२॥

अविप्लुतमतिर्भृत्यान्कृत्यौघस्य व्रतोन्वहम् । दृष्ट्वा ध्यातस्वमाहात्म्यवृद्धिस्तु प्रीयते नृपः ॥३३६३॥

कलशक्ष्मापतेः[1] प्राशोपशं[2] भृत्योस्य रिल्हणः । कुर्वन्स्वर्णातपत्राणां प्रतिष्ठां प्रीतिकार्यभूत् ॥३३६४॥

---

३३३९. [1]) Thus A: C वो भवेह्लेखानां. ३३४०. [1]) Thus R C; A₅ भिक्षमल्ला°.—[2]) —[3]) Written by A₅ on new paper.—[3]) Thus A₅; C °वृत्त्या भुत°.—[4]) Emended; A स्वामिहत.—[5]) Thus A; C supplements तावपि. ३३४३. [1]) Doubtful emendation; A °मामाढ्य°. ३३४४. [1]) Emended with G (sec. manu); A निर्वाण.° ३३४६. [1]) Emended with C; A तुरुष्कामिषया°. ३३४७. [1])—[3]) Written by A₅ on new paper. ३३४८. [1])—[1]) Written by A₅ on new paper. ३३५१. [1]) Emended; A संरब्धे. ३३५५. [1]) Emended; A अनुजा. ३३५६. [1]) Emended; A त्रिग्राम्यामप्यपातयत्; cf. ग्रामेण सिन्धुत्रिग्राम्या वितस्ता दक्षिणेन तु v. 97. ३३५७. [1]) Emended; A प्रदेश.—[2]) These two *pádas* and the following three verses are written by A₅ on new paper. ३३६०. [1]) Emended with C; A₅ R °मलसारं.—[2]) Emended; A₅ R °यानादुद्योति°. ३३६१. [1]) Doubtful emendation; A क्ष्माभुजुजो.—[2]) Emended; A °स्वमामास्यानां.—[4]) Emended; °विहारिण:. ३३६२. [1]) Emended with C; A देवौ. ३३६४. [1]) Thus corr. by A₁ from °पतिः.—[2]) Thus A; cf. vii. 528 ffg.

स्वर्णपत्त्रं[1] सुरेश्वर्यां शिवयोः समवेतयोः । सदीपाराधिकामत्रमैत्रीमेति सघण्टिकम् ॥३३६५॥ 3365

बन्धोर्हिमाद्रेर्देयितः सुताजामातरौ शिवौ । स्वर्णच्छत्रच्छलान्मेरुर्मूर्ध्याप्रातुमुपागतः ॥३३६६॥

उद्दिश्य यद्विदधदुत्तममास्मयोनिर्दग्धो मयाङ्कघटनं दयितेन गौर्याः ।

सिद्धं तदत्र ---[1]मुमयेति हेमच्छत्रच्छलाङ्कुरदशावलितोग्निकूर्चम् ॥३३६७॥

छत्रं तत्र च रिल्हणेन विहितं रौक्मं महद्रुक्मिणीमेयोमन्दिरमूर्ध्नि नष्टमधुनादर्भं परिभ्राजते ।

क्षैम्येन क्षतजावपानजनुषा नष्टं ततः स्वामिना प्राप्तं चक्रमवेक्षितुं स्वरुचिरं भास्वानिवाभ्यागतः ॥३३६८॥

तीर्थे मन्मथजित्खगध्वजरङ्गाजयोर्जितावार्यके साधाराभरणं क्रियापरिणति स्वर्णातपत्रं प्रभोः ।

भात्येकस्य शिखाहिफूत्कृतिवलद्गङ्गाम्बुरेणूपगं केशान्तस्थितमेघपार्श्वगतडित्पिण्डाभमन्यस्य च ॥३३६९॥

सौवर्णद्रुहिणाण्डकर्परपुरे संसूत्रिता छत्रकव्याकोशस्य समुद्गकप्रतिकृती दीर्घार्चित[1] घने ।

सङ्गेनेन्दुकिरीटकैटभरिपुद्यामासितालंक्रिया सद्गकाकरयोः पिधानकरणिं स्वर्णातपत्रं गतम् ॥३३७०॥ 3370

तं लोहरमहीपालमन्वजायन्त भूभुजः । रत्नादेव्या गुणोदाराश्चत्वारश्चतुरा[1]ः सुताः ॥३३७१॥

गुल्हणेनापरादित्यो राघवेणेव लक्ष्मणः । अभिन्नभावः संवृद्धिं वर्तते लोहरे भयन् ॥३३७२॥

ललितादित्यदेवेन[1] जयापीडो हि दारकः । भरतेनेव शत्रुघ्नः पाल्यमान[2]ः प्रवर्तते ॥३३७३॥

पार्थिवाहस्करावारुनमस्काराद्यशस्करः । पञ्चमः[1] क्षितिभृद्धर्म्यो बालातप इवोदितः ॥३३७४॥

चपलैः शैशवाच्छन्दानुभावस्वात्ससौष्ठवैः । लङ्घितैर्ललितादित्यो भित्तीरप्यार्द्रयत्यहो ॥३३७५॥ 3375

दत्तरक्षाञ्जनं नाशाधरं गौरं तदाननम् । सबालातपभृङ्गाङ्क[1]स्वर्णपङ्केरुहायते ॥३३७६॥

आलापास्तस्य माहात्म्यगर्भा बाल्यास्फुटा[1] अपि । अमृतार्द्रा इवोद्गारा मथ्यमानस्य वारिधेः ॥३३७७॥

महाभिजनसंजातो राजसूनुः स शैशवे । अभिधत्सेनुभावेन भव्येनागामि जृम्भितम् ॥३३७८॥

अत्यक्तमण्डनशिखण्डिशिखोपि तोयस्पर्शासहाञ्चितकलापिकलापभङ्ग्या ।

वापीं निपीतसलिलो वलितं प्रयाति चेष्टोक्तभावमहिमा वरवर्णिभावः ॥३३७९॥

चतस्रो मेनिला[1] राजलक्ष्मीः पद्मश्रिया समम् । संजाता[2]ः कमला चास्य कन्याः सत्कृत्यवृत्तयः ॥३३८०॥ 3380

विनोदलीलोद्यानैस्तैर्नित्यकान्तैरपत्यकैः । विद्योतेते[1]नवश्री तौ प्रावृट्पुष्पाकराविव ॥३३८१॥

तीर्थायतनपूतेस्मिन्मण्डलेखण्डितैश्वर्यैः । रत्नादेव्या एव याता भाग्यभावं विभूतयः ॥३३८२॥

कृतानुयात्रा सा दैवयात्रासु[1] क्षितिपाङ्गना । [2]राजलक्ष्मीरिवाभाति राजसामन्तमन्त्रिभिः ॥३३८३॥

सतीदेशे तीर्थसार्थास्त्यजन्त्यस्या निमज्जने । स्नानासक्तसतीमूर्तिस्पर्शनौत्सुक्यमञ्जसा ॥३३८४॥

चित्रे कालेश्च यात्रासु द्रष्टुं नृपचमूत्तरैः सदा । यत्प्रावृडिव --[1]र्यं जीमूतैरनुगम्यते ॥३३८५॥ 3385

---

३३६५. [1]) Emended; A °पत्त्रां. ३३६७. [1]) Thus A; C करुणानुमवेति°.—[2]) The last *páda* and the following verse written by $A_3$. ३३६८. [1]) Emended with C; $A_5$ R चक्रमिवे°. ३३६९. [1]) Thus A; C °पमं. ३३७०. [1]) Thus A; C °विस्तार्चे घने. ३३७१. [1]) Emended with C; A °श्चतुरस्सुताः. ३३७३. [1]) Emended with C; A ललितालित्य°.—[2]) Emended with C; A पाल्यमानः. ३३७४. [1]) The last two *pádas* and the following verse written by $A_5$ on new paper. ३३७६. [1]) Emended with C; A °भृङ्गाङ्कास्वर्ण°. ३३७७. [1]) Emended; A बाल्यास्फुटा. ३३८०. [1]) Emended with C; A मेनिला; cf. viii. 3394, 3397. —[2]) Emended; A संजाता. ३३८१. [1]) Doubtful emendation; A विद्योतमानवश्री; C द्योतितावनवश्री. ३३८३. [1]) Emended with C: A यात्रास्वपि?.—[2]) These two *pádas* and the first *páda* of the following verse are written by $A_6$ on new paper. ३३८५. [1]) Thus A; C supplements सेवेयं.

सा पार्थिवेषु तीर्थेषु स्नानाय प्रस्थिता[1] ध्रुवम् । त्रिंश्यैर्वर्षमिषात्तीर्थैः प्राह्रयेत तदीर्ष्यया ||३३८६||
अभ्रंलिहांश्च गिरींश्च कूलंकषा नदीः । मृद्नन्ती दुर्गमा मार्गे तीर्थौत्सुक्येन वेल्लती ||३३८७||
स्रवन्तीभिः प्रतिष्ठाभिर्जीर्णोद्धारैश्च धीरया । तया चित्रं चतुरया पङ्गुर्दिष्टा विलङ्घिता ||३३८८||
अद्यापि विस्फारक्षीरार्णवकान्तिच्छटाच्छलात् । यो भातीव सुधासूतिसितश्वेताश्मनिर्गतः ||३३८९||
3390 उपमन्योरुदन्याया दारिद्र्योपद्रवापहः । रुद्रो रुद्रेश्वरो नाम्ना श्रीमान्कश्मीरभूषणम् ||३३९०||
जगत्सौन्दर्यसारं स सत्स्वर्णामलसारकः । शान्तावसादमासादोद्धारश्च विहितस्तया ||३३९१||
सत्त्वानामिव भृत्यानां कोपैर्विकृते नृपे । उदन्वतीव शरणं[1] सिन्धुर्हैमवतीव सा[2] ||३३९२||
स्थिरप्रसादे भूपाले निग्रहानुग्रही क्षणात् । भूभुजामपि संवृत्ताविच्छिन्नौ तदिच्छया ||३३९३||
सोमपालात्मजो भूभृद्भूपालः प्रापितस्तया । मानिन्या मेनिलादेव्या विवाहेन महार्हताम् ||३३९४||
उत्पत्तिभूमि[1]स्थलमानुभवो न भूम्ना कस्याप्यहो व्यभिचरत्यनुभावभावः ।
3395 तेजस्तमोविलुठनव्रतमुष्णभानोश्छेदं तदुत्थमकरोत्तमसोपि चक्रम् ||३३९५||
भुवनाद्भुतसाम्राज्यमार्जने[1] भूभुजाभवत् । प्रातिभाव्यं दृढं रत्नाक्रान्तसन्मण्डलावनिः ||३३९६||
ऊढायां मेनिलादेव्यां परिणेतुरभूदपि । पिता वैमत्यमुत्सृज्य निर्व्याजं राज्यदायकः ||३३९७||
राज्ञः प्राजिधरस्याजौ नरसा भूभुजोनुजः । वैरिभिर्निहतस्यामे वैरसंशोधनोद्यतः ||३३९८||
राज्ञां शरणमेत्योग्रमानोल्कंटघो घटोत्कचः।भेजे राज्यश्रियं प्राप्य चित्रं राज्यश्रियं पराम्||३३९९||कुलकम्||
3400 कृतसाहायकोमात्ये राज्ञः समज्जिमद्भदम् । राज्यात्प्राभ्रंशयद्धानृद्धं[1] पञ्चवटं[2] नृपम् ||३४००||
अलङ्घ्यतत्प्रभावात्स्फारदानाम्बुनिर्भरात् । सरितं खड्गवर्ती च कृष्णां विद्वेविगोचराम् ||३४०१||
द्वितीयस्योरशाभर्तुरकीर्तिं निर्जयासृजत् । देवप्रभावायोधाममत्युग्रपुरमग्रहीन् ||३४०२||
शीतोष्णवारणशशियोतकल्लोलितास्ततः । बहवो वाहिनीनाथाः प्रथामित्थं प्रपेदिरे ||३४०३||
समाहार्विंशती राज्यावाप्तेः प्राग्भुजो गता । तावत्येवाप्रराज्यस्य पञ्चविंशतिवत्सरे ||३४०४||
3405 इयद्दृष्टमनन्यत्र प्रजापुण्यैर्महीभुजः । परिपाकमनोज्ञत्वं स्थेयाः कल्पातिगाः समाः ||३४०५||
अम्भोपि प्रवहत्स्वभावमशनैराहयानमप्रमायते प्रावाम्भः श्रवति द्रवत्त्वमुदितोद्रेकेषु चाबेयुषः ।
कालस्यास्खलितप्रभावरभसं भाति प्रभुत्वेद्भुते कस्यामुत्र विधातृशक्तिघटिते मार्गे निसर्गः स्थिरः||३४०६||
प्रयाते ह्यधिकेप्यर्धसमाषट्कशते कलेः । कश्मीरेष्वास्त गोनन्दः पार्थानां सेवया नृपः ||३४०७||
सूनुर्दामोदरोस्या[1]य तस्य पत्नी यशोमती[2] । गोनन्दोन्यस्तत्सुतोपि ततोतीत्य महीपतीन्[3] ||३४०८||
पञ्चत्रिंशतमज्ञातानृपहाभिजनाभिधाम् । राजाभवल्लवो[1]*नाम सूनुस्तस्य कुशस्ततः ||३४०९||

---

३३८६. [1]) Emended; A प्रस्थितं. ३३९२. [1]) Emended with C; A सरण.—[2]) The last *páda* and the following two verses written by $A_5$ on new paper. ३३९३. [1]) Emended; $A_5$ B C °विच्छन्नस्तावि°. ३३९५. [1]) Emended with C; A उत्पत्तिर्भू°. ३३९६. [1]) Emended; A °मार्जनो. ३३९९. [1]) Emended; A °स्योत्रं मानोत्क°. ३४००. [1]) Emended; A राज्य प्र°.—[2]) Doubtful emendation, A °वटो. ३४०१. [1]) The last *páda* and the following verse written by $A_5$ on new paper. ३४०२. [1]) Doubtful emendation of G (*sec. manu*); A °कीर्तिनिज°. ३४०४. [1]) Emended with C; A °विंशतु व°. ३४०६. [1]) Emended with C; A प्रावोम्भः. ३४०८ [1]) Emended with C; A दामोदरस्याथ.—[2]) Comp. यशोवती i. 70.—[3]) Emended with C; A °पती. ३४०९. [1]) Emended with C; A राजा वल्लभको; cf. अथाभवल्लवो नाम i. 84.

द्वौ खगेन्द्रसुरेन्द्राख्यौ पुत्रपौत्रावमुष्य तु । गोधरोयान्यकुलजः सुवर्णाख्यस्तदात्मजः ॥३४१०॥ 3410

तज्जन्मा जनकोप्यासीत्सूनुः शच्याः शचीनरः । अथाशोकोभवद्भूप्राशोस्य प्रपितृव्यजः ॥३४११॥

तज्जो जलौकाः संदिग्धवंशो[1] दामोदरस्ततः । तुल्यं त्रयोथ हुष्काद्यास्तुरुष्काभिजनोद्भवाः ॥३४१२॥

अभिमन्युस्तृतीयोथ गोनन्दोस्य विभीषणः । राजेन्द्रजिद्रावणश्च --षः क्रमशोभवत् ॥३४१३॥

अन्यो विभीषणः[1] सिद्ध उत्पलाक्षश्च[2] तदनु । पश्चात्ततो हिरण्याक्षहिरण्यकुलयोरभूत्[4] ॥३४१४॥

राजा वसुकुलस्तस्य सूनुः ख्यातस्त्रिकोटिहा[1] । क्षितिनन्दो वकात्तज्जाद्वसुनन्दस्तदात्मजः[2] ॥३४१५॥ 3415

नरोन्योक्षस्ततस्तस्माद्गोप्ता गोकर्णको नृपात् । तस्मान्नरेन्द्रादित्योभूत्सूनुरन्धयुधिष्ठिरः ॥३४१६॥

तस्य प्राभ्रंशितो भृत्यैरन्याभिजनसंभवः । भूपः प्रतापादित्योभूज्जलौकोपि तदात्मजः ॥३४१७॥

तुञ्जीने[1] निःसुते तज्जे विजयोन्यकुलोद्भवः । जयेन्द्रेस्य सुतेपुत्रे[2] सचिवः संधिमानभूत् ॥३४१८॥

युधिष्ठिरस्य पौत्रेण भूपादित्यात्मजन्मना । श्रीमेघवाहनेनाथ[1] गोनन्दे[2]भ्युदितं कुले[3] ॥३४१९॥

.......................... । ............................ ॥

ततः प्रवरसेनोन्यस्तोरमाणात्मजः[1] क्षितिम् । लेभे हिरण्यभ्रातृव्यस्तस्य पुत्रो युधिष्ठिरः[2] ॥३४२०॥ 3420

ततो नरेन्द्रादित्यश्च रणादित्यश्च भूपतिः । क्रमादभूतां तत्पुत्रो विक्रमादित्यभूपतिः[1] ॥३४२१॥

बालादित्यश्चोदभवद्[1]रणादित्यस्य[2] नन्दनः । बालादित्यस्य जामाता ततो दुर्लभवर्धनः ॥३४२२॥

सूनुर्दुर्लभकस्तस्य चन्द्रापीडोभवत्ततः । तारापीडोनुजन्मा च मुक्तापीडोस्य[1] चानुजः ॥३४२३॥

भूपावास्तां कुवलयापीडो वैमातुरोस्य च । वज्रादित्यः सुतो राज्ञो मुक्तापीडस्य तत्सुतौ ॥३४२४॥

पृथिव्यापीडसंग्रामापीडावनु नृपोभवत् । जयापीडोस्य मन्त्री च जज्जः[1] पुत्रावपि क्रमात् ॥३४२५॥ 3425

ललितापीडसंग्रामापीडौ[1] ज्येष्ठात्मजस्ततः । श्रीचिप्पटजयापीडः कल्यपाल्युद्भवोभवत् ॥३४२६॥

अभिचारेण तं हत्वा सांमत्योदितरेतरम् । उत्पलाद्यैरसंप्रासराज्यैस्तन्मातुलैः[1] कृतः ॥३४२७॥

भ्रातुः पुत्रोजितापीडो जयापीडस्य तत्पदे । अनङ्गापीडनामा च संग्रामापीडजस्ततः ॥३४२८॥

तमुत्पाट्योत्पलापीडोस्याजितापीडनन्दनः । अवन्तिवर्मा शूरेण[1] तं निवार्याथ मन्त्रिणा ॥३४२९॥

---

३४१०. [1]) The last three *pádas* and the following verse are no longer found in A as the upper portion of fol. 327 has broken off; the text is given from R G.—[2]) Emended with C; R G (*prima manu*) सुवर्णाकृत्सता°; cf. i. 97. ३४१२. [1]) Emended; R C °वंशो; the upper strokes of the letters are not legible in A. ३४१३. [1]) Thus A; C पितापुत्रौ क्रमान्नृपौ. ३४१४. [1]) Here the name of NARA is omitted.—[2]) Emended; A उत्पलाक्षश्च.—[3]) Thus A; doubtful.—[4]) Emended; A हिरण्याक्षोहिरण्यकुलयोर°. ३४१५. [1]) C inserts here two *pádas* श्रीमिहिरकुलो राजा वकाख्यस्तदनन्तरं.—[2]) Emended; A क्षितिनन्दो वकात्मजावसु°. ३४१८. [1]) Emended; A तुञ्जने; cf. ii. 11.—[2]) Emended; A जयेन्द्रस्य- -पुत्रे; C जयेन्द्रस्त-त्सुतोऽपुत्र:. ३४१९. [1]) Thus A; but compare ii. 145 ffg.—[2]) Emended with C; A गोनन्दाभ्युदितं.—[3]) After this verse C inserts the following: ततः प्रवरसेनोभूद्भूपः काश्मीरमण्डले ॥ तत्सूनुश्च हिरण्योऽभूत् पालयन् क्षितिमण्डलं । मातृगुप्तोऽभवद्राजा ततस्तेन शकारिणा ॥. One verse containing the names of PRAVARASENA I., HIRANYA and MÁTRIGUPTA appears to have been omitted here by A. ३४२०. [1]) The remaining portion of this verse, the following verse and the first *páda* of verse 3422 are no longer found in A, as the upper portion of fol. 327 has broken off; the text is given from R G.—[2]) Thus C; R पुत्रो --ष्ठिरात्, corr. *sec. manu* as above; G पुत्राद्युधिष्ठिरात्. ३४२१. [1]) Thus C R; G तत्पुत्र विक्रमादित्य वर्षीण्. ३४२२. [1]) Thus C R; G °स्यश्चोदभवद्रणा°.—[2]) Emended with R G; A °दित्यस्य वै°. ३४२३. [1]) Thus C; R G °पीडस्य; in A three *aksharas* after मुक्ता have become illegible. ३४२५. [1]) Emended with C; A जज्जपुत्रावपि. ३४२६. [1]) Emended with C; A °पीडज्येष्ठा.° ३४२७. [1]) Emended with C; A तन्मात्या°. ३४२९. [1]) Here ends the text of A at the foot of fol. 327 *rev.*, the last leaf of the MS. being lost. The text of the remaining verses is given from R G.

3430 मनोत्पलस्य विदधे साम्राज्ये सुखवर्मजः । शूरः शंकरवर्मा स गोपालस्तस्य चात्मजः[1] ॥३४३०॥
रथ्यागृहीतः प्राभूच्च तद्भ्राता संकटाभिधः । सुगन्धाख्या तयोर्माता तां विनाश्याथ[1] भूभुजम् ॥३४३१॥
शूरवर्मप्रणमारं पार्थं तन्त्रिपदातयः । चक्रुर्निर्जितवर्माणं ततस्तस्य[1] च तत्क्रमात् ॥३४३२॥
चक्रवर्मा शूरवर्मा चेति निर्जितवर्मजः । [1]विहिता बहुशो राज्ये तस्तम्भे[2] शंभुवर्धनः ॥३४३३॥
तदन्तरे लब्धराज्ये मन्त्री व्यापाद्य तं नृपम् । चक्रवर्मण्यतीतेथ पापी पार्थात्मजः क्रमात् ॥३४३४॥
3435 उन्मत्तावन्तिवर्मासीत्तत्सुते शूरवर्मणि । राज्याकृष्टे द्विजैश्चक्रे राज्ये मन्त्री यशस्करः ॥३४३५॥
प्रपितृव्यात्मजस्तस्य वर्णटस्तनयोनु तम् । राज्ये वक्राङ्किसंग्रामस्तस्यौ निष्पाट्य तं ततः ॥३४३६॥
अमात्यः पर्वगुप्ताख्यो राज्यं द्रोहेण लब्धवान् । क्षेमगुप्तः सुतोस्यासीदभिमन्युस्तदात्मजे ॥३४३७॥
शान्ते मात्रा पाल्यमाने नन्दिगुप्ते च तत्सुते । ततस्त्रिभुवने भीमगुप्ते च क्रूरचेष्टया ॥३४३८॥
पौत्रे तथैव निहते[1] स्वयं दिद्दाख्यया कृतम् । राज्यं[2] संग्रामराजोपि भ्रातृव्योन्ते नृपः कृतः ॥३४३९॥
3440 हरिराजानन्तदेवावास्तां तस्यात्मजौ ततः । कलशोनन्ततनयः क्रमाद्भूपौ तदात्मजौ ॥३४४०॥
उभावुत्कर्षहर्षाख्यावपि निष्पाट्य भूपतिम् । हर्षदेवं तमुद्दामविक्रमोनन्यवंशजः ॥३४४१॥
भ्रातुः पुत्रस्य दिद्दाया जस्सराजस्य नप्तृतः । मल्लाभिधानादुद्भूतो भूपतामुच्चलोभजत् ॥३४४२॥
द्रोहेण तं हतवतां भृत्यानामग्रतस्ततः । शङ्खराजान्यनामाभूद्रड्डाख्यः क्षणिको नृपः ॥३४४३॥
गर्गेण निहते तस्मिन्सल्हो[1] द्वैमातुरोप्यभूत् । तस्योच्चलमहीभर्तुर्भ्राता निर्बध्य तं बली ॥३४४४॥
3445 सुस्सलाख्योमहीद्राज्यं माल्हिरुच्चलसोदरः । निरस्तैः पाटिते तस्मिन्राज्याङ्कुरवैर्नृपः कृतः ॥३४४५॥
षण्मासान्हर्षभूभर्तुर्नप्ता भिक्षाचराभिधः । पुनर्निर्वास्य तं प्राप्तराज्ये सुस्सलभूभृति ॥३४४६॥
क्रमाल्लवन्यैर्विश्वस्तैर्राज्योद्वेजिते हते । लवन्यान्निखिलांस्तं च[1] हत्वा भिक्षाचरं नृपम् ॥३४४७॥
सुतः सुस्सलभूभर्तुः संप्रत्यप्रतिमक्षमः । नन्दयन्मेदिनीमास्ते जयसिंहो महीपतिः ॥३४४८॥
गोदावरी सरिदिवोत्पुमुलैस्तरङ्गैर्वक्त्रैः स्फुटं सपदि सप्तभिरापतन्ती ।
श्रीकान्तिराजविपुलाभिजनाब्धिमध्यं विश्रान्तये विशति राजतरङ्गिणीयम् ॥३४४९॥

[1] इति श्रीमहाकविश्रीकल्हणकृतायां राजतरङ्गिण्यामष्टमस्तरङ्गः[1] ॥

समाप्तेयं राजतरङ्गिणी

कृतिः श्रीमहामात्यचण्पकप्रभुसूनोर्महाकवेः कल्हणस्य ॥

---

३४३०. [1]) The last two *pádas* are found in the above form in C; in R G they are added *sec. manu*, being probably copied from C. ३४३१. [1]) Emended with C; R G निनाश्य°. ३४३२. [1]) Thus R G; cf. v. 287 ffg.; C ततः पार्थस्ततः क्रमात्. ३४३३. [1]) These two *pádas* and the first half of the following verse are omitted in C.—[2]) Thus R; G --म्भे. ३४३७. [1]) Thus C R (*sec. manu*); G R (*prima manu*) सोमगुप्त॰. ३४३९. [1]) Emended; R G C निहिते.—[2]) Emended; R G राज्ये; C कृते । राज्ये. ३४४४. [1]) Emended; R G C मल्हो; R (*sec. manu*) सल्हो. ३४४७. [1]) Thus R; G °लांस्ते च; C °लांस्ताँश्च. ३४४९. [1]) Emended; R G C श्रीकान्त°; comp. vii. 1285. *Colophon.* [1])—[1]) This part of the Colophon is not found in G.

## CORRIGENDA AND ADDENDA.

Canto. Verse.

१. ५०. *For* स्कन्धावारं *read* स्कन्धावारं, *adding note:* [1]) Emended ; A स्कन्धावारं.

१. १०१.[1]) *For* $A_2$ भूम्योन्मरी *read* $A_1$ भूम्योन्मरी.

१. ११७. *For* स्वाद्युभीकव्य° *read* स्वाद्यु भीकव्य°.

२. १. *For* ललनाद्यु° *read* ललनाद्यु°

२. ४४. *For* वीतमानाय *read* वीतमानाय.

२. ११५. *For* संवाहिनिभिरिखला *read* संवाहि निखिला°.

२. १००. *For* जरठ° *read* जरठ°[1], *adding note:* [1]) A जरठ°.

३. १०१. *To* पुरुषाधम: *add note:* Subhâshitâvali, 361, reads पुरुषोधम:.

३. ४०२. *To* निरधाश्चिर्य *add note:* Subhâshitâvali, 579, reads निरधाश्चिर्य

*To* अगतहिम्मां° *add note:* Subhâshitâvali, 579, reads अगतां तिम्मां°.

४. १२५. *For* वीथं *read* वी थं.

*To* परापकारणाय *add note:* Subhâshitâvali, 3133, reads अपापकारणाय.

४. १४८. *For* अधिशअयंस्तं *read* अधिशिभिधंस्तं.

४. २१४. *To* °भ्कालेलिवाली° *add note:* Subhâshitâvali, 3028, reads °भ्कालेपि वाली°.

४. ४९८[2]) *For* $A_2$ वेत, $A_1$ वेहो *read* $A_2$ वेहो, $A_1$ वेत.

४. ७१२. *For* °गुणम्भव *read* °गुणम्भव[1], *adding note:* [1]) Emended ; A°गुणम्भव.

५. ११५. *For* सत्कर्मजम्मसु *read* सत्कर्म जम्मसु.

५. ११६. *For* वर्षे एकोनषष्ठे *read* वर्षे एकोनषष्टे.

५. १३२. *For* °शिम्भवन् *read* °शिम्भिवन्.

५. १४९. *For* °भूभुज् *read* °भूभुज:.

५. २२५.[1]) *For* वराहमल° *read* वरहमूल

५. २३३. *To* कमलुकाभिधान् *add note:* Comp. the name of the Shâhiya King *Kamalû*, Albérûnî's *Indica* (transl. by Sachau) ii. 13.

५. २६०. *For* °पहका *read* °पारका.

५. २९५. *For* स्वभुतान्नि° *read* स्वभुस्तान्नि°.

५. ३०५. *For* भीरुक° *read* भीरुक°.

६. ५८. *For* समर्पयन् *read* समार्पयन्[1], *adding note:* [1]) Emended ; A समर्पयन्.

६. १४५. *For* सहल *read* सहलम्.

६. १४९. *For* काश्मीरिकावल° *read* काश्मीरकवल°.

७. ११७. *For* स्वल्पानुगोभवन् *read* स्वल्पानुगो भवन्.

७. ४११. *For* °स्कन्धानां[1] *read* °स्कन्धानां[1], *adding note:* [1]) Emended ; A °स्कन्धानां.

७. ५१०. *For* वैरमविभवन् *read* वैरमाविभिवन्.

७. ५८७. *For* °किमपट्टैको° *read* °किमपट्टैको°.

७. ५८८. *To* कीर्तिम्बकवपुरा° *add note:* [1]) Thus A ; perhaps read कीर्तिर्वकवपुरा° ; comp. viii. 538.

७. ६१०. *For* काहवाद° *read* काहवाद°.

७. ६९२. *For* °व्यसकीर्ण *read* °व्यासंकीर्ण.

७. ६०१.[1]) *For* A प्रत्यास्ने *read* $A_1$ प्रत्यास्ने.

७. ७११. *For* पक्षमविभवन् *read* पक्षमविभिवन्.

७. ८०४. *To* स्वाशिरस: *add note:* Subhâshitâvali, 3132, reads निजाशिर:,

*To* हिक्का हवेव *add note:* Subhâshitâvali, 3132, reads हेक्का: सेव.

७. ८४९. *For* जरठ: *read* जरठ:[1], *adding note:* [1]) A जरठ:.

७. ८८९. *For* कोपाक्कुले *read* कोपाक्कूले

७. ८९९. *For* दुद्दु° *read* दुद्दु°.

७. ९५०. *For* विरलाद्यु° *read* विरलोद्यु°.

७. ९७९. *For* काश्मीरिकाणां[1] *read* काश्मीरकाणां, *omitting note.*

७. १००८. *For* काश्मीरिकाणां[1] *read* काश्मीरकाणां, *omitting note.*

७. १०११. *For* दुद्दु° *read* दुद्दु°.

७. ११११. *For* संप्रत्यग्रुज्जिन्मत: *read* संप्रत्यग्रुज्जिन्मत:.

७. ११८९. *For* काश्मीरिका[1]: *read* काश्मीरका:, *omitting note.*

७. ११८९. *For* स्कन्धावारे *read* स्कन्धावारे[1], *adding note:* [1]) Emended ; A स्कन्धावारे.

# CORRIGENDA AND ADDENDA.

Canto. Verse.

७. १४६७. *For* मन्नज्ञातीव° *read* मन्नज्ञातेव°[1], *adding note:* 1) Emended; A °ज्ञातीव°.

७. १६६८. *For* सर्वर्वांनु लोपिचय् *read* सर्वर्वांनुपलोपिचय्.

७. १६६६. *For* भूतिनिभा° *read* भूतनिभा°.

८. १६४. *For* °स्कन्धावारेषु *read* °स्कन्धावारेषु[1], *adding note:* 1) Emended; A° स्कन्धा°.

८. ४८९. *For* वेषारी *read* वेषारी[1], *adding note:* 1) Emended; A वेषारी.

८. ६७७. *For* हन्म *read* हर्म्यं.

८. ७४५. *For* तैर्जवी नीचिना° *read* तैर्जवीनोचि वा°.

८. ८८७. *For* काश्मीरिक°[1] *read* काश्मीरक°, *omitting note.*

*For* °पायक: *read* °पायक:.

८. ९०३. *For* °तालाशीचाय° *read* °तालाविचाय°

८.९२२.९२३. *For* काश्मीरिका°[1] *read* काश्मीरका°, *omitting note.*

८. १००८. *For* °कान्तगुजरे *read* °कन्तगुजरे.

८. १०५५. *For* स्कन्धावारं *read* स्कन्धावारं[1], *adding note:* 1) Emended; A स्कन्धावारं.

Canto. Verse.

८. १०८४. *For* °भिक्षुकास्थान *read* °भिक्षुकास्थान°.

८. ११४८. *For* काश्मीरके[1] *read* काश्मीरिके, *omitting note.*

८. ११२८. *For* राजात्मजजनात् *read* राजात्मजजनात्.

८. १२४५ *For* भिक्षुमना: *read* भिक्षुमनी:.

८. २०१८. *For* ज्योतीरसा° *read* ज्योती रसा°.

८. २०४२. *For* °स्तोष्टेश्वरी *read* °स्तोष्टेश्वरी.

८. २२११. *For* संस्तम्भेन°[1] *read* संस्तम्भेन°, *omitting note.*

८. २७४८.1). *For* PRITHVÎHARI'S *read* PRITHVÎHARA'S.

८. २७६७. *For* काश्मीरिका:[1] *read* काश्मीरिका:, *omitting note.*

८. ३०११.1). *For* सारसा *read* सातासा.

८. ३१७३. *For* °स्संस्तम्भ[1] *read* °स्संस्तम्भ, *omitting note*

८. ३१८१. *For* इस्तुवंशा° *read* इस्तुवंशा°.

---

*N.B.—Some letters, especially* ेे *and* ि, *have occasionally broken in the printing.*